श्रीगणेशाय नमः ।

# मुहूर्तचिन्तामणिः ।

श्रीरामदैवज्ञविरचितः ।

श्रीगोविन्दज्योतिर्विद्विरचितया पीयूषधारा-
व्याख्यया समेतः ।

खेमराज श्रीकृष्णदास,

अध्यक्ष-"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,

बम्बई.

संवत् १९९०, शके १८५५.

# विज्ञापना।

इदानीं भूमण्डलालङ्कारे भारतखण्डे धर्मानुष्ठाननिष्ठागरिष्ठतपोविशेषैः सकलवेदशास्त्रादिपारंगमैः सकलमहर्षिवर्यैः संस्थापितधर्मप्रचारसरणिं समनुवर्तमानाः सर्वे आस्तिका द्विजास्तदन्ये च जनाः शुभोदर्कफलप्राप्तिसाधनयावच्छुभकर्माचरणेन स्वस्वाभीष्टसुखं समधिगच्छन्ति। तदितरे च पापोदर्काशुभफलप्राप्तिसाधनयावदशुभकर्माचरणेन दुःखपरम्परामनुभूयानुभूय परिभूयन्त इति सर्वत्र प्रसिद्धम्।

तत्तन्महर्षिस्थापितधर्मप्रचारसरणिषु प्रविष्टानां सतां तत्तत्कर्मणामनुष्ठानं विहितकालकृतमेवोक्तफलजनकं नान्यथा।

स च कालः सूर्यचन्द्रादितेजोवृन्दसंयोगविशेषसाक्षात्कारेणैव। सच साक्षात्कारः तन्नियामकवेदाङ्गज्योतिःशास्त्रेणैव सरहस्येन। तच्च शास्त्रं देशकालाद्यपेक्षया तदाtदाकालमहिम्ना लोकानां तत्राप्यास्तिकानां तत्राप्यातितरं द्विजानां विविधबहुतरविघ्नक्लेशादिपराहतत्वात्तेषामध्ययनाध्यापनपरम्पराविच्छेदेन दुर्ज्ञेयमिति तज्जनितक्लेशदूरीकरणाय संक्षिप्यसंक्षिप्य महर्षिभिः स्वस्वोपज्ञसंहितारूपेण प्रणीते तत्र च यावत्कर्तव्यकृत्यनिमित्तकालव्यवस्थादिसंग्रहे सत्यपि, तेषां बाहुल्यात्तत्रापि लोकानामशक्तिं संभाव्य सकलवेदशास्त्रपारावारपारीणश्रीमच्चिन्तामणिदैवज्ञसुतानंतदैवज्ञसुतश्रीरामदैवज्ञवर्येण श्रीनर्मदातीरवर्तिधर्मपुरग्रामवासिना सर्वमहर्षिवर्यप्रणीतसंहिताः पर्यालोच्य तदविरुद्धतयेदानीन्तनेभ्यः सर्वजनेभ्योऽभीष्टफलदमुहूर्तदानसमर्थो मणिरित्यन्वर्थो मुहूर्तचिन्तामणिः, तथा एतत्पितृव्यकृतस्यास्य मूलग्रन्थस्य श्रीमदनंतसुतश्रीमन्नीलकण्ठसुतदैवज्ञशिरोमणिना श्रीगोविन्ददैवज्ञेनातिसरला सुविस्तरा पीयूषधारानाम्नी प्रौढविद्वज्जनानामत्याह्लादवर्द्धिनी "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपोथ समाधानं व्याख्यानं षड्विधं मतम्" इत्यभियुक्तोक्तिमनुसरंतेतरदुर्मतनिराकरणपटीयसी महता समारम्भेणाभिनवानपि तत्तत्प्रकरणोचितान्बहूनर्थान्यथावत्संभावयन्ती टीका चेत्येतौ ग्रन्थौ व्यरचिषाताम्।

अपरो मूलकृत्कृतो मिताक्षरानामा एतट्टीकाग्रन्थः समूलं मुद्राप्यास्माभिः पृथगेव प्रकाशितो जागर्त्येव।

अयं मूलग्रन्थः १५२२ तमे शकवर्षे श्रीकाशीक्षेत्रे निर्मित इति त्वस्यांतिमश्लोके तथोक्तेः, तथेयं टीका १५२५ तमे शकवर्षे निर्मितेति च तदंतिमभागे उक्तेश्च ज्ञायते तदा तदा कृत इति।

अत्र टीकायां मूले च निरूपितानां प्रायशो यावतामपि तत्तद्विषयाणां दुरूहत्वं दुरधिगमत्वं च मन्यमानानां सामान्यतो विशेषतश्चैतत्परिशीलनशालिनां च ज्योतिर्विदामन्येषां च विदुषां तत्तद्विषयविशेषस्थलपरिशोधनश्रमपरिहारद्वारा झटिति तत्तद्विषयविभागस्थलावगतये तत्तद्विषयनिरूपणस्थलारम्भाव्यवहितप्राग्भागे स्थूलाक्षरैर्नव्यतया तत्तद्विषयनिर्देशप्रकाशकं वाक्यं सर्वत्र सन्निवेश्य प्रकाशितमिति तदिदं लघुभूतं साधनं संपाद्याविकलं स्वस्वेष्टार्थसंपत्तये यतमानाः ग्रंथकर्तृश्रमं मुद्रापणेन तद्दौर्लभ्यक्लेशदूरीकरणाय स्वीकृतैतद्विषयकपुस्तकार्जनादिकालादारभ्यामुद्र । विविधं बहुधनव्ययाद्यात्मकं मदीयं श्रमं च व्ययमात्रपरिमितमूल्यप्रापणद्वारा संगृह्यानन्दिनो भवन्तु । यदस्मिन्ग्रन्थ मानुषेषु नैसर्गिकभ्रमप्रमादादिदोषाणां दुष्परिहारतया यथायथाऽशुद्धादिकमल्पमधिकं वा दृश्यते तमिममपराधं क्षमाप्य तत्सर्वं यथावत्संशोध्य तथाग्रिममुद्रणसमये तथा मुद्रणायाज्ञाप्यानुगृह्णन्तु मामिति प्रार्थये । इति शम् ।

भवदीयशुभाकांक्षी-

**खेमराज श्रीकृष्णदास,**

अध्यक्ष-"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस, बम्बई.



अथ

# मुहूर्तचिन्तामणेः पीयूषधाराटीकासहितायाः
# विषयानुक्रमणिका ।

## ५ संस्कारप्रकरणे ।

## ६ विवाहप्रकरणं ।

१२ वास्तुप्रकरणे ।

इति पीयूषधाराटीकासमेतमुहूर्तचिन्तामणेः विषयानुक्रमणिका समाप्ता ।

श्रीगणेशाय नमः ।



# मुहूर्तचिन्तामणिः ।

## पीयूषधाराटीकासमेतः ।

## शुभाशुभप्रकरणम् १

( तत्र मंगलाचरणम् )

**ॐ गौरीश्रवःकेतकपत्रभङ्गमाकृष्य हस्तेन ददन्मुखाग्रे ।**
**विघ्नं मुहूर्ताकलितद्वितीयदन्तप्ररोहो हरतु द्विपास्यः ॥१॥**

ॐ दधानं भृंगालीमनिशममले गंडयुगले ददानं सर्वार्थान्निजचरणसेवासुकृतिने । दयाधारं सारं निखिलनिगमानामनुदिनं गजास्यं स्मेरास्यं तमिह कलये चित्तनिलये ॥ १ ॥ निपीतध्वांताय प्रसृमरकरायोग्रमहसे निकामं कामानां वितरणविनोदव्यसनिने। समस्तप्रत्यूहप्रशमनकृते श्रीदिनकृते नमस्तस्मै यस्मै स्पृहयति समस्ताम्बुजननी ॥ २ ॥ लसल्लक्ष्मीलीलावसतिरनिशं वेदविहितस्फुरद्धर्माधारः श्रितसुखपयोदः प्रतिदिनम् । अतीव प्रख्यातः स जयति गुणानां जननभूर्विदर्भाख्यो देशो हरिरिव सदानन्दजनकः ॥ ३ ॥ तस्मिन्विदर्भाविषये विषये वितृष्णश्चिन्तामणिद्युमणिरेव बभूव मूर्त्तः । जाग्रच्चतुर्मुखचतुर्मुखशायिविद्यामाद्यां प्रवर्तयितुमत्र पवित्रकीर्तिः॥४॥ वादैर्विजित्य धरणीतलमासमुद्रमुन्निद्रतर्कशतकर्कशबुद्धिसिद्धैः। चत्वार ऊर्जितसमर्जितकीर्तिदंभस्तंभा दिशासु रचिताःसकलासु येन॥५॥ज्योतिर्विदुज्ज्वलयशोहरणाय किंवा चंद्रांशुनिर्मलकलाभरणाय किंवा । विद्यासरोरुहदृशः शरणाय किंवा श्रीमाननन्त इतितत्तनयोजनिष्ट ॥ ५ ॥ तस्मात्पद्माख्यपत्न्यामतिविमलमतीवाक्पतीदिक्पतनिामाशाः कासारजाभस्फुरदाधिकयशोराशिमाभिव्याप्य भातौ । प्राभूतां तौ तनूजौ श्रुतिगणगदिताचारधारापवित्रौ ज्येष्ठः श्रीनीलकण्ठस्तदनुगुणगणाऽलंकृतो रामनामा ॥ ७ ॥ सीमामीमांसकानां कृतसुकृतचयः कर्कशस्तर्कशास्त्रे ज्योतिःशास्त्रे च गर्गः फणिपतिभणितिव्याकृतौ शेषनागः ॥ पू-

ध्वीशाऽकब्बरस्य ( अकबरबादशाह ) स्फुरदतुलसभामण्डनं पण्डितेन्द्रः साक्षाच्छ्रीनीलकण्ठः समजनि जगतीमण्डले नीलकण्ठः ॥८॥ रामो हेरम्बभक्तेरधिगतविशदानेकविद्योनवद्यो बुद्धिप्रद्योतमानो गणितगुणवतां मानवानां सुखाय॥ ग्रन्थैर्नानाप्रकारैरतिकठिनतरग्रन्थनक्रे विशाले ज्योतिःशास्त्रार्णवे द्राग्दृढतरमतुलं सेतुबंधं चकार ॥ ९ ॥ श्रुतिस्मृतिप्रोक्तसमस्तकर्मोपयुक्तमानन्दितशिष्टलोकम् । मुहूर्तचिन्तामणिनामकं स ग्रन्थं व्यधाच्छर्वपुरे स्वपद्यैः ॥ १० ॥ श्रीनीलकण्ठस्य बभूव पत्नी सा चन्द्रिकाख्योभयवंशभूषा ॥ नारायणस्येव समुद्रकन्या शर्वस्य गौरीव विराजते या ॥११॥ तस्माद्दैवविदग्रगण्यतिलकाच्छ्रीनीलकण्ठात्तया गोविन्दाख्यसुतोऽजनि स्वगुरुतः संप्राप्तविद्यागणः । यः शास्त्रामृतसिन्धुबन्धुरवचोवीचीषु नित्योदितां सानन्दं समवाप्य भूरि कृतवान् ग्रन्थे श्रमं ज्योतिषे ॥ १२ ॥ अनेकबुधमण्डलीविरचितां हि टीकाकृतौ निधाय हृदयेऽर्थनामिह मुहूर्त्तचिन्तामणेः ॥ निगूढतरतद्गतप्रचुरभावमात्मोक्तिभिर्बुधा विवरणं करामलकमाशु कर्तुं यते ॥ १३ ॥ मुहूर्तचिन्तामणिदुग्धसिन्धुमामथ्य युक्तिव्रजमन्दरेण ॥ गोविन्दसंज्ञस्तनुते सुखाय पीयूषधारां भुवि भूसुराणाम् ॥ १४॥ तत्रादितो गाणपतं प्रणम्य पादाब्जयुग्मं विदुषां सुतुष्ट्यै ॥ शुभाशुभाध्यायभवां हि टीकां गोविन्ददैवज्ञ इमां करोति ॥ १५ ॥

## अथ टीका।

अथ ग्रन्थादौ ग्रन्थमध्ये ग्रन्थांते च मङ्गलमाचरणीयमवश्यमिति शिष्टाचारः । उक्तं च महाभाष्ये "मंगलादीनि मंगलमध्यानि मंगलांतानि शास्त्राणि प्रथंते वीरपुरुषकाणि भवंत्यायुष्मत्पुरुषकाणि च" इति । तच्च मंगलं त्रिविधमाशीरूपं नमस्काररूपं वस्तुनिर्देशरूपं चेति । उक्तं च दण्डिना काव्यादर्शे–"आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्" इति । वस्तुनिर्देशो नलादेर्महाराजराजस्य सिद्धादिशब्दानां वा ग्रन्थादौ कथनम् । तत्र तावद्गार्ग्यमुनिवरवंशतिलकमैत्रावरुणालंकारीदिगन्तगतमातृपुरनिवासी सकलज्योतिर्विन्मुकुटरत्नचिन्तामणिज्योतिर्वित्पुत्रानंतज्योतिर्वित्पुत्रो नीलकण्ठज्योतिर्विदनुजो रामज्योतिर्विस्त्रिस्कन्धज्योतिःशास्त्रसरोजनिचयभास्करो ग्रन्थकृन्मुहूर्तचिन्तामणिनामकं श्रौतस्मार्ताद्यनेककर्मौपयिकं संहितास्कन्धान्तर्गतनानामुहूर्त्तसंग्रहरूपज्योतिषग्रन्थं चिकीर्षुरनेकजन्मोपाजतदुरितसंभूतविघ्नध्वंसकामो निर्विघ्नग्रन्थसमाप्तिप्रचयगमनार्थं विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्तव्यताककर्माभिमतगणेशदेवताशीर्वादरूपं मंगलमिद्रवज्राच्छन्दसोपनिबध्नाति–गौरीत्यादिना । द्विपास्यो विघ्नं हरतु इत्यन्वयः । युष्माकमित्यध्याहारः । द्विपस्य हस्तिन आस्यमिवास्यं मुखं यस्य स द्विपास्यो गणेशो युष्माकं विघ्नं हरतु निराकरोतु । "आशिषि लिङ्लोटौ इति लोट् । कीदृशो द्विपास्यः गौरीश्रवःकेतकपत्रभङ्गं गौरी पार्वती तस्याः श्रवसी कर्णौ तयोः स्थितं यत्केतकपत्रं केतकीवृक्षस्य पुष्पं केतकं तस्य पत्रस्य भङ्गोंशस्तं हस्तेन शुण्डादण्डेन कृत्वा आकृष्य हठाद्गृहीत्वा मुखाग्रे स्वमुखोष्ठे दधाति भक्षणाथ स्थापयतीति दधत् । अनेन बाललीला गणेशस्य सूचिता । बालो हि मातृसमीपवर्ति यत्किञ्चित्स्वेष्टं वस्तु बलात्कारेण गृहीत्वा मुखे निःक्षिपति । अत एव कीदृशो गणेशः मुहूर्ताकलितद्वितीयदन्तप्ररोहः मुहूर्तेन क्षणेनाकलितो धातूनामनेकार्थत्वात् अनुहृतो हस्तिद्वितीयदन्तसादृश्यं प्रापितो द्वितीयदन्तस्य प्ररोह उद्गमो येन सः । अनेनात्याश्चर्यं

सूचितं भवति । तथाहि–दृश्यमाना हस्तिनो द्विदंतता एव, गणेशस्त्वेकदंत एवेति पुराणप्रसिद्धम् । केतकपत्रस्य मुखस्थापनसमये यावन्निगरणं करोति तावद्गणेशोऽपि द्विदंत एवालोकि लोकैः । अद्भुतोपमाख्योऽलंकारः । उक्तं च दंडिना काव्यादर्शे–"यथाकथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते । उपमा नाम सा तस्याः प्रपंचोऽयं प्रदर्श्यते ॥ यदि किंचिद्भवेत्पद्मं सुभ्रु विभ्रांतलोचनम् । तत्ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥" इति श्लोकार्थो व्याख्यातः ॥

## नमनमपि पूजैव–

अत्र गणेशस्य नमनादिरूपा पूजा ब्रह्मवैवर्त्तेऽभिहिता । "ढुंढिराजः प्रियः पुत्रो भवान्याः शंकरस्य च । तस्य पूजनमात्रेण त्रयोपि वरदाः सदा" ॥ त्रयो ब्रह्मविष्णुशिवाः । "गणेशः सर्वदेवानामादौ पूज्यः सदैव हि । सर्वैरपि महाविघ्ननाशकोऽन्यो न विद्यते ॥"इति । शिष्टाचारोऽप्येतत्तन्मूलक एव । यथा "सुमुखश्चैकदंतश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥" इति । गौरीति "षिद्गौरादिभ्यश्च" इति ङीप् । केतकं केतक्याः पुष्पसंज्ञेयम् । अवयवार्थे "अवयवेच प्राण्योषधिवृक्षेभ्यः" इत्यण् । "पुष्पमूलेषु बहुलम्" इति तस्य लुक् । दधत् । दधातीति दधत् शतृप्रत्यये जौहोत्यादिकत्वाद्विकरणस्य शपःश्लौ सति "श्लौ" इति द्विर्वचेन "उभे अभ्यस्तम्" इत्यभ्यस्तसंज्ञायां "श्नाभ्यस्तयोरातः" इत्याकारलोपः । ततः "उगिदचां सर्वनामस्थानेऽधातोः" इति प्राप्तस्य नुमो "नाभ्यस्ताच्छतुः" इति अभावः । आकलितेति "निष्ठा" इति बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः । द्विपास्य इति । द्वाभ्यां शुण्डादण्डमुखाभ्यां जलं पिबतीति द्विपः । "आतोनुपसर्गे कः" इति कः । "आतो लोप इटि च" इत्याकारलोपः । द्विपास्यास्यमिवास्यं यस्यासौ द्विपास्यः । "सप्तम्युपमानपूर्वस्य वाच्योवा चोत्तरपदलोपश्च" इति बहुव्रीहिः समासे उत्तरपदलोपश्च ॥ यद्यपि 'हस्तौ तु पाणिनक्षत्रे' इति हस्तशब्दः पाणिनक्षत्रवाचकः । तथाप्युपचाराद्धस्तिशुंडायामपि वर्तते । अत एव "हस्ताज्जातौ" इति वदन्पाणिनिरनुकूलः । क्षीरस्वाम्यपि 'बलिहस्तांशवः कराः' इत्यस्य व्याख्याने 'हस्तिशुण्डापि कर उपचारात्' इति व्याचख्यौ । तद्वत् 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वप्रकाशे हस्तिशुण्डावाचकत्वमप्युक्तं हस्तशब्दस्य । अथात्र कवित्वे भंगशब्दोऽनुचितः । तथाहि "लोकोत्तरवर्णनानिपुणकविकर्म काव्यम्" इति काव्यलक्षणस्यात्र कवित्वे सत्त्वात् । यस्मिन्कस्मिंश्चित्पद्ये भङ्गशब्दोपादानमयुक्तं विशेषतो ग्रन्थारम्भभूते । कुतः ? "तद्दोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि" इति काव्यप्रकाशकारोक्तेर्दोषरहितयोः शब्दार्थयोः काव्यता विधीयते । तत्र शब्ददोषप्रस्तावे काव्यप्रकाशकारेण दोषोल्लासे सप्तमे "दुष्टं पदं श्रुतिकटु च्युतसंस्कृतमप्रयुक्तमसमर्थम् । निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम् ॥ संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ॥ अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव" इति शब्ददोषाः उक्ताः । तत्र भंगशब्देनासभ्यार्थान्तरकत्वादश्लीलाख्यो दोषोऽभिहितो भवति । तल्लक्षणं वामनेनोक्तम्–

"असभ्यार्थान्तरमसभ्यार्थस्मृतिहेतुश्चाश्लीलम्" इति। अस्यार्थः यस्य पदस्यानेकार्थस्यैकोर्थोऽसभ्यः स्यात्तदसभ्यार्थान्तरम्। यथा वर्च इति पदं तेजसि पुरीषे च॥ यत्तु पदमेकदेशद्वारेणासभ्यमर्थं स्मारयति तदसभ्यार्थस्मृतिहेतु। यथा कृकाटिकेति। एवं भंगशब्दोपि नानार्थः। तरंगरचनाशकलपराजयनाशादीनामर्थानां प्रकरणं विना स्फुरणादसभ्यार्थांतरस्य नाशस्य प्रतीतेरश्लीलत्वम्। काव्यप्रकाशेप्यश्लीलोदाहरणं "पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र म॥ भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम्॥" इति। अत्र पितृवसतिशब्देन पितुर्गृहमिति विवक्षितम्। तत्र श्मशानार्थस्यापि प्रतीतेरश्लीलत्वादमंगलार्थत्वम्। कथं तर्हि "भंगं जयं चापतुरव्यवस्थम्" इति कालिदासः। अत्र भंगशब्देन पराजयो विवक्षित इत्यश्लीलत्वमिति चेत्, सत्यम्, तत्र हि युद्धप्रस्तावे स्वरूपान्वाख्यानाददोषः। प्रस्तुते ग्रंथारंभे प्रकरणमपि नास्ति॥ अतो भंगशब्दपाठोऽनुचितः। यस्मात् "गौरीश्रवःकेतकपत्रभागम्" इति पठंति। तदेतत्सर्वं मत्सररहितैः सूरिभिर्विवेचनीयम्॥

## वर्णशुद्धिविचारः।

अथ काव्यत्वादेव प्रसंगतो वर्णगणशुद्धिर्विचार्यते। तत्र श्लोकादावसंयुक्तशुभफलदगकारप्रक्षेपादस्ति वर्णशुद्धिः॥ तदुक्तं भामहेन "कः खो गो घश्च लक्ष्मीं वितरति च यशो ङस्तथा चः सुखं छः प्रीतिं जो मित्रलाभं भयमरणकरौ झञौ टठौ खेददुःखे। डः शोभां ढो विशोभां भ्रमणमथ चणस्तः सुखं थश्च युद्धं दो धः सौख्यं मुदं नः सुखभयमरणक्लेशदुःखं पवर्गः॥ १॥ यो लक्ष्मीं रश्च दाहं व्यसनमथ लवौ शः सुखं षश्च खेदं सः सौख्यं हश्च खेदं व्यसनमथ च ळः क्षः समृद्धिं करोति। संयुक्तं चेह न स्यात्सुखमरणपटुर्वर्णविन्यासयोगः पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम्॥ २॥" इति। तेन नायकादेः सुखं भवति। "अक्षरे परिशुद्धे तु नायका भूतिमृच्छति" इति वचनात्। प्रस्तुते ग्रंथकर्तुरध्येतुरध्यापकस्य वा सुखं वाच्यम्,-

## गणशुद्धिः।

अथ गणशुद्धिः। तत्रास्मिन् पद्ये इंद्रवज्राच्छंदः। तल्लक्षणं वृत्तरत्नाकरे उक्तं "स्यादिंद्रवज्रा यदितौ जगौ गः" इति। तत्र गणलक्षणमपि तेनैवोक्तम् "सर्वगुर्मो मुखांतलौ यरावंतगलौ सतौ॥ ग्मध्याद्यौ ज्भौ त्रिलौ नोष्टौ भवंत्यत्र गणास्त्रिकाः" इति। एषां गणानां फलान्यन्यैरभ्यधायि-"मकारः श्रियं योऽतिवृद्धिं त्वरोगं सकारश्च देशाटनं द्रव्यहानिम्। तकारो जकारो रुजं भश्च कीर्तिं न आयुः प्रयच्छत्यजस्रं जनानाम्" इति वचनात्॥ इदं फलमध्यापकाध्येतृप्रभृतीनां ज्ञेयम्। एवं सति द्रव्यहानिरूपफलदस्य तगणस्यादौ प्रयोगाद्दुष्टमिदं काव्यमितिचेत् सत्यम् 'उमा कात्यायनी गौरी' इति वचनाद्गौरीशब्दो देवतावाचकः। तस्यादौ प्रयोगाद्दुष्टफलत्वं नास्तीति समाधिः। यथोक्तम् "देवतावाचकाः शब्दा ये च भद्रादिवाचकाः॥ ते सर्वे नैव निंद्याः स्युर्लिपतो गणतोपि च" इति। नन्वेवमपींद्रवज्रालक्षणासंगतिः, पादांतस्याक्षरस्य "ह्रस्वं लघु" इति लघुसंज्ञकत्वात्, 'संयोगे गुरु, दीर्घं च'

इति विशेषलक्षणानाक्रांतत्वेन गुरुत्वायोगाच्च । उच्यते, पादांतस्थलस्य गोरपि वैकल्पिकगुरुत्वाद्दोषः । यथोक्तं वृत्तरत्नाकरे "सानुस्वारो विसर्गांतो दीर्घो युक्तपरश्च लः । वा पदांते त्वसौ वक्रो ज्ञेयोन्योमात्रकोऽजुः इत्यलमतिप्रसंगेनेति शिवम् ॥ १ ॥

## अनुबन्धचतुष्टयनिरूपणम् ।

**क्रियाकलापप्रतिपत्तिहेतुं संक्षिप्तसारार्थविलासगर्भम् ॥**
**अनंतदैवज्ञसुतः स रामो मुहूर्तचिंतामणिमातनोति ॥ २ ॥**

एवमादिपद्येनेष्टदेवताशीर्वादरूपमंगलमभिधायेदानीं ज्योतिषग्रंथमारभमाणो रामज्योतिर्विद्विषयप्रयोजनसंबन्धाधिकारिणः सूचयन् कर्तव्यमुपजातिकया प्रतिजानीते—क्रियाकलापेति । सः प्रसिद्धो जगतीतले अनंताख्यो दैवज्ञो ज्योतिर्वित्तस्य सुतः पुत्रो रामो रामज्योतिर्विन्मुहूर्तचिंतामणिं मुहूर्तानां दिनशुद्धिविशेषाणाम् । अथवा मुहूर्तशब्देन दिनस्य रात्रेर्वा पंचदशे विभाग उच्यते । उक्तं च रत्नमालायां—"दिनस्य यः पंचदशो विभागो रात्रेस्तथा तद्धि मुहूर्तमानम्" इति । तत्र लक्षणया मुहूर्त्तोपलक्षितः कालो मुहूर्तशब्देन विवक्ष्यते । तस्य चिंता शुभाशुभरूपो विचारस्तस्य मणिरिव मुहूर्त्तचिंतामणिः । यथा मणिर्हीरकादिः समस्तकांतीनामाधारस्तथायमपि ग्रंथो निखिलमुहूर्तानामाधार इत्यन्वर्थनामानं लक्षणया मुहूर्तचिंतामणिं ज्यौतिषग्रंथमातनोति । निषेधविध्यादिसंनिवेशविशेषेण निरूपयतीत्यर्थः ॥

## अपूर्वोयं ग्रन्थः ।

ननु जीर्णा अपि मुहूर्तग्रंथाः संति तैरेव निखिलमुहूर्तविचारनिर्वाहे सिद्धे किमनेन जीर्णमुहूर्तग्रंथानुवादभूतेनेत्यत आह । (कीदृशं मुहूर्तचिंतामणिम् ) क्रियाकलापप्रतिपत्तिहेतुं क्रियाः जातकर्मनामकर्मादिकास्तासां कलापः समूहस्तस्य अमुकस्मिञ्छुभदिने कार्यमेतस्मिन्नशुभदिने न कार्यमित्येवंरूपा प्रतिपत्तिः सम्यग्ज्ञानं तस्य हेतुं कारणम् । अयमर्थः, अन्येषु मुहूर्तग्रंथेषु तिथिप्रकरणे कर्मविशेषेषु शुभाशुभतिथयो निरूपिताः एव वारप्रकरणे वारा एव तथा नक्षत्रप्रकरणे नक्षत्राण्येव योगप्रकरणे योगा एव लग्नप्रकरणे लग्नान्येवाभिहितानि । एवं सत्याखिलप्रकरणानां पुनःपुनरांदोलने मुहूर्तविचारः प्रसिद्ध्येदिति गौरवमस्ति । अत्रत्वेकस्मिन्नेव पद्ये यो यो मुहूर्तो विचार्यते तस्य तस्य तत्रैव निर्वाह इति लाघवम् । यथा "नवान्नं स्याच्चरक्षिप्रमृदुभे सत्तनौ शुभम् ॥ विना नंदाविषघटीमधुपौषार्किभूमिजाम्" इत्यादि । केचित्तु 'क्रियाकलापप्रतिपत्तिहेतोः' इति पंचम्यंतपाठमाहुः॥ ननु मुहूर्ततत्त्वादावपि कचिदेवंविधमुहूर्तनिरूपणाद्व्यर्थोयं श्रम इत्यत आह—संक्षिप्तेति । ( कीदृशं मुहूर्तचिंतामणिं ) संक्षिप्तसारार्थविलासगर्भं संक्षिप्तः शब्दैः सारार्थो निष्कृष्टार्थस्तस्य विलासः प्रकाशः स गर्भे यस्यासौ संक्षिप्तश्चासौ सारार्थविलासगर्भश्च संक्षिप्तसारार्थविलासगर्भस्तमिति कर्मधारयः । यद्यपीदानींतनग्रंथेषु शब्दलाघवेनार्थबाहुल्यमस्ति, तथापि शब्दानां दुर्बोधार्थत्वाद्गुरुमुखादप्यध्ययने सति झटिति मनस्यर्थास्फुरणाच्चेत्यनुपादेयत्वम् । अत्र तुशब्देपि लाघवं तत्रापि निष्कृष्टस्याप्यर्थस्य तादृशशब्दैर्निरूपणाद्यथा गुरुमुखं विनैवार्थज्ञानं सद्यो मनसि जागर्तितरामित्यवश्यमुपादेयत्वमस्य ग्रंथस्य ॥

## अनुबन्धचतुष्टयम् ।

ननु किमभिधेयार्थकमिदं शास्त्रं प्रयोजनमपि किं 'प्रयोजनमनुद्दिश्य न मंदोपि प्रवर्त्तते' इति न्यायात् । उक्तंच—"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" इति । अन्यच्च—"ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । ग्रंथादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥" इति । उच्यते, मुहूर्तचिंतामणिमित्यनेनैव पदेन सर्वं सूचितम् । तथाहि शुभाशुभप्रकरणनक्षत्रप्रकरणसंक्रांतिगोचरप्रकरणसंस्कारविवाहप्रकरणवधूप्रवेशाग्न्याधानराजाऽभिषेकयात्राप्रकरणगृहारंभगृहवेशमुहूर्तसमुदायाः संहितापदार्थाः प्रतिपाद्यत्वेन विषयभूताः ॥ यद्यपि वसिष्ठादिभिः सूर्यचाराद्युत्पातादिकमपि संहितापदार्थेष्वभ्यधायि । तथाप्यत्र तेषां मुहूर्तविचारेऽनुपयोगाद्ग्रंथकृता नोक्तामिति तात्पर्यम् । मुहूर्तानां प्रतिलक्षणं लौकिकविचारार्थत्वेन तदभिधानात् । अत्राभिधेयपदार्थानां मुहूर्तचिंतामणिनामकग्रंथस्य च प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । प्रयोजनं शुभाशुभकथनं विवाहादिकालनिर्णयश्च । यदाह नारदः—"प्रयोजनं तु जगतः शुभाशुभनिरूपणम् ।" कश्यपोपि—"ग्रहणग्रहसंक्रांतियज्ञाध्ययनकर्मणाम् । प्रयोजनं व्रतोद्वाहक्रियाणां कालनिर्णयः ॥" इति ॥

## तत्राधिकारिनिरूपणे विशेषः ।

एतज्जिज्ञासुरधिकारी । स च द्विज एव नान्यः । तदुक्तं नारदेनैव—"सिद्धांतसंहिताहोरारूपस्कंधत्रयात्मकम् । वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमकल्मषम् ॥ विनैतदखिलं श्रौतं स्मार्तं कर्म न सिध्यति । तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥ अतएव द्विजैरेतदध्येतव्यं प्रयत्नतः॥" इति । अत्रैवकारस्य पाठक्रमेण योजने प्रयोजनं विनैव ज्योतिःशास्त्राध्ययनस्याऽऽवश्यकत्वं प्रतीयते । द्विजैरेवेति व्याख्याने द्विजव्यतिरिक्तैः शूद्रैर्नाध्येयमिति प्रतीयते । व्याख्याद्वयमपि युक्तमेव ॥ द्विजाः ब्राह्मणक्षत्रियवैश्याः । उक्तं च काशीखण्डे "ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजाः स्मृताः । प्रथमे मातृतो जन्म द्वितीयं चोपनायनात् ॥" इति । तदुक्तं वसिष्ठवचने—"अध्येतव्यं ब्राह्मणैरेव तस्माज्ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम् । एतद्बुद्ध्वा सम्यगाप्नोति नूनं धर्मं चार्थं मोक्षमग्र्यं यशश्च" इति । श्रुतावपि "ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्च" इति । तत्र ब्राह्मणग्रहणमध्यापनेप्यावश्यकत्वसूचनार्थम् । अतएव महाभारते—"यजनं याजनं चैव तथा दानप्रतिग्रहौ । अध्यापनं चाध्ययनं षट्कर्मा ब्राह्मणः स्मृतः ॥" इति ॥ क्षत्रियविशोस्त्वध्ययने एवाधिकारो नाध्यापने । तदुक्तं मनुना—"प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशेत् । पशूनां रक्षणं दानमिज्याध्ययनमेव च । वाणिज्यं च कुसीदं च वैश्यस्य कृषिमेव च" इति । अत्र प्रजारक्षणाद्युक्तेर्नाध्यापनाऽधिकारः ।

## अस्य श्रौतस्मार्तकर्मोपयोगित्ववेदाङ्गत्वाध्येयत्वानिर्णयः ।

ननु कथं ज्यौतिषं श्रौतस्मार्तकर्म्मौपयिकमिति चेत्, उच्यते—अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयति" इति । तथा "वसंते ब्राह्मणोग्नीनादधीत" "दर्शपूर्णमासाभ्यां यजेत"इत्यादि

श्रुतयः संति । तत्र वर्षज्ञानमादित्यादिग्रहचारपरिच्छेदसाध्यम् । तस्य वसन्ताद्यृतूनां च दर्शपूर्णमासयोश्च ज्ञानं ज्योतिषं विना सर्वथैव न निर्वहतीत्यवश्यमध्येतव्यं ज्योतिःशास्त्रम् । उक्तं च वेदांगज्योतिषे—"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः । तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान् ॥ " अतएव वेदस्य मुख्यमिदमंगं चक्षूरूपत्वात् ॥ तदप्युक्तं तत्रैव शिक्षायाम्—"शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते । छंदः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ॥ " इति । तथा " यथा शिखा मयूराणां नागानां मणयो यथा । तद्वद्वेदांगशास्त्राणां ज्योतिषं मूर्धनि स्थितम् " इति । एवं मुख्यतायां सत्यां दृष्टांतो वसिष्ठसिद्धांते—" वेदस्य चक्षुः किल शास्त्रमेतत्प्रधानतांगेषु ततोऽर्थजाता । अंगैर्युतोऽन्यैः परिपूर्णमूर्तिश्चक्षुर्विहीनः पुरुषो न किंचित् ॥" इति । तस्मात्कर्मौपयिकत्वादवश्यमध्येयं ज्योतिःशास्त्रम् ॥

## दुष्टादयो नाध्याप्याः—

तत्राध्ययनेन समीचीनशिष्या एवाध्याप्या न कृतघ्नादयः । तदुक्तं श्रुतौ—" विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेहमस्मि । असूयकायानृजवे शठाय न मा ब्रूया वीर्यवती तथा स्याम् ॥" इति॥ समरसारेऽपि—"नैतद्देयं दुर्विनीताय जातु ज्ञानं गुप्तं तद्धि सम्यक्फलाय । अस्थाने हि स्थाप्यमानैव वाचां देवी कोपान्निर्दहेन्नोचिराय ॥ विनयावनताय दीयमाना प्रभवेत्कल्पलतेव सत्फलाय । उपकृत्यनुचिन्तकानि शास्त्राण्युपकारस्य पदं हि साधुरेव॥" इति । सिद्धांतशिरोमणावपि—" दिव्यं ज्ञानमतींद्रियं यदृषिभिर्ब्राह्मं वसिष्ठादिभिः पारंपर्यवशाद्रहस्यमवनिं नीतं प्रकाश्यं ततः । नैतद्द्वेषिकृतघ्नदुर्जनदुराचाराचिरावासिनां स्यादायुःसुकृतक्षयो मुनिकृतां सीमामिमामुज्झतः ॥ " इति ।

## अत्र शूद्रस्य सर्वथानाधिकारः ।

एवं सत्यस्मिन् ज्योतिःशास्त्रे सर्वथा शूद्राणामनधिकारः ॥ उक्तं च मनुना—" एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥" इति । नारदवाक्यं तु प्रागेवाभिहितम् । तत्र यदि ब्राह्मणः शूद्रं लोभादिना पाठयति तस्माच्च पठति तदा महान् दोषः । यदाह गर्गः—"स्नेहाल्लोभाच्च मोहाच्च यो विप्रो ज्ञानतोपि वा । शूद्राणामुपदेशं तु दद्यात्स नरकं व्रजेत् ॥ अग्र्यो ददाति यः शूद्रे स्वेकं षोडशकर्मणाम् । अधो युगसहस्रांते जायते श्वानयोनिषु ॥ सम्यगाचार्ययुक्तोऽपि यःशूद्रः सर्वशास्त्रवित् । वर्जयेद्वचनं तस्य कपालस्थोदकं यथा " इति । कपालं मनुष्यशिरोमध्यवर्त्यस्थि । " भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ॥ तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् ॥" इति सामान्यतो हेमाद्रौ देवलस्मरणाच्च ॥

## नक्षत्रसूच्यादिनिन्दाद्वारा ज्योतिर्विदो माहात्म्यम् ।

अथैवंविधस्य ज्योतिःशास्त्राध्येतुर्माहात्म्यमाह मांडव्यः—" एवंविधस्य श्रुतिनेत्रशास्त्रस्वरूपभर्तुः खलु दर्शनं च । विहंत्यशेषं कलुषं जनानां षडब्दजं धर्मसुखास्पदं स्यात्॥"इति । अत्र ज्ञानविशेषेण ज्योतिर्विदः पूज्यतातारतम्यं जीर्णैरभ्यधायि । " दशाविधकृतपापं हंति सिद्धान्तवेत्ता त्रिदिनजनितदोषं तंत्रविज्ञः स एव । करणभगणवेत्ता हंत्यहोरात्रदोषं

जनयति घनमंहश्चात्र नक्षत्रसूची ॥ " नक्षत्रसूची दैवज्ञो घनं बहु अंहः पापं जनयति । तल्लक्षणं वाराहसंहितायाम्–" अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते । स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥" इति । अन्यच्च "तिथ्युत्पत्तिं न जानंति ग्रहाणां नैव साधनम् । परवाक्येन वर्तन्ते ते वै नक्षत्रसूचकाः॥"इति।व्युत्पत्तिस्तु गृहेगृहे गत्वाऽपृष्ट एव नक्षत्राण्याश्विन्यादीनि शुभाशुभफलसूचकानि सूचयतीति नक्षत्रसूची । वराहः " नक्षत्रसूचकोद्दिष्टमुपवासं करोति यः । स व्रजत्यंधतामिस्रं सार्धमृक्षविडंबिना । नक्षत्रसूचकं पापं भिषजं शुल्कजीविनम् । तादृक्पौराणिकादींश्च वाङ्मात्रेणापि नार्चयेत् ॥ " अतएव वसिष्ठः–"त्रिस्कंधपारंगम एव पूज्यः श्राद्धे सदा भूसुरवृन्दमध्ये।नक्षत्रसूची खलु पापरूपो हेयः सदा सर्वसुधर्मकृत्ये॥" वराहोऽपि–" ग्रंथतश्चाऽर्थतश्चैव कृत्स्नं जानाति यो द्विजः । अग्रभुक् स भवेच्छ्राद्धे पूजितः पंक्तिपावनः । न ह्यसांवत्सरे देशे वस्तव्यं भूतिमिच्छता । चक्षुर्भूतोऽपि यत्रैव पापं तत्र न विद्यते ॥ मुहूर्तं तिथिनक्षत्रमृतवश्चायनानि च । सर्वाण्येवाकुलानि स्युर्न स्यात्सांवत्सरो यदि"॥अतएव यद्धर्मशास्त्रे सुमन्तुः"तस्कराकितव"इत्यादिना महता गद्येन सांवत्सरोऽपांक्तेय इत्याह । महाभारतेपि–" कितवो भ्रूणहा यक्ष्मी " इत्यादिपद्यपट्कमध्ये " कुशीलवो देवलको नक्षत्रैर्यश्च जीवति । एतानिह विजानीयाद्ब्राह्मणान्पंक्तिदूषकान्॥"इत्युक्तम्। तन्नक्षत्रसूचकज्योतिर्विद्विषयम् ॥ यदाह कश्यपः–" दारविंग्भ्रूणहंतॄंश्च व्यगान्नक्षत्रसूचकान् । वर्जयेद्ब्राह्मणानेतान्सर्वकर्मसु यत्नतः ॥" इति । "नक्षत्रसूचकश्चैव पर्वकारश्च गर्हितः" इति ब्रह्मपुराणेप्युक्तम् । अपृष्ट इति वाक्यशेषोऽत्राध्याहार्य्यः । अतएव मनुः–" तिथिं पक्षस्य न ब्रूयान्न नक्षत्राणि निर्दिशेत् " इति । आह स्म यमोऽपि–" नक्षत्रतिथिपुण्याहमुहूर्तान्मंगलानि च । न निर्दिशंति ये विप्रास्तैर्भुक्तं ह्यक्षयं भवेत् ॥ " इति । वसिष्ठवाक्यं तु प्रागभिहितम् ॥

## मोक्ष एव मुख्यं फलम् ।

महाप्रयोजनं त्वेतच्छास्त्रस्य सम्यग्ज्ञानाद्ब्रह्मसायुज्यमिति । तदुक्तं गर्गेण–"ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् । ज्योतिर्ज्ञानं च यो वेद स याति परमां गतिम्॥" इति । परमां गतिं ब्रह्मसायुज्यम् सूर्यसिद्धांतेऽपि–" दिव्यं चक्षुर्ग्रहर्क्षाणां दर्शितं ज्ञानमुत्तमम् । विज्ञायार्कादिलोकेषु स्थानं प्राप्नोति शाश्वतम् ॥ " इति। वराहसंहितायामपि–" न सांवत्सरपाठी च नरके परिपच्यते । ब्रह्मलोकं प्रतिष्ठां च लभते दैवचिंतकः ॥" इति। संवत्सरं वर्षमाधिकृत्य कृतो ग्रंथः सांवत्सरः–" अधिकृत्य कृते ग्रंथे " इत्यण्, आदिवृद्धिः । तं पठितुं शीलमस्य स सांवत्सरपाठी ज्योतिर्विदुच्यते । वसिष्ठेन त्वैहिकामुष्मिकरूपं फलद्वयमप्युक्तं प्राक् "एतद्बुद्ध्वा सम्यगाप्नोति नूनं धर्मं चार्थं मोक्षमग्र्यं यशश्च" इति । तस्माज्ज्योतिःशास्त्रमवश्यमध्येतव्यमिति स्थितम् ॥ ननु ज्यौतिषशास्त्राध्ययनम् न्यायशास्त्रादिवत् किं वादमात्रफलम् उत चिकित्साशास्त्रवत् प्रत्यक्षदृश्यफलम् ? उच्यते–" दृष्टे संभवत्यदृष्टफलकल्पना न न्याय्या " इतिदृष्टार्थताप्यस्य । शास्त्रस्य वादरूपं तु फलं सर्वेष्वपि शास्त्रेषु तुल्यम् । उक्तं च " अन्यानि शास्त्राणि विनोदमात्रं न किंचिदेषां तु विशिष्टमस्ति । चिकित्सितज्यौतिषमन्त्रवादाः पदे पदे प्रत्ययमावहंति " इति । प्रत्ययं विश्वासम् ॥

## अत्र प्रत्यक्षाणि अन्यफलानि।

नन्वस्मिन् शास्त्रे के वा प्रत्यया इति चेत्पृच्छसि तर्हि शृणु ॥ सूर्यचंद्रयोर्ग्रहणं जगतीतले आबालवृद्धं महान् प्रत्ययः। उक्तं च—"अप्रत्यक्षाणि शास्त्राणि विवादास्तेषु केवलम्। प्रत्यक्षं ज्योतिषं शास्त्रं चंद्रार्कौ यत्र साक्षिणौ ॥" अथान्येपि प्रत्ययाः चंद्रशृङ्गोन्नतिर्ग्रहयुतिश्च सूर्यादीनां ग्रहाणां छायागणितगताः ॥ यद्यपि भौमादीनां छाया दृग्गोचरा नास्ति तथापि नलिकादियन्त्रवेधेन यस्मिन् समये सुषिरमध्ये ग्रह आगच्छति तत्समयसंवादादर्थापत्तिप्रमाणसिद्धा छायापि प्रत्ययः। शुक्रस्य तु महामंडलत्वेन छाया दृग्गोचरापि भवति। ग्रहाणां चंद्रादीनां द्विविधा अस्तोदयाः—एके सूर्यासन्नवशेन अपरे प्रत्यहं क्षितिजसंबंधवशात् ततोऽपि सूर्यासन्नवशतो भौमगुरुशनीनां प्राच्यामेवोदयः प्रतीच्यामेवास्तः। बुधशुक्रयोस्त्वनियतः, क्षितिजसंबंधवशेन तु सर्वेषामपि सूर्यादीनां प्राच्यामेवोदयः प्रतीच्यामेवास्तः। अथायुर्दायस्येयत्ता। यात्रायां शुभशकुने शुभफलमशुभशकुनमशुभफलम्। यज्ञोपवीतविवाहादिमंगलकृत्येषु शुभलग्नाऽनुष्ठितेपूक्तफलावाप्तिः। यत्र क्वचिद्व्यभिचारः स जन्मकालीनसदसद्ग्रहवशेन। एवमादयोन्येपि प्रत्यया ऊह्याः ॥ सर्वेषामपि शास्त्राणामध्ययने साक्षाद्यदृष्टरूपं फलं तु वाचनिकमेत्र। तदस्मिन्नपि शास्त्रे तुल्यमित्यलमतिप्रसक्ताऽनुप्रसक्तेनेति शिवम् ॥ २ ॥

## अथ शुभाशुभप्रकरणं-तत्र तिथीशाः।

### तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः।
### शिवो दुर्गांतको विश्वे हरिः कामः शिवः शशी ॥ ३ ॥

अथ मुहूर्तचिंतामणिनामकग्रंथप्रकरणप्रतिज्ञामाभिधायेदानीं सामान्यतो मुहूर्तविचारार्थमुत्सर्गापवादरूपा गुणा दोषाश्च तावद्वक्तव्याः तेषां च तिथ्याद्यधीनत्वादादौ तिथयो वक्तव्याः तासां तु लोकप्रसिद्धत्वादेवावक्तव्यतायां सिद्धायां तत्स्वामिन एवानुष्टुप्छंदसाभिदधाति तिथीशा इति। एते पंचदशतिथीनां क्रमेणेशाः स्वामिनस्तानाह। वह्निकावित्यादि वह्निश्च कश्च वह्निकौ वह्निः अग्निः को ब्रह्मा अत्र "देवताद्वंद्वे च" इत्यानङ् न भवति। एकहविर्भाक्त्वेन प्रसिद्धसाहचर्याभावात्। नन्वेवं "अल्पाच्तरं पूर्वम्" इति द्वंद्वे कशब्दस्य पूर्वनिपातापत्तिरिति चेत्, "ङसिङ्योः स्मात्स्मिनौ" इति ज्ञापकेन पूर्वनिपातप्रकरणमनित्यमित्यनित्यत्वात्क्रमस्य विवक्षितत्वाच्च न भवति। एवं सति प्रतिपदो वह्निर्द्वितीयाया ब्रह्मा स्वामीत्ययमर्थः सिद्धो भवति। अथवा "तिथीशोऽग्निर्विधिर्गौरी" इत्यसंदेहार्थमेवं पठितव्यम्। "ईश ऐश्वर्ये" इति धातुकर्त्रर्थक्विबंतः तस्माद्बहुवचनं जस्। ईशते इतीशास्तिथीनामीशस्तिथीशस्तिथिस्वामिनः इत्यर्थः। अथवा 'तिथीशोरोविधिर्गौरी' इति व्यक्तं पठनीयम्। ईशशब्दोऽकारांतः। रशब्देनाग्निरुच्यते। 'रः पावके च तीक्ष्णांशौ' इति विश्वः 'रश्च कालेऽनले सूर्ये' इत्येकाक्षरनिघण्टुः। रोऽग्निः विधिर्ब्रह्मा गौरी पार्वती गणेशः प्रसिद्धः अहिः सर्पः गुहः स्वामिकार्त्तिकेयः रविः सूर्यः शिवो महादेवः दुर्गा जगदंबा अंतको यमः विश्वे विश्वेदेवाः हरिर्विष्णुः कामो मदनः शिवः स एव शशी चंद्रः। तदाह वसिष्ठः—"वह्निर्विधाताद्रिसुता गणेशः सर्पो विशाखोऽदितिजो महेशः। दुर्गा यमो विश्वहरिश्च कामः शवा निशेशश्च पुराणदृष्टाः" इति। स्वामिन इति शेषः ॥

## तिथिदेवतानिरूपणप्रयोजनम् ।

प्रयोजनं तु तत्र देवताप्रतिष्ठापूजादि । तथा च वराहसंहितायामुक्तम् "यत्कार्यं नक्षत्रे तद्दैवत्यासु तिथिषु तत्कार्यम् । करणमुहूर्त्तेष्वपि तत्सिद्धिकरं देवतानां च " इति । नारदोप्याह–"यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः ।" अग्निपुराणेपि–"प्रतिपद्यग्निपूजा स्याद्द्वितीयायां च वेधसः । दशम्यामंतकस्यापि षष्ठ्यां पूजा गुहस्य च । चतुर्थ्यां गणनाथस्य गौर्यास्तत्पूर्ववासरे ॥ सरस्वत्या नवम्यां च सप्तम्यां भास्करस्य च । अष्टम्यां च चतुर्दश्यामेकादश्यां शिवस्य च । द्वादश्यां च त्रयोदश्यां हरेश्च मदनस्य च । शेषादीनां फणीशानां पंचम्यां पूजनं भवेत् । पर्वर्णींदोस्तिथिष्वासु पक्षद्वयगतास्वपि" इति । रत्नमालायामपि "अथाऽमरस्थापनमुत्तरायणे स्वदेववारर्क्षतिथिक्षणादिषु" इति ॥

## प्रत्येकं तिथिषु कर्तव्याकर्त्तव्यकृत्यानि ।

अथ प्रत्येकं तिथिकृत्यानि ग्रंथकृदनुक्तान्यप्यस्माभिर्लिख्यंते । लोकोपयोगित्वात् । तान्याह वासिष्ठः " ( १ )–नोद्वाहयात्रोपनयप्रतिष्ठासीमन्तचौलाखिलवास्तुकर्म । गृहप्रवेशाऽखिलमंगलाद्यं कार्यं हि मासाद्यतिथौ कदाचित् ॥ १ ॥ " मासाद्यतिथौ शुक्लपक्षप्रतिपदि । अतएव कृष्णपक्षप्रतिपद्येतानि कर्माणि सुखेन भवन्तीत्यर्थः । यद्येषोऽभिप्रायोऽसम्मतः स्यात्तदा पक्षाद्यतिथाविति ब्रूयात् ॥ ( २ )–सप्तांगचिह्नानि नृपस्य वास्तुव्रतप्रतिष्ठाखिलमंगलानि । यात्राविवाहाखिलभूषणाद्यं कार्यं द्वितीयादिवसे सदैव ॥ २ ॥ ( ३ )–संगीतविद्याखिलशिल्पकर्मसीमन्तचौलान्नगृहप्रवेशम् । काय द्वितीयादिवसे यदुक्तं सदा तृतीयादिवसेपि कार्यम् ॥ ३ ॥ ( ४ ) रिक्तासु विद्युद्वधबन्धशस्त्रविषाग्निवातादि च याति सिद्धिम् । यन्मंगलं तासु कृतं विमूढैर्विनाशमायाति तदाशु नूनम् ॥ ४ ॥" रिक्तासु चतुर्थीनवमीचतुर्दशीषु ४ । ९ । १४ ॥ ( ५ )–"शुभानि कार्याणि चरस्थिराणि चोक्तान्यनुक्तान्यपि यानि तानि । सिद्धिं प्रयांत्याशु ऋणप्रदानं विनाशदं नागतिथौ विधेयम् ॥ ५ ॥ (६)–अभ्यंगयात्रापितृकर्मदन्तकाष्ठं विना पौष्टिकमंगलानि । षष्ठ्यां विधेयानि रणोपयोगिशिल्पानि वास्त्वंबरभूषणानि ॥ ६ ॥ ( ७ )–द्वितीयायां तृतीयायां पञ्चम्यां कथितान्यपि । तानि सिध्यंति कार्याणि सप्तम्यां निखिलान्यपि ॥ ७ ॥ ( ८ )–संग्रामयोग्याखिलवास्तुशिल्पनृपप्रमोदाखिललेखनानि ॥ स्त्रीरत्नकार्याखिलभूषणादिकार्याणि कार्याणि महेशतिथ्याम् ॥ ८ ॥ ( ९ )–द्वितीयायां तृतीयायां पञ्चम्यां सप्तमीतिथौ ॥ उक्तानि यानि सिध्यंति दशम्यां तानि सर्वदा ॥ ९ ॥ ( १० )–व्रतोपवासाऽखिलधर्मकृत्यं सुरोत्सवाद्याखिलवास्तुकर्म । संग्रामयोग्याखिलवास्तुकर्मविश्वेतिथौ सिध्यति शिल्पकर्म ॥ १० ॥ ( ११ )–पृथिव्यां यानि कर्माणि धर्मपुष्टिशुभानि च । चरस्थिराणि द्वादश्यां यात्रां नवगृहं विना ॥ ११ ॥ ( १२ ) विधातृगौरीभुजगभान्वंतकादिनेषु च । उक्तानि तानि सिध्यंति त्रयोदश्यां विशेषतः ॥ १२ ॥ ( १३ )–यज्ञक्रियापौष्टिकमंगलानि संग्रामयोग्याखिलवास्तुकर्म ॥ उद्वाहशिल्पाऽखिलभूषणाद्यं कार्यं प्रतिष्ठा खलु पौर्णमास्याम् ॥ १३ ॥ ( १४ )–सदैव दर्शे पितृकर्म तूक्तं नान्यद्विधेयं शुभपौष्टिकाद्यम् ॥ मूढैः कृतं तत्र शुभोत्सवाद्यं विनाशमायात्यचिराद्भृशं तत् ॥ १४ ॥" इति ॥

## आदौ शुभाशुभप्रकरणारम्भे हेतुनिरूपणम्–

ननु रत्नमालादिग्रन्थेष्वादौ संवत्सरप्रकरणमुक्तं, तदत्र किमुपेक्षितमितिचेत्, उच्यते। मुहूर्तचिन्तामणिरितिनामधेयान्मुहूर्ता एवात्रोच्यन्ते। ते तु प्रतिक्षणविचारार्हाः। तत्र संवत्सराणां वर्षव्यापित्वात्सदसत्फलोक्तावपि विवाहादिकृत्यानि भवंत्येव। कुतः। यथा सिंहराशिस्थितगुरुशुक्रास्तादिषु विवाहादिविशेषकृत्यानां प्रतिषेधसत्त्वं तथा संवत्सरसदसत्फलेषु नेति। किंच सिंहगतगुरौ शुक्रास्तादावपि नित्यानां वस्त्रपरिधानादीनां नैमित्तिकानां च पुंसवनजातकर्मनामकर्मान्नप्राशनादिकर्मणां विहितत्वान्मुहूर्तविचारोस्त्येवेत्यतोऽकथनम् संवत्सरप्रकरणस्य। अमुमेवाशयं मनस्यभिसन्धाय मुहूर्तग्रन्थं परित्यज्य स्थलान्तरे गुरुचारे वसिष्ठेन फलमुक्तम्॥ ३॥

## तिथीनां नन्दादिसंज्ञास्तत्फलानि च।

**नंदा च भद्रा च जया च रिक्ता पूर्णेति तिथ्योऽशुभमध्यशस्ताः। सितेऽसिते शस्तसमाधमाः स्युः सितज्ञभौमार्किगुरौ च सिद्धाः ४**

अथ तिथीनां नन्दादिसंज्ञाः सफला उपजातिकयाह–नन्दा चेति। नन्दाभद्राजयारिक्तापूर्णासंज्ञाः प्रतिपदादिपञ्चतिथयः स्वनामसदृशफलदाः स्युरित्येवंप्रकारेण सर्वाः षष्ठ्यादय एकादश्याद्याश्च तिथयो ज्ञेयाः। ताः सिते शुक्लपक्षे अशुभमध्यशुभफलप्रदाः स्युः। असिते कृष्णपक्षे शुभमध्यमाऽधमफलदाः स्युः। यदाह नारदः–"नन्दाभद्राजयारिक्तापूर्णाः स्युस्तिथयः पुनः। पर्यायत्वेन विज्ञेया नेष्टमध्येष्टदाः सिते। कृष्णपक्षेपीष्टमध्ये नेष्टदाः क्रमशः स्मृताः॥" इति अनिष्टमिति वक्तव्ये नेष्ट इति प्रयोगो निषेधवाचकं नशब्दमाश्रित्य नैकधेत्यादिवत्साध्यः। अथ मूले तिथ्योऽशुभमध्यशस्ता इति कथं प्रयोगः। "यावतातिथयो द्वयाः–"इत्यभिधानात्स्त्रीपुंसयोरस्ति तिथिशब्दः। तथापि तिथ्य इति "कृदिकाराद्क्तिनः" इति कृतङीषस्तिथीशब्दस्य स्त्रीलिंग एव वृत्तिः। ततस्तिथ्य इति बहुवचनांतस्याशुभमध्यशस्ता इति विशेषणे अशुभाश्च मध्याश्च शस्ताश्चेति द्वंद्वे"स्त्रियाः पुंवत्" इति "पुंवत्कर्मधारयः"इति वा समानाधिकरणोत्तरपदाभावात्पुंवद्भावाभावे चिंत्यताप्रसक्तेः। एवंचेत्कथं तर्हि रत्नमालायां–"कनिष्ठमध्येष्टफलश्च शुक्लः" इति प्रयोगे कनिष्ठाश्च मध्याश्चेष्टफलाश्चेति द्वंद्वोपि। "नंदा च भद्रा च जयाच रिक्ता पूर्णेतिसर्वास्तिथयः क्रमात्स्युः" इति सर्वापदं विशेषणसामर्थ्यात् स्त्रीलिंग एवेत्युक्तदोषप्रसंगः। मैवं वोचः। नात्र द्वंद्वः। किंतर्हि। कनिष्ठं च मध्यं चेष्टं च कनिष्ठमध्येष्टानि तादृशानि फलानि यासां ता इति द्वंद्वगर्भबहुव्रीह्याश्रयणादुक्तदोषाप्रसंगः। ननु यद्यप्येवमत्र समाहितम्। तथापि 'कृष्णे भवंत्युत्तममध्यहीनाः' इति चतुर्थचरणे कथं समाधिः। यतः फलपदाश्रवणात् द्वंद्वगर्भबहुव्रीह्यभावात् शुद्धो द्वंद्व एव समासः। सर्वापदसमभिव्याहृतस्तिथिशब्दोपि स्त्रीलिंग एवेत्युक्तौ दोषो वज्रायितः। उच्यते–तथा "द्व्येकयोर्द्विवचनैकवचने" इति पाणिनिसूत्रस्थद्व्येकयोरितिपदे संख्यावाचिनोर्द्व्येकशब्दयोर्द्वंद्वे बहुवचनप्रसंगोऽतो भावप्रधानो निर्देश इत्यभियुक्तस्मरणात्, बहुधा काव्येषु दृष्टत्वाच्च शुभमध्यशस्ता इत्येवमादीनां शब्दानां भावप्रधानत्वाच्छुभत्वमध्यत्वशस्तत्वाभिधानात्तादृशानां शब्दानां द्वंद्वं विधाय न शुभमध्यशस्तानि विद्यंते यासां ता इति सिद्धमिष्टम्। बहुव्रीहिणा

गतार्थत्वान्मतुप्न भवति । 'उक्तार्थानामप्रयोग' इत्युक्तेः । अथवा 'तुष्यतु दुर्जनः' इतिन्याय-माश्रित्य मतुपो बाधकः "अर्शआदिभ्योच" इत्यर्श आदेराकृतिगणत्वान्मत्वर्थेच्कार्यः । एतच्च समाधानं 'शस्तसमाधमा' इत्यत्रापि द्रष्टव्यम् । एवं च सति 'कृष्णे भवन्त्युत्तममध्य-हीनाः' इत्यपि सिद्धम् । अतएव नैषधीये सप्तमसर्गे-'येयं भवद्भाविपुरंध्रिसृष्टिः' इतिप्रयुक्तम् । तथा 'द्रुतमध्याविलम्बितासु वृत्तिषु' इतिमहाभाष्यकारो जगाद । अतः अनेनैवाशयेन "उभ-येऽधममध्यपूजिता द्रेष्काणैश्चरमेषु चोत्क्रमात् । अशुभेष्टसमाः स्थिरे क्रमाद्धोरायाः परि-कल्पिता दश ॥" इति वराहमिहिरोपि प्रायुङ्क्त । तथा 'सूर्यसूनुदिवसे स्थिरं पदम्' इति वसिष्ठोऽपि प्रायुङ्क्त । स्थिरपदमित्यत्र स्थैर्यप्रदमित्यर्थो विवक्षित इत्यलमतिप्रसङ्गेन ॥

## सिद्धियोगास्तत्फलानि च ।

अथ चतुर्थचरणेन सिद्धियोगानाह-सितेति । ताः कृतसंज्ञा नन्दादितिथयः शुक्रबुधमङ्गल-शनिगुरुवारेषु सिद्धाः सिद्धिकराः स्युः । यथा नन्दा शुक्रे सिद्धियोगः । एवं भद्रा बुधे । जया भौमे । रिक्ता शनौ । पूर्णा गुरौ । यदाह कश्यपः-"नन्दा तिथिः शुक्रवारे सौम्ये भद्रा कुजे जया । रिक्ता मन्दे गुरोर्वारे पूर्णा सिद्धाह्वया तिथिः"इति । वसिष्ठोपि-"शुक्राज्ञगुरुमन्देज्या वारा नन्दादिषु क्रमात् । सिद्धा तिथिः सिद्धिदा स्यात्सर्वकार्येषु सर्वदा" इति । अस्याः फल-स्तुतिमाह वसिष्ठ एव-"सिद्धा तिथिर्हन्ति समस्तदोषान्व्यान्मासशून्यानपि मासदग्धान् । दिनप्रदग्धानपि चान्यदोषानेकादशी यद्वदशेषपापम्" इति ॥ ४ ॥

## निषिद्धतिथिनक्षत्राणि वारेषु--

**नंदा भद्रा नंदिकाख्या जया च रिक्ता भद्रा चैव पूर्णा मृताकीत् ॥**
**याम्यं त्वाष्ट्रं वैश्वदेवं धनिष्ठार्यम्णं ज्येष्ठांत्यं रवेर्दग्धभं स्यात् ॥ ५ ॥**

अथ रव्यादिवारेषु यथाक्रमं निषिद्धतिथीन्निषिद्धनक्षत्राणि च शालिन्याह--नंदेति । क्रमेण अर्कात् "ल्यब्लोपे पंचमी" इति अर्कमारभ्य वारेषु नंदादितिथिर्मृताऽधमफला स्यात् । यथा सूर्ये नंदा मृता तथा सोमे भद्रा भौमे नंदा बुधे जया गुरौ रिक्ता शुक्रे भद्रा शनौ पूर्णा मृतेत्यर्थः । उक्तं च नारदेन--"आदित्यभौमयोर्नंदा भद्राशुक्रशशांकयोः । जया सौम्ये गुरौ रिक्ता शनौ पूर्णा मृतिप्रदा" इति । अत्र बहुषु नारदसंहितापुस्तकेषु मृतिप्रदा इति पाठमाश्रित्य मृतेतिपदं प्रायोजि ग्रंथकृता । तथैवास्माभिर्व्याकृतं च । सकलदेशीयाशि-ष्टसंमतत्वादापामरं तथैव व्यवहारदर्शनाच्च । वस्तुतस्तु पूर्णामृताकादित्यत्र अकारं प्रश्लिष्य अमृतेतिपदं विधेयम् । तत्रामृता अमृतफलदा स्यात् । यथा नंदा रवावमृता । एवं सोमवारा-दिष्वपीतिव्याख्येयं पूर्ववत् । अत्र संमतिरूपे जीर्णपुस्तकस्थनारदवाक्ये "शनौ पूर्णाऽमृता-ह्वया" इत्यकारादिराकारांतपाठः साधीयान् । अमृतेत्याह्वयं नाम यस्याः सा अमृताह्वये-त्यर्थः । इममर्थं सफलमाह वसिष्ठः-"नंदाभौमार्कयोर्भद्राशुक्रेंद्वोश्च जयाबुधे । शुभयोगा गुरौ रिक्ता शनौ पूर्णाऽमृताह्वया" इति । इदं वचनं वसिष्ठेन गुणनिरूपणाध्याये नि-

रूपितामित्यतोऽपि शुभत्वप्रतिपादकम् । कश्यपोऽपि तथैवाह-"आदित्यभौमयोर्नन्दा भद्रा शुक्रशशांकयोः । जया सौम्ये गुरौ रिक्ता पूर्णार्कावमृता शभा" इति । आर्कौ शनौ । एवं सत्यापि शुभत्वे शिष्टाचारेण व्यवस्था ज्ञेया ॥

## निषिद्धनक्षत्राणि वारेषु-

अथोत्तरार्धेन निंद्यनक्षत्राण्युच्यंते-याम्यमिति । रविवारादिषु याम्यं भरणी तदादीनि नक्षत्राणि यथाक्रमं दग्धनक्षत्राणि स्युः । यथा रवौ भरणी दग्धा सोमे चित्रा भौमे उत्तराषाढा बुधे धनिष्ठा गुरावुत्तराफल्गुनी शुक्रे ज्येष्ठा शनौ रेवतीति । यदाह नारदः-"यमर्क्षमर्कवारेऽब्जे चित्रा भौमे तु विश्वभम् । बुधे श्रविष्ठार्यम्णक्ष गुरौ ज्येष्ठा भृगोर्दिने ॥ रेवती शनिवारे तु दग्धयोगा भवंत्यमी" इति । लल्लः-"याम्यं चित्रोत्तराषाढा धनिष्ठोत्तरफल्गुनी । ज्येष्ठा च रेवती चैव जन्मर्क्षे भानुतः क्रमात् ॥ जन्मर्क्षग्रहसंयोगे न कुर्याच्छोभनं नरः । पाणिग्रहणयात्रादि विनाशमुपयात्यतः ॥" इति ॥ ५ ॥

## क्रकचादियोगाः तत्र त्याज्यकार्याणि--

**षष्ठ्यादितिथयो मन्दाद्विलोमं प्रतिपद्बुधे ।**
**सप्तम्यर्केऽधमा षष्ठ्याद्यामाश्च रदधावने ॥ ६ ॥**

अथ क्रकचादिनिंद्ययोगाननुष्टुभाह-षष्ठ्यादीति । षष्ठीसप्तम्यष्टमीनवमीदशम्येकादशीद्वादश्यस्तिथयो मंदात् शनैश्चराद्विलोमं विपरीतवारगणनयाऽधमाः स्युः । यथा शनौ षष्ठ्यधमा शुक्रे सप्तमी गुरावष्टमी बुधे नवमी भौमे दशमी सोमे एकादशी रवौ द्वादशी । एते योगाः क्रकचाख्या ज्ञेयाः ॥ यदाह नारदः-"त्रयोदश स्युर्मिलने संख्यायास्तिथिवारयोः । क्रकचो नाम योगोयं मंगलेष्वतिगर्हितः ॥" इति । अथ बुधे प्रतिपत्तिथिस्तथा सूर्यवारे सप्तमी संवर्त्तयोगाख्याऽधमा । उक्तंच नारदेन-"सप्तम्यामर्कवारश्चेत्प्रतिपत्सौम्यवासरे । संवर्त्तयोगो विज्ञेयः शुभकार्यविनाशकृत् ॥" इति । अथ षष्ठी आद्या प्रतिपत् अमा अमवास्या एतास्तिथयो रदधावने निंबकाष्ठादिभिर्दंतमलनिराकरणेऽधमा निषिद्धाः स्युः । उक्तं च रत्नमालायाम् "नष्टेन्दुषष्ठीप्रतिपत्सु धीमान्न जातु दंतोत्कषणं विदध्यात् । कुर्वन्नवाप्नोति तदाशु नूनं लक्ष्मीकुलज्ञातिजनोपघातम्॥" इति । कश्चिन्नवमी रविवासरेऽपि निषिद्धा । उक्तंच काशीखंडे पञ्चत्रिंशाध्याये-"प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे । दन्तानां काष्ठसंयोगो दहेदासप्तमं कुलम् ॥" इति ॥ ६ ॥

## निषिद्धतिथिषु त्याज्यवस्तूनि कार्याणि च-

**षष्ट्यष्टमीभूतविधुक्षयेषु नो सेवेत ना तैलपले क्षुरं रतम् ।**
**नाभ्यंजनं विश्वदशद्विके तिथौ धात्रीफलैःस्नानममाद्रिगोष्वसत्॥७॥**

अथ कृत्यविशेषेषु निषिद्धतिथीनिंद्रवंशाछन्दसाह-षष्ठ्यष्टमीत्यादि । षष्ठी अष्टमी च प्रसिद्धा भूतश्चतुर्दशी विधुक्षयोऽमावास्या एतासु तिथिषु क्रमेण ना पुरुषः तैलं पलं मांसं क्षुरं रतं मैथुनं यथाक्रमं न सेवेत । यथा षष्ठ्यां तैलमष्टम्यां मांसं चतुर्दश्यां क्षौरममावास्यायां मैथुनं नो सेवेतेत्यर्थः । "षेवृ सेवने" आत्मनेपदी । नृशब्दो मनुष्यजात्युपलक्षकः । तेन

स्त्रीणामप्ययं निषेधः । उक्तंच नारदेन "षष्ठ्यां तैलं तथाऽष्टम्यां मांसं क्षौरं तिथौ कलेः । पूर्णिमादर्शयोर्नारीसेवनं परिवर्जयेत् ॥" इति । कलेस्तिथौ चतुर्दश्याम् । रत्नमालायां च- "षष्ठीषु तैलं पलमष्टमीषु क्षौरक्रिया चैव चतुर्दशीषु । स्त्रीसेवनं नष्टकलासु पुंसामायुःक्षयार्थं मुनयो वदंति ॥" अत्र वचने नष्टकलास्विति वचनमाश्रित्य विधुक्षयेष्वित्युक्तम् ॥

## पर्वाणि तदादिषु वर्ज्यानि च--

वयं तु विधुक्षयशब्दः पक्षसर्वपर्वोपलक्षक इति व्याकुर्मः।तथा सति पंचपर्वसु मैथुनं न कार्य- मित्यर्थः । उक्तंच वसिष्ठसंहितायाम्-"स्त्रीसेवनं पर्वसु पक्षमध्ये पलं च षष्ठीषु च सर्वतैलम् । नृणां विनाशाय चतुर्दशीषु क्षुरक्रियास्यादसकृत्तदाशु ॥" इति । पक्षमध्ये अष्टम्यां क्वचित्सं- क्रांत्यादावपि तैलसंगो निषिद्धः । यदाह नारदः-"व्यतीपाते च संक्रांतावेकादश्यां च पर्वसु । अर्कभौमदिने षष्ठ्यां नाभ्यंगं न च वैधृतौ ॥" इति ॥ पर्वाणितु वसिष्ठेनोक्तानि- "चतुर्दश्यष्टमी कृष्णा त्वमावास्या च पूर्णिमा । पुण्यानि पञ्च पर्वाणि संक्रांतिर्दिन- पस्य च ॥" इति ॥

## अत्र तात्कालिकास्तिथयः-

अत्र निषिद्धकर्मसु तात्कालिक्यस्तिथयो ग्राह्याः । तथाच स्मृतिः-"स्नाने चाभ्यंजने चैव दन्तधावनमैथुने । तिथिस्तात्कालिकी ग्राह्या तथा मरणजन्मनोः ॥" इति । विश्वदशद्विके तिथाविति । त्रयोदशीदशमीद्वितीयास्वभ्यंजनतैलाभ्यंगो न कार्य इत्यर्थः । तदुक्तं रत्न- मालायां-"स्नातुर्जनस्य दशमी तनयांस्त्रयोदश्यर्थं निहंत्युभयमेतदपि द्वितीया" इति ॥

## नित्यादीनां ब्राह्मणस्य च नायं निषेध इत्यादि-

अयं च शारीरमलनिराकरणार्थं निषेधो नित्यनैमित्तिककाम्यव्यतिरिक्तविषयः । निर्ण- यामृते द्वितीयातिथिनिर्णये " भट्टभास्करः " इत्युक्त्वा पठितं-" स्नातुस्तनूजान्दशमी त्रयो- दश्यर्थं द्वितीयाद्वितयं निहंति । मलापहस्नाननिषेध एव न नित्यनैमित्तिककाम्यबाधः"॥एता- दृशोऽपि मलापहस्नाननिषेधो ब्राह्मणव्यतिरिक्तवर्णत्रयस्यैव । उक्तंच भट्टभास्करेण-"त्रयोदश्यां द्वितीयायां दशम्यां च विशेषतः । शूद्रविट्क्षत्रियाः स्नानं नाचरेयुः कथंचन ॥ " इति । अर्थात् ब्राह्मणस्य नायं निषेध इत्यर्थः ॥

## धात्रीफलस्नाने निषिद्धतिथयः-

धात्रीफलैरिति ॥ धात्रीफलैरामलकैः स्नानममाद्रिगोष्वसत् । अमावास्यासप्तमीनवमीषु असत् निषिद्धमित्यर्थः । उक्तंच रत्नमालायाम्-" सप्तम्यनिन्दुनवमीषु च संपदिच्छुः स्नायात्कदाचिदपि नामलकैर्मनुष्यः " इति । अत्र केचित् आमलकैः स्नातुर्दशमीतनया- न्निहंति । एवं सर्वत्र व्याख्येयम् । एवं सति दशमीद्वितीयात्रयोदशीसप्तम्यनिंदुनव- मीषु आमलकस्नाननिषेधोऽस्ति । तत्कथं भिन्नवाक्यतामादाय स्वपद्य स्पष्टैव भिन्नवाक्यता कृता । अत्राहुः स्नातुस्तनूजान्दशमीति वचनांतरानुरोधाद्भिन्नवाक्यता

स्पष्टैव। तथा च आमलकस्नाननिषेधं दीपिकाटीकायां सएव भट्टभास्करः–"सप्तम्यचन्द्रानवमीषु देहश्रीसंततीरामलकैर्नरस्य। स्नानं निहंत्यन्यदिने तु धत्ते तिलैः श्रियं पुण्यकरं सदैव" इत्याह स्म॥ अपरे पुनराहुः–सर्वास्वपि तिथिष्वामलकस्नानस्यैव निषेधो नाभ्यंगस्य। यदाह वसिष्ठः–"कामदुर्गांतकविधिनष्टेंद्वर्कदिनेषु च। सकृदामलकस्नानं सम्पत्पुत्रविनाशनम्"॥ कामस्त्रयोदशी। दुर्गा नवमी। अन्तको दशमी, विधिर्द्वितीया। नष्टेंदुरमावास्या। अर्कदिनं सप्तमी। कश्यपोपि–"षष्ठ्यां दर्शप्रतिपदिद्वादश्यां च दिनक्षये। कुर्यादामलकस्नानं दशम्यां मूढधीर्नरः॥ पुत्रनाशो भवेत्तस्य त्रयोदश्यां धनक्षयः। सम्पत्पुत्रक्षयस्तस्य द्वितीयायामसंशयम्॥ सप्तम्यां च नवम्यां च अमायां कुलनाशनम्" इति दर्शानन्तरं प्रतिपद्दर्शप्रतिपच्छुक्लप्रतिपदित्यर्थः॥ ७॥

## दग्धविषहुताशनयोगाः।

**सूर्येशपंचाग्निरसाष्टनंदा वेदांगसप्ताश्विगजांकशैलाः॥**
**सूर्यांगसप्तोरगगोदिगीशा दग्धा विषाख्याश्च हुताशनाश्च॥८॥**

अथ सूर्यादिवारेषु दग्धादियोगचतुष्टयमिन्द्रवज्रोपजातिकाभ्यामाह–सूर्येशेति॥ सूर्यशब्देन द्वादशे लक्षणया तावत्संख्या द्वादश्युच्यते। एवमीशादिशब्देष्वपि व्याख्येयम्। तत्र सूर्यो द्वादशी। ईशाः एकादशी। पंच पंचमी। अग्नयस्तृतीया। रसाः षष्ठी। अष्ट अष्टमी। नन्दा नवमी। सूर्यादिवारेष्वेतास्तिथयो दग्धा भवंति। यथा–रवौ द्वादशी दग्धा। सोमे एकादशी दग्धा। भौमे पंचमी। बुधे तृतीया। गुरौ षष्ठी। शुक्रे अष्टमी। नवमी शनौ। शनिरिक्तासिद्धियोगाश्चतुर्थीचतुर्दश्योश्चरितार्थाः। उक्तंच नारदेनोपग्रहाध्याये–"एकादशी चदुवारे द्वादशी चार्कवासरे। षष्ठी बृहस्पतेर्वारे तृतीया बुधवासरे॥ अष्टमी शुक्रवारे च नवमी शनिवासरे। पंचमी भौमवारे च दग्धयोगाः प्रकीर्तिताः॥" वसिष्ठोपि–"द्वादश्येकादशीनागगौरीस्कन्दवसुष्वपि। नवम्यां दग्धयोगाख्या भानुवारादितः क्रमात्॥" इति।

## विषयोगाः।

अथ विषयोगाः। वेदा इति। वेदाश्चतुर्थी। अंगानि षष्ठी। सप्त सप्तमी। अश्विनौ द्वितीया। गजा अष्टमी। अंका नवमी। शैलाः सप्तमी। एतास्तिथयः सूर्यादिवारेषु विषाख्या भवंति। यथा रवौ चतुर्थी विषाख्या। चन्द्रे षष्ठी भौमे सप्तमी। बुधे द्वितीया। बुधे भद्रारूपः। सिद्धियोगस्तु सप्तमीद्वादश्योश्च चरितार्थः। गुरावष्टमी। शुक्रे नवमी। शनौ सप्तमी यदाह बृहस्पतिः–"षष्ठी शशांके नवमी च शुक्रे बुधे द्वितीया तपने चतुर्थी। जीवेऽष्टमी सौरिकुजेऽह्नि सप्तमी योगा विषाख्याः कुलनाशनाः स्युः"॥ वसिष्ठोपि–"कुजार्क्योः सप्तमी षष्ठी चन्द्रे भानौ चतुर्थिका। द्वितीया ज्ञेऽष्टमी जीवे नवमी शुक्रवासरे॥ अचिकित्स्या गदायोगा मंगलेष्वेव निंदिताः"॥

## हुताशनयोगाः।

अथ हुताशनयोगाः। सूर्याङ्गेति। सूर्याः द्वादशी। अंगानि षष्ठी। सप्त सप्तमी। उरगाः अष्टमी। गावो नवमी। दिशो दशमी। ईशाः एकादशी। एतास्तिथयो रविवारादिषु हुताशनाख्या ज्ञेयाः।

यथा रवौ द्वादशी सोमे षष्ठी भौमे सप्तमी बुधेऽष्टमी गुरौ नवमी शुक्रे दशमी शनौ एकादशी हुताशनयोगाः। यथा हुताशने निक्षिप्तं वस्तु दहति तथायमुक्तो वारतिथियोगोपीत्यर्थः। यदाह गुरुः-"षष्ठ्यादितिथयः सप्त चन्द्रवारादिभिर्युताः। क्रमात्पक्षद्वयेपि स्युः सप्तयोगा हुताशनाः॥" इति। वशिष्ठोपि-"सप्तषष्ठ्यादितिथयः सोमवारादिभिर्युताः। अग्निजिह्वाः सप्त योगा मंगले कुलनाशनाः॥" इति॥ ८॥

## यमघण्टकयोगाः।

**सूर्यादिवारे तिथयो भवंति मघा विशाखा शिवमूलवह्नी॥**
**ब्राह्मं करोऽर्काद्यमघंटकाश्च शुभे विवर्ज्या गमने त्ववश्यम् ९॥**

अथ यमघण्टः। सूर्यादिवारेति। मघा विशाखा। शिव आर्द्रा। मूलम्, वह्निः कृत्तिका। समाहारद्वन्द्वः। ब्राह्मं रोहिणी। करो हस्तः। एतानि नक्षत्राण्यर्कात्सूर्यादिवारेषु यमघण्टाः स्युः। यथा-रवौ मघा यमघण्टः। सोमे विशाखा। भौमे आर्द्रा। बुधे मूलम्। गुरौ कृत्तिका। शुक्रे रोहिणी। शनौ हस्तः। उक्तं च दैवज्ञमनोहरे गर्गेण-"मघा विशाखा आर्द्रा च मूलमृक्षं च कृत्तिका। रोहिणी हस्त इत्येवं यमघंटाः क्रमाद्रवेः" इति॥ अत्र पाठांतरम्-"सूर्यादिवारे तिथयो हि पित्र्यद्वीशेशमूलाग्निविरिञ्चिहस्ताः। भवंति सूर्याद्यमघंटकाश्च शुभे विवर्ज्या गमने त्ववश्यम्" इति। अयं पाठः साधीयान्। प्राक्पाठे हि कतिचिन्नक्षत्राणि पूर्वार्द्धे द्वे तूत्तरार्द्धे इत्यसामंजस्यात्। एते दग्धादियोगाः शुभे शुभकार्ये विवर्ज्यास्त्याज्याः। तुविशेषे। गमने यात्रायां त्ववश्यं वर्ज्या यदाह मार्तंडः-"नात्र यात्रा प्रकर्तव्या कार्यान्तरमथापि वा। यमघंटादियोगोयमनर्हः सर्वकर्मसु" इति॥

## दुर्योगानामपवादः।

आवश्यकत्वे यमघंटपरिहारमाह गर्गः-"विन्ध्यस्योत्तरभागे तु यावदातुहिनाचलम्। यमघंटकदोषोस्ति नान्यदेशे कदाचन" इति। अन्यच्च "लग्नाच्छुभग्रहः केंद्रे त्रिकोणेऽवस्थितो यदि। चन्द्रो वापि न दोषः स्याद्यमघंटकसंभवः"॥ इति॥ कैश्चिदष्टौ घटिकास्त्याज्या इत्युक्तम्। तदुक्तं दीपिकायाम्-"यमघंटे त्यजेदष्टौ मृत्यौ द्वादश नाडिकाः" इति। अन्नैषां पापयोगानामपवादो वसिष्ठेनोक्तः-"दिवा मृत्युप्रदाः पापा दोषास्तेसे न रात्रिषु। शुभकार्यप्रसूतौ च सर्वदा परिवर्जयेत्"॥ ९॥

## मासभेदेन शून्यतिथयः-तत्र श्राद्धानि च।

**भाद्रे चंद्रदृशौ नभस्यनलनेत्रे माधवे द्वादशी**
**पौषे वेदशरा इषे दश शिवा मार्गेऽद्रिनागा मधौ॥**
**गोष्टौ चोभयपक्षगाश्च तिथयः शून्या बुधैः कीर्तिता**
**ऊर्जाषाढतपस्यशुक्रतपसां कृष्णे शरांगाब्धयः॥ १०॥**

**शक्राः पंच सितेशक्राद्यग्निविश्वरसाः क्रमात् ॥**

अथ चैत्रादिमासे शून्यास्तिथीः शार्दूलविक्रीडितेनानुष्टुप्पूर्वार्द्धेन चाह—भाद्रे इति । भाद्र- शब्देन भाद्रपद उच्यते । "स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः" इत्यमरः । भाद्रे भाद्रपदे मास्युभयपक्षगे शुक्लकृष्णसाधारणे । चंद्रदृशौ प्रतिपद्द्वितीये तिथी शून्ये । तथा नभसि श्रावणे मासि अनलनेत्रे तृतीयाद्वितीये उभयपक्षगे शून्ये । माधवे वैशाखे द्वादशीतिथिःशून्या पौषे वेदशराः चतुर्थीपंचम्यौ शून्ये । इषे आश्विने दशशिवाः दशम्येकादश्यौ शून्ये । मार्गे मार्गशीर्षेऽद्रिनागाः सप्तम्यष्टम्यौ शून्ये । मधौ चैत्रे गोष्टौ नवम्यष्टम्यौ शून्ये । एषु मासेषु एतास्तिथयः पक्षद्वयगाः शून्याः बुधैः कीर्तिताः । अथानुक्तमासानामूर्जाषाढतपस्यशुक्रतप- सां कार्तिकाषाढफाल्गुनज्येष्ठमाघानां कृष्णपक्षे क्रमेण शरांगाब्धयः शक्राः पञ्चपञ्चतिथयः शून्याख्याः । यथा—कार्त्तिककृष्णपक्षे पंचमीशून्या । आषाढकृष्णपक्षे षष्ठी शून्या । फाल्गुन- कृष्णपक्षे चतुर्थी शून्या ॥ १० ॥ ज्येष्ठकृष्णपक्षे चतुर्दशी शून्या । माघकृष्णपक्षे पंचमी शून्या । अथैषामेव मासानां सिते शुक्लपक्षे शक्राद्यग्निविश्वरसाः क्रमाच्छून्याः । यथा कार्ति- कशुक्लपक्षे चतुर्दशी शून्या, आषाढशुक्ले सप्तमी शून्या, फाल्गुनशुक्ले तृतीया शून्या, ज्येष्ठ- शुक्ले त्रयोदशी शून्या, माघशुक्ले षष्ठी शून्येत्यर्थः । यदाह वासिष्ठः—"अष्टमी नवमी चैत्रे पक्षयोरुभयोरपि । माधवे द्वादशी त्याज्या पक्षयोरुभयोरपि ॥ ज्येष्ठे त्रयोदशी निंद्या सिते कृष्णे चतुर्दशी । आषाढे कृष्णपक्षस्य षष्ठी शुक्ले तु सप्तमी ॥ द्वितीया च तृतीया च श्रावणे सितकृष्णयोः । प्रथमा च द्वितीया च नभस्ये मासि निंदिते ॥ दशम्येकादशी निंद्या मासीषे शुक्लकृष्णयोः । ऊर्जे चतुर्दशी शुक्ले कृष्णपक्षे तु पंचमी ॥ सप्तमी चाऽष्टमी सौम्ये पक्षयोरु- भयोरपि । पौषे पक्षद्वये चैव चतुर्थी पंचमी तथा ॥ माघे तु पंचमी षष्ठी कृष्णे शुक्ले यथाक्रमम् । तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः ॥ तिथयो मासशून्याख्या वंशवित्तविनाशदाः । आसु श्राद्धं प्रकुर्वीत नैव मंगलमाचरेत्" ॥ इति ॥

### तिथिनक्षत्रेषु दोषाः—

**तथा निन्द्यं शुभे सार्पं द्वादश्यां वैश्वमादिमे ॥ ११ ॥**
**अनुराधा द्वितीयायां पंचम्यां पित्र्यभं तथा ॥**
**त्र्युत्तराश्च तृतीयायामेकादश्यां च रोहिणी ॥ १२ ॥**
**स्वाती चित्रे त्रयोदश्यां सप्तम्यां हस्तराक्षसे ॥**
**नवम्यां कृत्तिकाष्टम्यां पूभा षष्ठ्यां च रोहिणी ॥ १३ ॥**

अथ तिथिनक्षत्रसंबंधिदोषान्सार्द्धानुष्टुब्द्वयेनाह—तथा निंद्यमिति । शुभकृत्ये द्वादश्यां सार्पमाश्लेषा निंद्या । आदिमे तिथौ प्रतिपदि वैश्वमुत्तराषाढा निंद्या । द्वितीयायामनुराधा पंचम्यां पितृभं मघा तृतीयायां त्र्युत्तराः उत्तराफल्गुन्युत्तराषाढोत्तराभाद्रपदा निंद्याः । एका- दश्यां रोहिणी त्रयोदश्यां स्वाती चित्रे सप्तम्यां हस्तराक्षसे हस्तमूले नवम्यां कृत्तिका

अष्टम्यां पूषा पूर्वाभाद्रपदेत्यर्थः ॥ यदाह चतुर्भुजमिश्रनिबंधे लल्ल:-" द्वितीयया चानुराधा ह्युत्तराश्च तृतीयया । पंचमी च मघायुक्ता चित्रास्वात्या त्रयोदशी ॥ एषु कार्यं कृतं चेत्स्यात्षण्मासान्मरणं ध्रुवम् । प्रतिपद्युत्तराषाढा नवम्यां कृत्तिका यदि ॥ पूर्वाभाद्रपदाष्टम्यामेकादश्यां च रोहिणी । द्वादश्यां च यदाश्लेषा त्रयोदश्यां मघा यदि ॥ " इति ॥ ११ ॥ १२ ॥ १३ ॥

## मासेषु शून्यनक्षत्राणि-

**कदास्रभे त्वाष्ट्रवायू विश्वेज्यौ भगवासवौ ॥**
**वैश्वश्रुती पाशिपौष्णे अजपादग्निपित्र्यभे ॥ १४ ॥**
**चित्राद्वीशौ शिवाश्व्यर्काः श्रुतिमूले यमेंद्रभे ॥**
**चैत्रादिमासे शून्याख्यास्तारा वित्तविनाशदाः ॥ १५ ॥**

अथ चैत्रादिमासेषु क्रमात् शून्यनक्षत्राण्यनुष्टुब्द्वयेनाह-कदास्रभ इति । चैत्रमासे कदास्रभे रोहिण्यश्विन्यौ । वैशाखे त्वाष्ट्रवायू चित्रास्वात्यौ । ज्येष्ठमासि विश्वेज्यौ उत्तराषाढापुष्यौ । आषाढमासे भगवासवौ पूर्वाफल्गुनीधनिष्ठे । श्रावणे विश्वश्रुती उत्तराषाढाश्रवणौ । भाद्रपदे पाशिपौष्णे । पाशी वरुणः । शततारकारेवत्यौ । आश्विने अजपात् पूर्वाभाद्रपदा । कार्त्तिके अग्निपित्र्यभे कृत्तिकामघे । अत्र पाशिपौष्णे अजपादित्यत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यत्वात् " प्लुतप्रगृह्या अचि नित्यम्" इति प्रकृतिभावेन संध्यभावः । मार्गशीर्षे चित्राद्वीशौ चित्राविशाखे । पौषे शिवाश्व्यर्काः-आर्द्राश्विनीहस्ताः । माघे श्रुतिमूले श्रवणमूले । फाल्गुनमासे यमेंद्रभे भरणीज्येष्ठे । एतास्ताराः क्रमाच्चैत्रादिमासेषु शून्यसंज्ञा ज्ञेयाः । कीदृश्यस्ताराः । वित्तविनाशदाः धननाशकराः इत्यर्थः । उक्तं च वसिष्ठसंहितायाम् । "अश्विनी रोहिणी चैत्रे शून्यभे परिकीर्तिते । चित्रास्वाती च वैशाखे ज्येष्ठे विश्वेज्यतारके ॥ भगवासवमाषाढे श्रावणे हरिविश्वभे । नभस्ये वारुणांत्यर्क्षमजपादश्वयुज्यपि ॥ कार्तिके पितृवह्न्यृक्षे सौम्ये चित्राद्विदैवते । पौषे दस्रकरार्द्राःस्युर्माघे मूलं च विष्णुभम् ॥ तपस्ये शक्रभरणी शून्यभान्याहुरग्रजाः । एषु येन कृतं कर्म स धनैः सह नश्यति ॥" ॥ १४ ॥ १५ ॥

## मासेषु शून्यराशयः-

**घटो झषो गौर्मिथुनं मेषकन्यालितौलिनः ॥**
**धनुः कर्को मृगः सिंहश्चैत्रादौ शून्यराशयः ॥ १६ ॥**

अथ चैत्रादिमासेषु शून्यराशीननुष्टुभाह-घट इति । चैत्रे घटः कुम्भः वैशाखे झषो मीनः ज्येष्ठे गौर्वृषः आषाढे मिथुनं श्रावणे मेषः भाद्रपदे कन्या आश्विनेऽलिर्वृश्चिकः कार्त्तिके तौलिस्तुला मार्गशीर्षे धनुः पौषे कर्कः माघे मृगो मकरः फाल्गुने सिंहः एते राशयः क्रमेण चैत्रमासादिषु शून्यसंज्ञकाः इत्यर्थः । उक्तं च वसिष्ठेन-"घटमत्स्यवृषायुग्ममषकन्याः सवृश्चिकाः । तुलाचापकुलीराख्यमृगसिंहाश्च राशयः ॥ चैत्रादौ मासशून्याख्या वंशवित्तविनाशदाः । तस्मात्तान्संपरित्यज्य शोभनं कारयेत्सुधीः ॥" इति ॥ १६ ॥

दग्धलग्नानि विषमतिथिषु-

**पक्षादितस्त्वोजतिथौ घटैणौ मृगेंद्रनक्रौ मिथुनांगने च ॥**
**चापेंदुभे कर्कहरी हयांत्यौ गोंत्यौ च नेष्टे तिथिशून्यलग्ने॥१७॥**

अथ विषमतिथिषु दग्धलग्नानींद्रवज्रयाह—पक्षादित इति । शुक्लकृष्णसाधारण्येन पक्षमंगीकृत्य ओजतिथौ विषमतिथिषु प्रतिपत्तृतीयादिषु घटस्तुला एणो मकर इत्यादीनि लग्नानि क्रमेण दग्धानि ज्ञेयानि । यथा प्रतिपदि तुलामकरौ पंचम्यां मिथुनकन्ये सप्तम्यां धनुःकर्कौ नवम्यां कर्कसिंहौ एकादश्यां धनुर्मीनौ त्रयोदश्यां वृषमीनौ तस्यां तस्यां तिथौ एते लग्ने नेष्टे अनिष्टौ इत्यर्थः । उक्तं च वसिष्ठसंहितायां—"मृगसिंहौ तृतीयायां प्रथमायां तुलामृगौ । पंचम्यां बुधराशी द्वौ सप्तम्यां चापचंद्रभे ॥ नवम्यां सिंहकीटाख्यावेकादश्यां गुरोर्गृहे । तस्माद्दग्धग्रहास्त्याज्याः शोभनेष्वखिलेष्वपि ॥" इति ॥ १७ ॥

उक्तदुष्टयोगापवादाः—देशभेदात् ।

**तिथयो मासशून्याश्च शून्यलग्नानि यान्यपि ॥**
**मध्यदेशे विवर्ज्यानि न दूष्याणीतरेषु तु ॥ १८ ॥**
**पंग्वंधकाणलग्नानि मासशून्याश्च राशयः ॥**
**गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः ॥ १९ ॥**

अथैषां दुष्टयोगानां शुभकृत्यावश्यकत्वे सति परिहारं नारदः स्वयमेव वचनेनैवाह—तिथय इति । स्पष्टार्थमिदं पद्यद्वयम् । पंग्वंधकाणाद्याख्यानिं लग्नानि विवाहप्रकरणे वक्ष्यन्ते । मध्यदेशो वराहसंहितायामुक्तः "भद्रारिमेदमांडव्यशाल्वनीपोज्जिहानसंख्यानाः । मरुवत्सघोषयामनसारस्वतमत्स्यमाध्यमिकाः ॥ माथुरकोपज्योतिषधर्मारण्यानि शूरसेनाश्च । गौरग्रीवौदैहिकपंचगुडाश्वत्थपांचालाः ॥ साकेतककुकुरू कालकोटिकुकुराश्च पारियात्रनगः । औदुंबरकापिष्ठकगजाह्वयाश्चेति मध्यमिदम् ॥" इति ॥ जगन्मोहनेऽपि—"केंद्रे चैव त्रिकोणे च शुभो ह्युपचयेपि वा । एकोऽपि बलवांश्चापि शून्यतिथ्युडुनाशकः ॥" इति । अयं देशाचारमनुसृत्य व्यवहारः कर्त्तव्यः ॥ १८ ॥ १९ ॥

शुभयोगा अपि दुष्टास्तिथिविशेषेण ।

**वर्जयेत्सर्वकार्येषु हस्तार्कं पंचमीतिथौ ॥**
**भौमाश्विनीं च सप्तम्यां षष्ठ्यां चंद्रेंदवं तथा ॥ २० ॥**
**बुधानुराधामष्टम्यां दशम्यां भृगुरेवतीम् ॥**
**नवम्यां गुरुपुष्यं चैकादश्यां शनिरोहिणीम् ॥ २१ ॥**

अथ समस्तशुभकार्येषु सिद्धिदानपि हस्तार्कादियोगांस्तिथिविशेषेणातिनिंद्यानन्नुष्टुब्द्वयेनाह वर्जयेदिति। सर्वशुभकृत्येषु पंचम्यां हस्तनक्षत्रं सूर्यवारं च युगपद्वर्जयेत्। एवं सप्तम्यां भौमाश्विनीमपि षष्ठ्यां सोममृगनक्षत्रे अष्टम्यां बुधानुराधां दशम्यां भृगुरेवतीं नवम्यां गुरुपुष्यम् एकादश्यां शनिरोहिणीं वर्जयेदित्यर्थः। हस्तार्कादीन् सिद्धियोगानाह नारदः-"हस्तर्क्षं सूर्यवारेंदाविंदुभं प्रथमं कुजे। सौम्ये मित्रभमाचार्ये पुष्यं पौष्णं भृगोः सुते॥ रोहिणी मंदवारे तु सिद्धियोगाह्वया अमी॥" इति। तत्र त्रितयनिषेधो दैवज्ञमनोहरे-"आदित्ये पंचमीहस्तौ सोमे षष्ठी च चंद्रभम्। भौमाश्विन्यौ च सप्तम्यामनुराधां बुधाष्टमी॥ गुरुपुष्यं नवम्यां च दशम्यां भृगुरेवतीम्। एकादश्यां शनिब्राह्मे विषयोगाः प्रकीर्तिताः॥" इति। अन्यत्रापि-"अर्के हस्तं पंचमीं च सोमे षष्ठीं च चंद्रभम्। अश्विनीं सप्तमीं सोमे बुधे मैत्रं तथाष्टमीम्॥ गुरौ पुष्यं च नवमीं रेवतीं दशमीं भृगौ। एकादशीं शनौ ब्राह्मं वर्जयेत्सर्वदा बुधः॥"इति। वसिष्ठेन त्वन्यदेव त्रितयं निषिद्धमुक्तम्-"अर्कवारेऽग्निपञ्चम्यां सोमे चित्राद्वितीयया। कुजे पूर्णेन्दुरोहिण्योः सप्तमीयाम्ययोर्बुधे॥ गुरौ मित्रत्रयोदश्योः षष्ठी श्रवणयोः सिते। पौष्णाष्टम्योः शनावेते योगा हालाहलाह्वयाः॥ एषु योगेषु कर्त्तव्यं शत्रूच्चाटनमारणम्। विवाहादिषु कार्येषु नियतं निधनप्रदम्॥" इति। अग्निः कृत्तिका पूर्णेंदुः पूर्णिमा॥ २०॥ २१॥

## सिद्धियोगाः केचित्क्वचिदतिनिन्द्याः-

**गृहप्रवेशे यात्रायां विवाहे च यथाक्रमम्॥**
**भौमाश्विनीं शनौ ब्राह्मं गुरौ पुष्यं विवर्जयेत्॥ २२॥**

अथ भौमाश्विनीत्यादिकान् सिद्धियोगान् कार्यविशेषेऽतिनिंद्यानन्नुष्टुभाह-गृहेति। नूतनगृहप्रवेशेऽतिसिद्धिदामपि भौमाश्विनीं वर्जयेत्। यात्रायां शनौ रोहिणीं वर्जयेत्। विवाहे गुरुपुष्यं विवर्जयेत्। यदाह राजमार्तंडः-"भौमाश्विनीं प्रवेशे च प्रयाणे शनिरोहिणीम्। गुरुपुष्यं विवाहे च सर्वथा परिवर्जयेत्॥" इति। ननु भौमाश्विनी तु प्रवेशे निषिद्धास्ति। कथं "व्यर्कारवारे तिथिषु रिक्तामावर्जितासु च। दिवा वा यदि वा रात्रौ प्रवेशो मंगलप्रदः॥"इति नारदोक्तेर्भौमो निषिद्धः। अश्विनी क्षिप्रसंज्ञनक्षत्रम्। तेन "क्षिप्रैश्वरैः स्यात्पुनरेव यात्रा" इति फलं, ततः सापि निषिद्धा। एवं रोहिणी यात्रायामविहिता पश्चिमायां चातिशयेन निषिद्धैव। एवं शनिवारोपि सामान्यतो नवम्यादियोगे सुतरां निषिद्ध एव। एवं पुष्योपि विवाहे निषिद्धः। गुरुवारस्तूत्तम एव। अनयोर्योगस्तु वाय्वग्निवत्सुतरां निषिद्धस्तत्कथमिदमपवादवचनम्॥ प्राप्तिपूर्वकत्वात्प्रतिषेधस्य इति। उच्यते "हस्तर्क्षमर्कवार" इत्यादिवचनाद्भौमाश्विनीत्यादेर्वा नक्षत्रयुतेः कार्यमात्रे प्रशस्ततमत्वमस्ति। यदाह राजमार्तंडः-"यदि विष्टिर्व्यतीपातो दिनं वाप्यशुभं भवेत्। हन्यतेऽमृतयोगेन भास्करेण तमो यथा। हेत्यमृताख्यो योगः सर्वाण्यशुभानि लीलया नियतम्। न भवति पुनरिह शुद्धो वैधृतिविष्टिव्यतीपाते"इति सामान्यतः कार्यमात्रप्राशस्त्यप्राप्तावपवादवचनं युक्तमेव॥

अत्र पितृचरणाः—इयं च प्रशंसाऽमृतयोगकारकनक्षत्रवारोक्तकर्मविशेषगतविशिष्टफलाभिधायिकावगंतव्या, न तु निषिद्धकर्मानुविधायिनी। अत एव पठंति—"भौमाश्विनीं प्रवेशे च प्रयाणे शनिरोहिणीम्। गुरुपुष्यं विवाहे च सर्वथा परिवर्जयेत्" इत्याहुः। अत्र समाधिः। अन्यशुभदिवसासंभवे कृत्यस्य चावश्यकत्वे भौमाश्विन्यादौ निषिद्धपि कार्यम्, कार्यमन्यथा नेति ॥ २२ ॥

अष्टाविंशतिरानन्दादियोगनामानि—

**आनंदाख्यः कालदंडश्च धूम्रो धाता सौम्यो ध्वांक्षकेतू क्रमेण ॥**
**श्रीवत्साख्यो वज्रकं मुद्गरश्च छत्रं मित्रं मानसं पद्मलुंबौ ॥ २३॥**
**उत्पातमृत्यू किल काणसिद्धी शुभोऽमृताख्यो मुसलो गदश्च ॥**
**मातंगरक्षश्चरसुस्थिराख्याः प्रवर्द्धमानाःफलदाः स्वनाम्ना ॥२४॥**

अथानन्दादीनष्टाविंशतियोगान् शालिन्युपजातिभ्यामाह—आनंदेति। स्पष्टार्थं पद्यद्वयम्। यदाह नारदः—"आनंदःकालदंडोऽथ धूम्रो धाता शुभाह्वयः। ध्वांक्षो ध्वजाख्यः श्रीवत्सवज्रमुद्गरछत्रकाः ॥ मित्रमानसपद्माख्यलुंबकोत्पातमृत्यवः। काणः सिद्धिः शुभामृतमुसलातंककुंजराः ॥ राक्षसाख्यचरस्थैर्यवर्धमानाः क्रमादमी। योगाः स्वसंज्ञाफलदास्त्वष्टाविंशतिसंख्यकाः ॥" इति ॥ २३ ॥ २४ ॥

आनन्दाद्यष्टाविंशतियोगज्ञानोपायः—

**दास्रादर्के मृगादिंदौ सार्पाद्भौमे कराद्बुधे ॥**
**मैत्राद्गुरौ भृगौ वैश्वाद्गण्या मंदे च वारुणात् ॥ २५॥**

अथैते योगाः कथं ज्ञेया इत्यनुष्टुभाह—दास्रादिति। अत्र नक्षत्राणां साभिजितां गणना कार्या। यतोऽष्टाविंशतिरेते योगाः सम्भवन्ति। तथासत्यर्कवारे दास्रादश्विनीनक्षत्रात्साभिजिद्दिननक्षत्रं गणनीयम्। तद्यत्संख्याकं स्यात्तत्संख्याको योग आनन्दादिर्भवति। यथा दिननक्षत्रं श्रवणः तदाश्विनीतः साभिजिद्गणनया त्रयोविंशतिसंख्यमस्ति। तथा सत्यानन्दादियोगेषु त्रयोविंशतिसंख्यो गदयो गोजातः। एवमिंदौ सोमवारे मृगशीर्षात्पूर्ववद्गणनया आनन्दादियोगा ज्ञेया इत्यर्थः। एवं सर्वत्र व्याख्येयम्। सार्पमाश्लेषा। करो हस्तनक्षत्रम्। मैत्रमनुराधा। अश्वमुत्तराषाढा। वारुणं शततारका। यदाह नारदः—"रविवारक्रमादेते दास्रभार्दिंदुभाद्विधौ। सार्पाद्भौमे बुधे हस्तान्मैत्रभादेवमन्त्रिणि ॥ वैश्वदेवाद्भृगुसुते वारुणाद्भास्करात्मजे" इति ॥ २५ ॥

दुष्टयोगेषु त्याज्यनाड्यः—आवश्यककृत्ये—

**ध्वांक्षे वज्रे मुद्गरे चेषुनाड्यो वर्ज्या वेदाः पद्मलुंबे गदेश्वाः ॥**
**धूम्रे काणे मौसले भूर्द्वयं द्वे रक्षोमृत्यूत्पातकालाश्च सर्वे ॥२६॥**

अथानन्दादिषु ये दुष्टयोगास्तेषां कियतां सत्यावश्यकत्वे परिहारं शालिन्याह—ध्वांक्ष इति॥ ध्वांक्षवज्रमुद्गरयोगेषु आद्या इषुनाड्यः पञ्च घट्यो वर्ज्याः। पद्मलुम्बयोगयोर्वेदाश्चतस्रो

घटिका वर्ज्याः । एवं गदे अश्वाः सप्त घटिकाः । धूम्रे भूरेकैव घटिका । काणे घटिकाद्वयम् । मुसलयोगे घटिके द्वे । राक्षसमृत्यूत्पातकालाः षष्टिघटिकात्मकाः सर्वेऽपि वर्ज्याः ।। अत्र श्लोके अनुक्तेपि चरयोगे घटिकात्रयं वर्ज्यम् । उक्तं च ज्योतिःसारसागरे "ध्वांक्षेंद्रायुधमुद्गरेषु घटिकास्त्याज्यास्तु पञ्चादितः पद्मालुंबकयोश्चतस्र उदिता धूम्र सदैका पुनः । द्वे काणे मुसलाह्वयेपि च गदे सप्तैव तिस्रश्चरे मृत्यूत्पातकरक्षसां दिनगतास्ताः कालदंडे तथा ।।" अत्र दिनशब्देनाऽहोरात्रमुच्यते ।। पद्मालुंबकयोरित्यत्राङ्प्रश्लेषश्छन्दोऽनुरोधार्थः ।। २६ ।।

## तदपवादा रवियोगाः-

सूर्यभाद्वेदगोतर्कदिग्विश्वनखसंमिते ।।
चंद्रर्क्षे रवियोगाः स्युर्दोषसंघविनाशकाः ।। २७ ।।

अथ दोषापवादभूतान् रवियोगाननुष्टुभाह-सूर्यभादिति ।। सूर्यो यस्मिन्नक्षत्रेऽस्ति ततश्चन्द्रर्क्षं यद्दिने तस्मिन् चतुर्नवषड्दशत्रयोदशविंशतिसंख्याके सति रवियोगाः स्युः। कीदृशाः। दोषाणां संघः समूहस्तस्य विनाशका इत्यर्थः । उक्तं च वसिष्ठेन-"सूर्याच्चतुर्थे दशमे च षष्ठे विश्वर्क्षके विंशतिमे नवर्क्षे । भवन्ति षड्भानुमहर्क्षयोगाः कुयोगविध्वंसकराः शुभेषु ।।" इति ।। २७ ।।

## सिद्धियोगा वारेषु नक्षत्रविशेषैः-

सूर्येऽर्कमूलोत्तरपुष्यदास्रं चंद्रे श्रुतिब्राह्मशशीज्यमैत्रम् ।।
भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पं ज्ञे ब्राह्ममैत्रार्ककृशानुचांद्रम् ।।२८।।
जीवेंत्यमैत्राश्व्यदितीज्यधिष्ण्यं शुक्रेंत्यभाग्याश्व्यदितिश्रवोभम् ।।
शनौ श्रुतिब्राह्मसमीरभानि सर्वार्थसिद्ध्यै कथितानि पूर्वैः ।।२९।।

अथ सूर्यादिवारेषु नक्षत्रविशेषैः सिद्धियोगानिंद्रवज्रोपजातिभ्यामाह-सूर्य इति । रविवारे हस्तमूलत्र्युत्तरापुष्याश्विन्यो नक्षत्राणि सिद्धियोगाः स्युः एवं चन्द्रे श्रवणरोहिणीमृगशिरःपुष्यानुराधाः सिद्धियोगाः । भौमेश्विन्युत्तराभाद्रपदाकृत्तिकाश्लेषाः, ज्ञे बुधे रोहिण्यनुराधाहस्तकृत्तिकाश्लेषाः, गुरौ रेवत्यनुराधाश्विनीपुनर्वसुपुष्याः शुक्रे रेवतीपूर्वफल्गुन्यश्विनीपुनर्वसुश्रवणाः, शनौ श्रवणरोहिणीस्वात्यो नक्षत्राणि सर्वार्थसिद्ध्यै पूर्वैश्चाचार्यैः कथितान्युक्तानि । अत्रैते सिद्धियोगाः 'दास्रादर्के मृगादिंदौ' इत्यादिप्रकारेणानन्दादिसमीचीनयोगसंबांधिनक्षत्रैरुपनिबद्धाः । अतएवानयोः पद्ययोरार्षमूलाभावः । अमुमेवाशयं मनस्यभिसंधाय जगन्मोहनज्योतिःसारसागरादिनिबन्धेषु स्वेच्छया न्यूनाधिकनक्षत्रैः सिद्धियोगा उक्ताः । तत्र भीमपराक्रमः-"मूलं रवौ पुष्यकरोत्तराणि वेधा मृगांकः श्रवणं च सोमे । कृशानुपुष्योत्तरभानि भौमे बुधेऽनुराधा वरुणः कृशानुः ।। बृहस्पतौ पुष्यपुनर्वसू च भगोऽश्विनी च श्रवणं च शुक्रे । शनैश्चरे स्वातिपितामहौ च योगाः किलैते शुभदायिनः स्युः" इति । दीपिकायां च-"ध्रुवगुरुकरमूलं पौष्णभंचार्कवारे" इत्यादिभिर्नक्षत्रैः

सिद्धियोगाभिधानं युक्तमेव । "हस्तर्क्षमर्कवारेन्दाविंदुभं प्रथमं कुजे । सौम्ये मित्रभमाचार्ये पुष्यं पौष्णं भृगोः सुते ॥ रोहिणी मन्दवारे तु सिद्धियोगाह्वया अमी ॥" इति नारदोक्तवचनार्थेऽस्मिन्पद्ये उक्ता एवेति स्वयं पुनर्नोक्ताः (?) ॥ २८ ॥ २९ ॥

### उत्पातमृत्युकाणसिद्धियोगाः—

**द्वीशात्तोयाद्वासवात्पौष्णभाच्च ब्राह्मात्पुष्यादर्यमर्क्षाद्युगर्क्षैः ॥**
**स्यादुत्पातो मृत्युकाणौ च सिद्धिर्वारेऽर्काद्येतत्फलंनामतुल्यम् ३०॥**

अथोत्पातमृत्युकाणसिद्धियोगान् शालिन्याह—द्वीशादिति । आदित्यवारादिषु क्रमात् द्वीशात् विशाखातः तोयभात् पूर्वाषाढातः वासवाद्धनिष्ठातः पौष्णभाद्रेवतीतः ब्राह्माद्रोहिणीतः पुष्यात् अर्यमर्क्षात् उत्तरफल्गुनोत आरभ्य युगर्क्षैश्चतुर्भिर्नक्षत्रैः क्रमादुत्पातमृत्युकाणसिद्धियोगाः स्युः । यथा रवौ विशाखा उत्पातः ॥ मैत्रं मृत्युः,ज्येष्ठा काणः, मूलं सिद्धिः। एवं सोमे पूर्वाषाढा उत्पातः, उत्तराषाढा मृत्युः, अभिजित्काणः श्रवणं सिद्धिः, भौमे धनिष्ठोत्पातः, शततारका मृत्युः, पूर्वाभाद्रपदा काणः, उत्तराभाद्रपदा सिद्धिः, बुधे रेवती उत्पातः, अश्विनी मृत्युः, भरणी काणः, कृत्तिका सिद्धिः, गुरौ रोहिणी उत्पातः, मृगो मृत्युः, आर्द्रा काणः, पुनर्वसुः सिद्धिः, शुक्रे पुष्य उत्पातः, आश्लेषा मृत्युः, मघा काणः, पूर्वाफाल्गुनी सिद्धिः, शनावुत्तराफाल्गुनी उत्पातः, हस्तो मृत्युः, चित्रा काणः, स्वाती सिद्धियोग इत्यर्थः । तदुक्तं नारदेन—विशाखादिचतुर्वर्गमर्कवारादिषु क्रमात् । उत्पातमृत्युकाणाख्या योगाश्चामृतसंयुताः ॥" अमृतसंयुतः अमृतसिद्धिः ॥ ननु चायं पुनरुक्तः श्लोकार्थः । आदित्यवारादिषु हि—"दास्राद्र्के मृगादिंदौ" इत्यादिक्रमेणानंदादियोगगणनया उत्पातमृत्युकाणसिद्धियोगा एव संभवंति नान्ये । किंच " सूर्येर्कमूलोत्तरपुष्यदास्रम्" इति मूलादीनामेव सिद्धियोगाऽभिधानात्त्र्युक्तिश्च । उच्यते । बालानां शीघ्रबोधनार्थं तथोक्तिः । अथवा अवश्यवर्ज्या एते उत्पातमृत्युकाणाः सिद्धियोगोऽप्यतिप्रशस्त इत्येतदर्थं तथोक्तिः ॥ ननु तर्हि देशभेदेन परिहारो वक्ष्यमाणोऽनुपपन्नः । सत्यम् कार्यस्यावश्यकर्त्तव्यत्वे समीचीनदिनांतराप्राप्तावपवादप्रवृत्तिरिति युक्तमुत्पश्यामः । तत्फलमिति । तेषामुत्पातमृत्युकाणसिद्धियोगानां फलं नामतुल्यं यस्य योगस्य यादृशं नाम तद्योगसत्त्वे प्रारब्धकार्यफलमपि तादृशमेवेत्यर्थः । उक्तं च नारदेन—"योगाश्च संज्ञाफलदास्त्वष्टाविंशतिसंज्ञकाः " इति ॥ ३० ॥

### दुष्टयोगानां देशविशेषाददुष्टत्वम्—

**कुयोगास्तिथिवारोत्थास्तिथिभोत्था भवारजाः ॥**
**हूणवंगखशेष्वेव वर्ज्यास्त्रितयजास्तथा ॥ ३१ ॥**

अथ दुष्टयोगानां देशभेदेन परिहारमनुष्टुभाह—कुयोगा इति । तिथिवारोत्थाः कुयोगाः दुष्टयोगाः क्रकचादयः तिथिभोत्थाः'अनुराधाद्वितीयायाम्' इत्यादयः भवारजाः "याम्यं त्वाष्ट्रं

वैश्वदेवम्'' इत्यादयः तथा त्रितयजारितिथिवारनक्षत्रजाः 'वर्जयेत्सर्वकार्येषु हस्तार्के पंचमीतिथौ' इत्येवमादयस्ते सर्वे दुष्टयोगाः हूणवंगखशेष्वेव हूणवंगौ प्राच्यदेशौ। खशो देश उत्तरस्यां दिशि प्रसिद्धः। तत्रैते वर्ज्याः। अन्यदेशेषु निषिद्धा न भवंतीत्यर्थसिद्धमेव। उक्तं च नारदेन-''तिथिवारोद्भवा नेष्टा योगा वारर्क्षसंभवाः। हूणवंगखशेभ्योऽन्यदेशेष्वेते शुभप्रदाः॥'' अत्र तिथिवारयोश्च युतेरुपलक्षणत्वादन्ययुतावपि परिहारो ज्ञेयः॥ ३१॥

## शुभकृत्येषु वर्ज्याः--

सर्वस्मिन्विधुपापयुक्तनुलवावर्धे निशाह्नोर्घटी
त्र्यंशं वै कुनवांशकं ग्रहणतः पूर्वं दिनानां त्रयम्॥
उत्पातग्रहतोऽद्व्यहांश्च शुभदोत्पातैश्च दुष्टं दिनं
षण्मासं ग्रहभिन्नभं त्यज शुभे यौद्धं तथोत्पातभम्॥३२॥

अथ समस्तशुभकृत्ये वर्ज्यपदार्थान् शार्दूलविक्रीडितेनाह-सर्वस्मिन्निति। हे पंडित! सर्वस्मिन् शुभे कार्ये एतानि वस्तूनि वै निश्चयेन त्यज परिहरेत्यर्थः। कानीत्यत्राह। विध्विति। विधुश्चंद्रः। पापाः ''क्षीणचंद्रसूर्य भौमशनयः। ''क्षीणेंद्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः'' इति वराहोक्तेः। राहुकेत्वोरपि पापत्वं दीपिकायामुक्तम्-''अर्धोनेंद्वर्कसौराराः पापा ज्ञस्तैर्युतोऽपरे। शुभाः पापौ तमःकेतू विष्णुधर्मोत्तरोदितौ॥'' इति। वसिष्ठेनापि-''सूर्यभौमशनिराहुकेतवः पापसंज्ञखचराः क्षयी विधुः। पूर्णचंद्रगुरुशुक्रसोमजाः सर्वकर्मसु हि सौम्यखेचराः'' इति। तत्र विधुना पापेन वा पापैर्वा युक्तौ तनुलवौ लग्ननवांशौ त्यज। ''पूर्णः क्षीणोऽपि वा चंद्रो लग्ने सर्वत्र गर्हितः'' इति कश्यपोक्तेः। श्रीपतिश्च-''सर्वार्थसिद्धिषु शशी न शुभो विलग्ने'' इति। दैवज्ञमनोहरे गुरुः-''पापेंदुलग्नगौ त्याज्यौ सर्वेण शुभकर्मसु। अक्षीणं कर्किगोजस्थं केप्याहुर्लग्नगं शुभम्॥'' इति। अथ निशाह्नोरर्धे रात्र्यर्धे दिनार्धे च घटीत्र्यंशं विंशतिपलानि दश पूर्वं दश पश्चाच्च पलानि त्यज। उक्तं च शार्ङ्गीये-''मूर्तः कालो निवसति महानिशायां दिने दले यस्मात्। दश पूर्वं दश परतस्तस्माद्वर्ज्यानि च पलानि॥'' इति। अथो कुनवांशकं पापग्रहनवांशं त्यज। यदाह नारदः-''क्रूरांशा न च ग्राह्या न शस्तास्ते नवांशकाः। कुनवांशकलग्नं यत्त्याज्यं सर्वगुणान्वितम्॥'' इति। क्रूरैः क्रूरग्रहैरुग्रा भयजनका अंशा नवांशाः न ग्राह्या इत्यर्थः॥ अथ ग्रहणतः पूर्वं दिनानां त्रयं त्यज। ग्रहणतः सूर्यचंद्रग्रहणदिनात्प्रथमं दिवसत्रयं त्याज्यम्। यदाह गर्गः-''चंद्रसूर्योपरागे तु त्र्यहं प्रागशुभं भवेत्। सप्ताहमशुभं पश्चात्स्मृतं ग्रहणशूलकम्॥'' इति। उपरागो ग्रहणम्। ''उपरागो ग्रहो राहुग्रस्ते त्विंदौ च पूष्णि च'' इत्यमरोक्तेः। उत्पातग्रहतोऽद्व्यहांश्चेति। उत्पाता नाम स्वभावतो वैपरीत्यम्। यदाह वराहः-''तेषां संक्षेपोयं प्रकृतेरन्यत्वमुत्पातः'' इति। ते चोत्पातास्त्रिविधाः-दिव्या-आंतरिक्षा भौमाश्च। तत्र दिव्यः-केत्वादिः। आंतरिक्षो-गंधर्वनगरादिः। भौमो भूमिकंपादिः। एतदप्याह वराहः-'' अपचारेण नराणामुपसर्गः पापसंचयाद्भवति।

संसूचयंति दिव्यांतरिक्षभौमांस्त उत्पाताः । दिव्यं ग्रहर्क्षवैकृतमुल्कानिर्घातपवनपारिवेषाः । गंधर्वपुरपुरंदरचापादि यदांतरिक्षं तत्॥भौमं चरस्थिरभवं तच्छांतिभिराहितं शममुपैति'' इति। ते चोत्पाता यस्मिन्दिने स्युस्तद्दिनमारभ्याग्रहान् सप्तदिनानि त्यज । यदाह नारदः– " उत्पातग्रहणादूर्ध्वं सप्ताहं निखिलग्रहे" इति । दीपिकायां च "अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने । सप्तरात्रं न कुर्वीत यात्रोद्वाहादिमंगलम् ॥ " इति ॥ अनिष्टे अकालवृष्ट्यादिदूषिते काले इति तट्टीकाकारो व्याख्यत् ॥ अग्रहानीति ॥ अग्र्यश्च तान्यहानि चेति कर्मधारयसमासे " राजाहःसखिभ्यष्टच् " इति समासांते टचि कृते " नस्तद्धिते " इति टिलोपे च " रात्राह्नाहाः पुंसि " इति पुंल्लिंगत्वम् । अतएव "त्र्यहाः प्रदेया अविशुद्धशुद्धौ" इत्यादयः प्रयोगा उपपद्यंते । तथा ग्रहतो ग्रहणत ऊर्ध्वं सप्त दिनानि त्यज । अत्र ग्रहणशब्देन सर्वग्रहणं विवक्षितम् । ततो न्यूनत्वे त्रैराशिकम् । यदाह वसिष्ठः–"सर्वग्रासे दिनान्यष्टौ सर्वकार्येषु वर्जयेत् । षड्दिनानि त्रिभागोने अर्धग्रासे चतुर्दिनम् ॥ चतुर्थांशे त्रिरात्रं स्याद्ग्रहणे चंद्रसूर्ययोः ॥ " इति । नारदोऽपि–" निःशेषे सप्तसप्त च " इत्याह । एतच्च यद्यप्यविशेषेणोक्तम् । तथापि ग्रहणानन्तरमेव ज्ञेयम् । " उत्पातग्रहणादूर्ध्वं सप्ताहं निखिलग्रहे " इति तस्यैवोक्तेः । अंगिरा अपि–" सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् । त्रिद्व्येकांगुलतो ग्रासे दिनमेकं तु वर्जयेत्॥ "इति।अनयोर्वाक्ययोर्विषयव्यवस्था देशभेदेनाचारभेदेन चावगन्तव्या । क्वचित्सामान्यतो दिनसप्तकमुक्तम् । यदाह गर्गः–"सूर्यचन्द्रोपरागौ द्वौ महादोषाह्वयावुभौ। सप्तरात्रं तयोरूर्ध्वं सर्वशोभननाशनम्॥" इति। एतदपि सर्वग्रासपरतया योज्यम् । शार्ङ्गीयविवाहपटले चन्द्रस्य सर्वग्रासे उभयतो दिनसप्तकं त्याज्यमित्युक्तम् " कृत्स्नचन्द्रग्रहे त्याज्यं प्राक् पश्चाद्दिनसप्तकम् " इति । उत्पातविशेष ग्रहणे च बहूनि दिनानि वर्ज्यान्याहुः । यदाह चंडेश्वरः–" ग्रहे रवींद्वोरवनिप्रकंपे केतूद्गमोल्कापतनादिदोषे ।त्र्यहे दशाहानि वदंति तज्ज्ञास्त्रयोदशाहानि वदंति केचित् ॥ " इति ।ग्रहे तु कार्यस्यावश्यकत्वविशेषे परिहार उक्तो ज्योतिर्निबंधे "पञ्चदिनानि वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् । यवनाचार्यस्य मतं पंचमुहूर्त्तांश्च दूषयति राहुः ॥ इति ॥

## नित्यनैमित्तिकयोर्नायं दोषः–

अयं च ग्रहणयोर्निषेधो नित्यनैमित्तिकादिकृत्यव्यतिरिक्तविषयः । यदाह गुरुः–" नित्ये नैमित्तिके काम्ये जपहोमक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥" इति। ग्रहो ग्रहणम् ।शुभदेति। उत्पातैश्च दुष्टं दिनं त्यज। शुभं कल्याणं ददाति लोकेभ्य इति शुभदा एतादृशा ये उत्पाता वसंताद्यृतुपुरस्कारेण उत्पातविशेषाः शुभा इत्युक्तम्, तादृशैरुत्पातैर्दुष्टं दूषितं दिनं द्वित्वातिरिक्तसंख्याविशेषानवगमादेकत्वस्य च प्रतीतेरेकं दिनं त्याज्यमित्यर्थः । अत्र हेतुः शुभत्वमुत्पातानाम् ।

## शुभदा उत्पातयोगाः-

शुभदोत्पातानाह ऋषिपुत्रकृतैःश्लोकैर्वराहः–"वज्राशनिमहीकंपाःसन्ध्यानिर्घातनिःस्वनाः । परिवेषरजोधूमरक्तार्कास्तमनोदयाः ॥१॥ द्रुमेभ्योंतरतः स्नेहमधुपुष्पफलोद्गमाः। गोपक्षिमधुवृद्धिश्च शिवाय मधुमाधवे॥२॥ तारोल्कापातकलुषं कपिलार्केन्दुमंडलम् । अनग्निज्वलनास्फोट-

धूमरेखानिलाकुलम् ॥ ३ ॥ रक्तपद्मारुणं सांध्यं नभः क्षुब्धार्णवोपमम् । सरितां चांबुसंशोषं दृष्ट्वा ग्रीष्मे शुभं भवेत् ॥ ४ ॥ शक्रायुधपरिवेषविद्युच्छुष्कविरोहणम् । कम्पोद्वर्तनवैकृत्यं रसनं दारणं क्षितेः ॥५॥ नद्युदपानसरसां वृद्ध्यूर्ध्वतरणप्लवाः । शीरणं चाद्रिगेहानां वर्षासु न भयावहम् ॥६॥ दिव्यस्त्रीभूतगंधर्वविमानाद्भुतदर्शनम् । ग्रहनक्षत्रातारानां दर्शनं च दिवांबरे ॥ ७ ॥ गीतवादित्रनिर्घोषो वनपर्वतसानुषु । सस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः ॥ ८ ॥ शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् । रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी॥९॥ दिशो धूमांधकाराश्च सनभोवनपर्वताः । उच्चैः सूर्योदयेऽस्ते च हेमन्ते शोभनाः स्मृताः॥१०॥ हिमवंताऽनिलोत्पाताविरूपाद्भुतदर्शनम् । कृष्णांजनाभमाकाशं तारोल्कापातपिंजरम् ॥ ११ ॥ चित्रगर्भोद्भवाः स्त्रीषु गोजाश्वमृगपक्षिषु । पत्रांकुरलतानां च विकाराः शिशिरे शुभाः ॥१२॥ ऋतुस्वभावजा ह्येते दृष्टाः स्वर्तौ शुभप्रदाः । ऋतोरन्यत्र चोत्पाता दृष्टास्ते भृशदारुणाः॥१३॥ इति । ग्रहभिन्नभमिति ग्रहैर्भौमादिभिः पंचभिर्भिन्नं सिद्धांतोक्तरीत्या भेदयोगं प्राप्तमेतादृशं भं नक्षत्रं त्यज तथा यौद्धं यन्नक्षत्रं भौमादिपंचग्रहयुद्धमध्यपतितं सद्दृश्यते तत् त्यज । तत्र क्रूरयोगादेव दोषसत्त्वे युद्धोपघातस्तु दोषाधिक्यसूचनार्थः सौम्यग्रहयुद्धे तु स एव दोषः । अत्र केचित्—यस्मिन् दिननक्षत्रे भौमादीनां युद्धं जातं तन्नक्षत्रं त्याज्यमित्याहुः, तन्न ॥ प्रमाणाभावात् । तथोत्पातभम्—उत्पातैर्दिव्यांतरिक्षभौमैर्दूषितं भं त्यज ।अयमर्थः—भौमांतरिक्षयोरुत्पातयोर्ग्रहयुद्धं चेत्प्रत्यक्षदृश्यनक्षत्राभावाद्दिननक्षत्रमेव त्याज्यम् । दिव्योत्पाते तु केत्वादिना प्रत्यक्षतो यन्नक्षत्रमाक्रांतं तत् त्याज्यम् । भौमांतरिक्षोत्पातसाहचर्याद्दिननक्षत्रमपि त्याज्यम् । एवं नक्षत्रचतुष्टयं षण्मासं, "कालाध्वनोरत्यंतसंयोगे"इति द्वितीया षण्मासमभिव्याप्येत्यर्थः। यदुक्तं शार्ङ्गीयविवाहपटले—"क्रूरैर्भुक्तं युक्तं भोग्यं च तथैव खेटयुद्धगतम् । ग्रहभिन्नकेतुहतभं त्यजेन्महोत्पातदुष्टं यत् ॥ यद्राहुसंदर्शनदुष्टमृक्षं शीतांशुयुक्तं च विवाहलग्ने । आमासषट्कं विदधीत तस्मिन्विवाहयात्रादिशुभं न चैव।"इति । नारदोपि—"ग्रहणोत्पातभं त्याज्यं मंगलेषु ऋतुत्रयम् " ति मंगलेषु 'ऋतुत्रयम्'इत्यत्र"ऋत्यकः"इति प्रकृतिभावः ॥ गुरुरपि—उत्पातैः पीडितास्तारा: षण्मासं प्रकृतिं ययुः । राहुकेतुविमुक्तं यदृक्षचक्रं निपीडितम् ॥ वत्सरार्धेन शुध्येत ग्रहयुद्धगतं च भम् । नक्षत्रग्रहयोगेन य उक्तो दोषसंचयः ॥ तमिमं सर्वकार्येषु शुभेषु परिवर्ज्जयेत् " इति ॥

## ग्रहयुद्धं चतुर्द्धा--

ग्रहयुद्धभेदाश्चत्वारः—भेदः, उल्लेखः , अंशुविमर्द्दनम्, अपसव्यं चेति । यथा वराहः—"आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनाऽसव्यैः । युद्धं चतुःप्रकारं पराशराद्यैर्मुनिभिरुक्तम् ॥ " इति । तल्लक्षणानि सूर्यसिद्धांते—" उल्लेखस्तारकास्पर्शाद्भेदे भेदः प्रकीर्त्यते । युद्धमंशुविमर्दाख्यमंशुयोगे परस्परम् ॥ अंशादूनोऽपसव्यं स्याद्युद्धमेकोऽत्र चेदणुः " इति ॥ ननु ग्रहयुद्धादिकं सिद्धांतविरुद्धम् । यतः " कक्षाः सर्वा अपि दिविषदां चक्रलिप्तांकितास्ता वृत्ते लघ्व्यो लघूनि महति स्युर्महत्यश्च लिप्ताः । तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दामन्दाक्रांता इव शशधराद्भांति यांतः क्रमेण " इति भास्कराचार्योक्तेर्ग्रहाणामुपर्यधोभावेनावस्थितानां ग्रहाणां युद्धासंभव एव । लोके हि समीपवर्तिनोः पुंसोर्युद्धादि दृश्येत । तत्कथमिदमत्र शास्त्रे ग्रहयु-

द्धोक्तिः। सत्यम् ॥ अत्र युक्तिपुरःसरं वराह एव समादधातिस्म–"वियति चरग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम्। अतिदूराऽद्दग्विषये समतामिव संप्रयातानाम् ॥ आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनाऽसव्यः। युद्धं चतुःप्रकारं पराशराद्यैर्मुनीभिरुक्तम्" इति। तेन भूवर्तिनां राज्ञामन्येषां वा शुभाशुभफलं सूचनार्थं युद्धसमागमाद्युक्तिः। ऊक्तं च सूर्यसिद्धांते–"भावाभावाय लोकानां कल्पनेयं प्रदर्शिता। स्वमार्गतःप्रयांत्येते दूरमन्योन्यमार्गतः॥इति नतु यथा ग्रहणं तिथिसंधौ भवति तथा नक्षत्रद्वयसंधौ जायमानं नक्षत्रं दूषयति किंपरं किं वा पूर्वं किंवोभयमिति॥अविशेषादुभयमिति वयं ब्रूमः।यदुक्तं शार्ङ्गीयविवाहपटले–"यस्मिन् विधुराहुरिनं च धिष्ण्ये गृह्णाति तत्त्याज्यमृतुत्रयं स्यात्। पाणिग्रहे पुंमरणं विधत्ते द्वयोर्भयोश्चद्वयमेत्र जह्यात् ॥" इति। अथासन्नपक्षद्वयग्रहणं किं द्वयोस्त्यागः षण्मासमुत कस्यचित्कश्चिद्विशेषः। अयमपि निर्णयस्तत्रैवाभ्यधायि–"पक्षांतेरेण ग्रहणद्वयं च यदा तदादिग्रहणोपगर्भम्। पक्षाद्विशुद्धं भवति द्वितीयं पाणिग्रहे शुद्ध्यति भोगषट्कात्" इत्यलमतिप्रसंगेन ॥ ३२ ॥

ग्रहणे ग्रासभेदेन त्याज्यमासनक्षत्रदिनसंख्याभेदाः–

**नेष्टं ग्रहर्क्षं सकलार्द्धपादग्रासे क्रमात्तर्कगुणेंदुमासान् ॥**
**पूर्वं परस्तादुभयोस्त्रिघस्रा ग्रस्तेस्तगे वाप्युदितेऽर्द्धखंडे ॥३३॥**

अथ ग्रासभेदेन कियत्संख्याकेषु मासेषु ग्रहणनक्षत्रनिषेधे तथा प्रागादिदिवसांश्च निषिद्धानिन्द्रवज्राछन्दसाह–नेष्टमिति। ग्रहर्क्षं ग्रहणनक्षत्रं क्रमात्संपूर्णार्द्धचतुर्थांशग्रासे सति षट्त्र्येकमासान् नेष्टम्। तथा ग्रहणभं सर्वग्रासे मासषट्कमर्द्धग्रासे मासत्रयं चतुर्थांशग्रासे मासमेकं त्यजेदित्यर्थः। यदाह गुरुः–"सर्वग्रासे तु षण्मासांस्त्रीन्मासांश्च दलग्रहे। आपादग्रहणे धिष्ण्यं मासमेकं विवर्जयेत् ॥" इति। अथ पूर्वमितिक्रमादिति चानुवर्त्तत एव। अत्रापि ग्रस्तेऽस्तगे ग्रस्तास्ते पूर्वं त्रिघस्रास्त्रिदिनं नेष्टम् ॥ पूर्वं न सम्यक् त्रिदिनमित्यर्थः। अर्थादग्रतनानि दिनानि समीचीनानि। तथा ग्रस्ते अभ्युदिते ग्रस्तोदये परस्तात् पश्चात् त्रिदिनं नेष्टम्। पूर्वं सम्यक् त्रिदिनमित्यर्थः। तथा अधखड ग्रस्तोदयग्रस्तास्तयोरभावेपि अर्धग्रासे बिंबमानादर्धग्रासे उभयोः कालयोः प्राक्पश्चात् त्रिदिनं नेष्टम्। यदाह गुरुः–"ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा। खण्डग्रासे त्रित्रिदिनं निःशेषे सप्तसप्त च ॥"इति। कश्यपोपि–"ग्रस्तोदय परो दोषो ग्रस्तास्ते वाक् शशीनयोः। ग्रुनिशार्धे तूभयं स्यात्खंडिखण्डव्यवस्थयोः" इति। वसिष्ठोपि "ग्रस्तोदये चोर्ध्वमनिष्टमादौ ग्रस्तास्तमानेप्युडुमासषट्कम्" इति। अतः खण्डग्रहणादिसद्भावेपि ग्रस्तोदयग्रस्तास्तत्वाभावात्पूर्वं पश्चाच्चोक्तदिनानि वर्ज्यानीति सर्वत्र विषये विवेकः ॥ ३३ ॥

सर्वत्रावश्यं वर्ज्याः––

**जन्मर्क्षमासतिथयो व्यतिपातभद्रावैधृत्यमापितृदिनानि**

तिथिक्षयर्द्धी ॥ न्यूनाधिमासकुलिकप्रहारर्धपातविष्कंभवज्रघटिकात्रयमेव वर्ज्यम् ॥ ३४ ॥

अथ सामान्यतोऽवश्यवर्ज्यानि पंचांगदूषणादीनि वसन्ततिलकयानुष्टुभाचाह-जन्मर्क्षेति । जन्मर्क्षमासतिथिप्रभृतयः पदार्थाः सर्वेषु कर्मसु वर्ज्या इति द्वितीयश्लोकेनान्वयः । तान् पदार्थानाह-जन्मर्क्षेति । यस्मिन्नक्षत्रे जन्म भवेत्तज्जन्मर्क्ष,यस्मिन् मासे जन्मभवेत्स जन्ममासः यस्यां तिथौ जन्म भवेत्सा जन्मतिथिः । एते वर्ज्याः । तदाह वसिष्ठः-"स्वजन्ममासर्क्षतिथिक्षणेषु वैनाशकाधृक्षगणेषु भेषु । नोद्वाहमात्माभ्युदयाभिलाषी नैवाद्यगर्भद्वितयं कदाचित्" ॥ अयं च जन्मनक्षत्रमासतिथिनिषेधः आद्यगर्भस्यैव । यदाह नारदः-"जन्ममासे न जन्मर्क्षे न जन्मदिवसेऽपि वा । आद्यगर्भस्तु तस्यापि दुहितुर्वा करग्रहः ॥" इति । अनेनाद्यगर्भव्यतिरिक्तकन्यायास्तादृशवरस्य जन्मर्क्षमासतिथिषु शुभफलत्वमुक्तं भवति । अतएवाह च्यवनः-"जन्मर्क्षेजन्ममासे वा तारायामथ जन्मनि । जन्मलग्ने भवेदूढा पुत्राढ्या पतिवल्लभा॥"इति॥

## जन्ममासलक्षणम्-

अथ जन्ममासलक्षणं जगन्मोहने वृद्धगर्गः-आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनं भवेत् । स जन्ममासो विज्ञेयो गर्हितः सर्वकर्मसु ॥ " इति । अस्यापि विशेषस्तत्रैव "जातं दिनं दूषयते वसिष्ठः पंचैव गर्गस्त्रिदिनं तथात्रिः । तज्जन्मपक्षं किल भागुरिश्च व्रते विवाहे गमने क्षुरे च ।" इति । वस्तुतस्तु यस्मिंश्चांद्रमासे चैत्रादौ जन्मभूत्स चांद्रमासो जन्ममासतया त्याज्यः इति युक्तमुत्पश्यामः । " इंद्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ॥"इति हारीतवचनात् ।"उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् । तिथिवर्ष दिनिखिलं चांद्रमानेन गृह्यते" इति कश्यपोक्तेश्च । अथात्र तिथिशब्दो वसिष्ठवाक्यस्वरसादुक्तः । अतएव नारदसंहितायां रत्नमालादिग्रंथेषु च दिवसपदं तिथिपरं व्याख्येयम् । अन्यथा जन्मवारेऽप्यतिप्रसंगः स्यात् । व्यतीपातोन्ते ॥ व्यतीपातो वर्ज्यः । सप्तविंशतियोगेषु व्यतीपातो नाम योगः स्पष्टसूर्यचंद्रयोगजन्मा सप्तदशसंख्याको निंद्यः ।उक्तं च वसिष्ठेन-"स वैधृतो यो व्यतिपातयोगः सर्वोप्यनिष्टः परिघार्धभाद्यम् " इति । तथा भद्रा वर्ज्या । भद्रा सप्तमं करणं वर्ज्यम् । यदाह वसिष्ठः-"न कुर्यान्मंगलं विष्ट्यां जीवितार्थी कदाचन । कुर्वन्नज्ञस्तदा क्षिप्रं तत्सर्वं नाशमाप्नुयात् ॥"इति । भद्राप्रवृत्तिरंगविभागकल्पनं च विशेषतोऽग्रे वक्ष्यते । तथा वैधृतिः पूर्वलक्षणलक्षितः सप्तविंशतिसंख्याको योगो निंद्यः । अत्र संमतिः पूर्वमुक्ता । अथ 'नामैकदेशे नामग्रहणम् ' इति न्यायमनुसृत्य भीमो भीमसेन इत्यादिवत् अमा अमावस्या निंद्या । " सदैव दर्शे पितृकर्म चैत्र नान्यद्विधेयं शुभपौष्टिकाद्यम् । मूढैः कृतं यच्च शुभोत्सवाद्यं विनाशमायात्यचिराद्ध्रुवं तत् ॥ " इति वसिष्ठोक्तेः । अथ पितृदिनं माता च पिता च पितरौ " पुमांस्त्रिया " इत्येकशेषः । पित्रोर्दिनं मातापित्रोर्मरणादिनम् । श्राद्धदिनमिति यावत् । तदपि निषिद्धम् । यदाह शार्ङ्गधरः-" भद्रार्द्धयामकुलिकं व्यतिपातं वैधृतिं च परिघार्द्धम् । क्रांतिसमत्वं जन्मात्संक्रांतिं क्षयदिनं पित्रोः ॥ " इति । अथ तिथिक्षयर्द्धी वर्ज्ये

क्षयश्च ऋद्धिश्च क्षयर्द्धी तिथेः क्षयर्द्धी तिथिक्षयर्द्धी । तिथिक्षयस्तिथिवृद्धिश्चैते वर्ज्ये अनयोः प्रसिद्धत्वाल्लक्षणं नोक्तं मूले ।

## तिथिवृद्धिक्षयस्वरूपादिकम्–

तत्र तिथिक्षयलक्षणं यत्र यो वारस्तिथिद्वयांतं स्पृष्ट्वा तृतीयतिथेः कंचिदादिमं भागमपि स्पृशति तत्र सा मध्यमा तिथिः क्षयसंज्ञा । यथा नवमी रवौ घटिकात्रयं पुनर्दशमी रवौ षट्पंचाशद्घटिकाः (५६) एकादश्याश्च घटिकाचतुष्टयं रविवारेण सहसंबद्धमिति दशमी तिथिः क्षयसंज्ञिता अवमसंज्ञितेत्यपि चाहुः ॥ अथ तिथिवृद्धिलक्षणं यत्र या तिथिर्वारद्वयांतं स्पृष्ट्वा तृतीयवारस्यादिमं कंचिद्भागं स्पृशति सा तिथिर्वृद्धिसंज्ञा त्रिद्युस्पृगित्यपि चेत्याहुः ॥ यथा तृतीया रवौ अष्टपंचाशघटिकाः ( ५८ ) ततश्चतुर्थी सोमे षष्टिघटिकाः ( ६० ) ततो भौमवासरे चतुर्थी घटिकात्रयम् ( ३ ) अतश्चतुर्थीतितिथिर्वारत्रयसंबन्धाद्वृद्धिसंज्ञा । यदाह वसिष्ठः–
"स्युस्तिस्रस्तिथयो वारे एकस्मिन्नवमी तिथिः । तिथिवारत्रयं चैका त्रिद्युस्पृग् द्वेऽतिनिंदिते ॥ कृतं यन्मंगलं तत्र त्रिद्युगस्पृगवमे दिने । भस्मीभवति तत्क्षिप्रमग्नौ सम्यग् यथेंधनम्" इति ॥

## तिथिक्षयवृद्धिदोषापवादः–

अथ शुभकृत्यावश्यकत्वे तिथिक्षयतिथिवृद्ध्योः परिहारमाह दोषापवादाध्याये वसिष्ठः–
"अवमाख्यं तिथेर्दोषं केंद्रगो देवपूजितः । हंति यद्वत्पापचयं व्रतं त्रैवार्षिकं यथा ॥ त्रिद्युस्पृगाह्वयं दोषं सौम्यः केंद्रगतः सदा । हंति यद्वत्पापचयमशून्यशयनव्रतम् "इति ॥ अथन्यूनाधिमासौ क्षयमासाधिकमासौ वर्ज्यौ । "असंक्रांतिमासोधिमासः स्फुटः स्याद् द्विसंक्रांतिमासः क्षयाख्यः कदाचित्" इति । द्वयोरपि लक्षणं सिद्धांतशिरोमणावभिहितम् । ग्रंथकृदपि संक्रांतिप्रकरणे " स्पष्टाऽर्कसंक्रांतिविहीन उक्तो मासोधिमासः क्षयमासकस्तु । द्विसंक्रमः "इति वक्ष्यति । एतच्च तत्रैव सम्यग्व्याख्यास्यते । तदुक्तं वसिष्ठसंहितायाम् "यस्मिन्दर्शस्यांतादर्वागेवापरं दर्शम् । उल्लंघ्य भवति भानोःसंक्रांतिः सोऽधिमासः स्यात् ॥ आद्यंतदर्शयोर्मध्ये भानोरेवांतयोर्यदा । संक्रांतिद्वितयं स्याच्चेन्न्यूनमासः स उच्यते ॥ मासप्रधानाखिलमेव कर्ममुक्त्वाखिलं कर्म न कार्यमत्र । यज्ञोपवासव्रततीर्थयात्राविवाहकर्मादि विनाशमेति" इति॥अथ कुलिकः वारसंबंधी मुहूर्तदोषो वर्ज्यः । तथा प्रहरार्द्धं वारसंबंधेनार्धयामो वर्ज्यः।यदाह वसिष्ठः–
" निधनं प्रहरार्धे तु निःसत्त्वं यमघंटके । कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः"इति॥ कुलिकादीन् दोषान् ग्रंथकृदग्रे वक्ष्यति ॥ अथ पातो महापातो महागणितसाध्यो व्यतीपातनामको वैधृतिनामकश्च वर्ज्यः । यदाह नारदः–" यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे । अपि सर्वगुणोपेतं दंपत्योर्भरणप्रदम् ॥"इति । कश्यपोपि–"महावैधृतिपाताभ्यां दूषितं लग्नमुत्तमम् । राजावधूतं पुरुषं यद्वत्तत्संपरित्यजेत्" इति ॥ पातो व्यतीपातः। महच्छब्दः प्रत्येकमभिसंबध्यते । महावैधृतिर्महाव्यतीपातश्च ताभ्यामित्यर्थः ।महापातो नाम रवींदुक्रांतिसाम्यम्। तदानयनं तु गणितग्रंथेभ्यः सूर्यसिद्धांतादिभ्यो ज्ञेयम् । ततो महापातकालं निर्णीय तत्कालस्यातिसूक्ष्मत्वात्कस्मिन्काले मंगलकृत्यनिषिद्धमित्याशंक्य महापातस्थितिकालानयनमप्युक्तं

तत्रैव । तत्प्रयोजनं सूर्यसिद्धांते-" आद्यंतकालयोर्मध्ये कालो ज्ञेयोऽतिदारुणः । प्रज्वलज्ज्वलनाकारः सर्वकर्मसु गर्हितः ॥ स्नानदानजपश्राद्धव्रतहोमादिकर्मसु । प्राप्यते सुमहच्छ्रेयस्तत्कालज्ञानतस्तथा " इति । आद्यंतकालौ स्पर्शमोक्षस्थितिरूपी । सिद्धांतशिरोमणावप्युक्तम् "पातस्थितिकालांतर्मंगलकृत्यं न शस्यते तज्ज्ञः । स्नानजपहोमदानादिकमत्रापैति खलु वृद्धिम् ॥ " इति ॥ यत्तु वसिष्ठेनोक्तं-"महापातो वैधृतिश्च उपरागसमस्तदा । तस्माद्दिनत्रयं त्याज्यं मध्यपूर्वापराभिधम्" इति । वराहेणापि बृहद्यात्रायामुक्तम्-"एष्यो धनं क्षपयति व्यतिपातयोगो मृत्युं ददाति न चिरादपि वर्तमानः।संतापशोकगदविघ्नभयान्बतीतस्तस्माद्दिनत्रयमपि प्रजहीत विद्वान्" इति ॥ तदेतद्वचनद्वयमपि महापातोपयोगिगणिताशक्त्या कदा महापातः स्यात् इति सूक्ष्ममहापातस्थितिकालाज्ञानाद्विवाहप्रकरणे "पञ्चास्याजौ" इतिवक्ष्माणरीत्या महापातसंभावनापरया पातदिवसं निर्णीय पूर्वापरवर्तमानादिनानां त्यागपरमिति प्रतिभाति ।"यस्मिन्दिने महापातस्तद्दिनं वर्ज्जयेच्छुभे " इति नारदवाक्यमप्येवमेव व्याख्येयम् । यदा तु महापातस्य स्थितिरूपसूक्ष्मकालज्ञानं स्यात्तदा 'स्थूलासूक्ष्मं ज्यायः' इति न्यायेन स एव पातमध्यकालो विवाहादिमंगलकृत्येषु त्याज्यः ॥ अन्यथा गणितग्रन्थेषु पातस्थितिकालानयनस्य वैयर्थ्यप्रसंग इति निष्कृष्टोर्थः । विष्कम्भेति । विष्कम्भवज्रयोगयोः प्रथमातिक्रमे कारणाभावादादिमं घटिकात्रयमेव वर्ज्यम् ॥ ३४ ॥

**परिघार्द्धं पंच शूले षट् च गंडातिगंडयोः ॥**
**व्याघाते नव नाडयश्च वर्ज्याः सर्वेषु कर्मसु ॥ ३५ ॥**

तथा परिघस्य परिघाख्ययोगस्य घटिकानामाद्यमर्द्धं त्रिंशद्घटिकात्मकं त्याज्यम् । शूले पंचादिमा घट्यो वर्ज्याः । गंडातिगंडयोरादिमाः षण्नाड्यो वर्ज्याः । व्याघातयोगे नवादिमा नाड्यो वर्ज्याः । यदाह श्रीपतिः-"परिघस्य चार्द्धम् । तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नव पंच शूले ॥ गंडेतिगंडे च षडेव नाड्यः शुभेषु कार्येषु विवर्ज्जनीयाः" इति ॥ ननु सवज्रे इति कस्य विशेषणं प्रथमयोगस्य वा व्याघातयोगस्य वा ॥ भिन्नभिन्नघटिकानिर्देशादुभयोस्तद्विशेषणमयुक्तम् । अत्र ब्रूमः । प्रथमस्यैव विशेषणम्। वज्रयोगसहिते प्रथमयोगे विष्कंभयोगे तिस्रो नाड्यो वर्ज्या इत्यर्थः ॥ किमत्र प्रमाणमिति चेच्छृणु, कश्यपादिवाक्यस्वरसः- यदाह कश्यपः-"विष्कंभवज्रयोस्तिस्रः षट् च गंडातिगंडयोः॥व्याघाते नवशूले तु पंचनाड्यस्तु गर्हिताः" इति । नारदोप्येवमेव । अनेन-'विष्कंभादिघटात्रयं च नवकं व्याघातवज्रोद्भवम् इति' वदन् महेश्वरः प्रत्याख्यातो भवति । एवं च'विष्कंभाद्यत्रिनाडीः शुभकृतिषु च षड्गंडयाः पंच शूले व्याघाते वज्रकेंकाः'इति केशवज्योतिर्विदुक्तिरपि चिंत्या ॥ ३५ ॥

पक्षरन्ध्रतिथयः-तत्र वर्ज्यघट्यश्च-

**वेदांगाष्टनवार्केन्द्रपक्षरन्ध्रतिथौ त्यजेत् ॥**
**वस्वंकमनुतत्त्वाशाशरा नाडीः पराः शुभाः ॥ ३६ ॥**

अथ पक्षरंध्रतिथीरावश्यकत्वे सति तन्निष्ठवर्ज्यघटीश्चानुष्टुभाह–वेदांगेति। चतुर्थी षष्ठी अष्टमी नवमी द्वादशी चतुर्दशी एताः पंच रंध्रसंज्ञास्तिथयो ज्ञेयाः। आसु शुभकृत्यावश्यकत्वे सति क्रमादादिना वस्वंकमनुतत्त्वाशाशरानाडीस्त्यजेत्। यथा चतुर्थ्यामादिमा अष्टघटिकास्त्याज्या इत्यर्थः। अथ परा उर्वरिता नाड्यः शुभकृत्ये शुभा ज्ञेयाः। यदाह दोषानिरूपणाध्याये वसिष्ठः–"चतुर्दशी चतुर्थी च अष्टमी नवमी तथा। षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वया इमाः॥ क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः। भूताष्टमनुतत्त्वांकदशशेषास्तु शोभनाः॥ दोषनाडीषु यत्कर्म शुभं सर्वं विनश्यति। विवाहे विधवा नारी व्रात्यः स्याच्चोपनायने॥ सीमंते गर्भनाशः स्यात्प्राशने मरणं ध्रुवम्। अग्निना दह्यते क्षिप्रं गृहारंभे विशेषतः॥ राजराष्ट्रविनाशः स्यात्प्रतिष्ठायां विशेषतः। किमत्र बहुनोक्तेन कृतं कर्म विनश्यति॥" कश्यपस्तु सर्वसाधारण्येन दशैव घटिकास्त्याज्या इत्याह–" अष्टमी द्वादशी षष्ठी पक्षरंध्रास्तु तासु च। मंगले सर्वदा त्याज्या नूनं हि दश नाडिकाः॥" इत्यनेन। एतस्यैव तिथिवारनक्षत्रयोगकरणात्मकस्य पंचांगस्य शुद्धिः पंचांगशुद्धिरित्युक्तं; नारदेन–"तिथिवारर्क्षयोगानां करणस्य च मेलनम्। पंचांगमस्य शुद्धिः पंचांगशुद्धिरुदाहृता॥ यस्मिन् पंचांगदोषोऽस्ति तस्मिँल्लग्ने निरर्थकम्" इति॥ ३६॥

## कुलिककालवेलायमघण्टकण्टकदोषाः--

**कुलिकः कालवेला च यमघंटश्च कंटकाः॥**
**वाराद्द्विघ्ने क्रमान्मन्दे बुधे जीवे कुजे क्षणः॥ ३७॥**

अथ कुलिककालवेलायमघंटकंटकदोषाननुष्टुभाह–कुलिक इति। वरात् वर्त्तमानवारात् मंदे शनैश्चरे गणिते सति योंऽको भवेत्तस्मिन् द्विगुणे योंऽकस्तत्संख्यः क्षणो मुहूर्तः कुलिको भवति। एवं वर्तमानवारात् बुधे जीवे कुजे गणिते ततो द्विगुणिते सति योंऽकः स क्रमात्कालवेलायमघंटकंटकसंज्ञकाः दुष्टमुहूर्ताः स्युः। यथा रवितः शनिः सप्तसंख्याकः स द्विगुणश्चतुर्दश जाताः अतस्तत्संख्याको मुहूर्तः कुलिकसंज्ञो रविवारो भवति। एवं रवावष्टमो मुहूर्तः कलिवेला,तथा रवौ दशमो मुहूर्तो यमघंटः, तथा रवौ षष्ठो मुहूर्तः कंटकसंज्ञ इत्यर्थः।एवं सोमवारादावपि कुलिककालवेलायमघंटकंटकाः स्युरित्यर्थः। यदाह कश्यपः–"शैलाक्षवेदा ७ ५ ४ स्तर्काब्धिनागाः ६ ४ ७ पंचाग्निबाहवः ५ ३ २। वेदाक्षिबाणा ४ २ ५ लोकैकेभा ३ १ ८ स्त्वक्षिगिरिवह्नयः २ ७ ३॥ चन्द्रर्तुतर्काः १ ६ ६ कुलिकयमघण्टार्द्धयामकाः प्रहरार्द्धप्रमाणास्ते भानुवारादितः क्रमात्।" इति। अत्रार्धयामः सम्पूर्णस्त्याज्योऽन्वर्थत्वात्। कुलिकयमघण्टयोस्तूत्तरार्द्धं त्याज्यम्॥ उक्तं च दैवज्ञमनोहरे–" अह्नि निशि गजांशः स्वेदिनेशादिकानां भवति तु गुरुभौमज्ञार्किकालक्रमेण। प्रभवति यमघंटः कंटकः कालवेला कुलिक इति विरुद्धस्तत्परार्द्धं निषिद्धम्" इति॥ गजांशोऽर्द्धप्रहरः। एते मुहूर्तदोषा दिनषोडशांशत्वेन ज्ञेयाः। गजांश इत्युक्त्वा तत्परार्द्धं निषिद्धमित्युक्तेः॥

## एतद्दोषफलानि-

दोषफलमाह वसिष्ठः-"निधनं प्रहरार्द्धे तु निःस्वत्वं यमघण्टके । कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः" इति । कंटककालवेलयोरन्वर्थत्वादत्रफलं नोक्तम् ।

## एतद्दोषा न रात्रौ-

'रात्रावेते न दोषदाः' इत्यस्यार्थवादो रत्नकोशे-"तमस्विनीगन्धमुपेत्य वारदोषास्तथाशक्तिमनाप्नुवंतः। अंधं समासाद्य विलासिनीनां कटाक्षबाणा इव निष्फलाः स्युः" इति । तथा च "न वारदोषाः प्रभवंति रात्रौ देवेज्यदैत्येज्यदिवाकराणाम् । दिवाशशांकार्कजभूसुतानां सर्वत्र निंद्यो बुधवारदोषः" इति ज्योतिर्निबंधकृदुक्तिः संगच्छते ॥

## यमघण्टकादिदोषापवादो देशभेदेन-

अथ शुभकृत्यावश्यकत्वे देशभेदेन यमघंटकंटकादिदोषं परिहारमाह गर्गः-"विंध्यस्योत्तरकूले तु यावदातुहिनाचलम् । यमघंटकदोषोऽस्ति नान्यदेशेषु विद्यते ॥ मत्स्यांगमगधांध्रेषु यमघंटस्तु दोषकृत् । काश्मीरे कुलिकं दुष्टमर्धयामस्तु सर्वतः ॥" इति ॥ ३७ ॥

## दुर्मुहूर्ताः वासरेषु-

**सूर्ये षट्स्वरनागदिङ्मनुमिताश्चंद्रेऽब्धिषट् कुंजरांकार्कविश्वपुरन्दराः क्षितिसुते द्व्यब्ध्यग्नितर्का दिशः ॥ सौम्ये द्व्यब्धिगजांकदिङ्मनुमिता जीवे द्विषड्भास्कराः शक्राख्यास्तिथयः कलाश्च भृगुजे वेदेषु तर्कग्रहाः॥३८॥ दिग्भास्करा मनुमिताश्च शनौ शशिद्विनागा दिशोभवदिवाकरसंमिताश्च ॥ दुष्टः क्षणः कुलिककंटककालवेलाः स्युश्चार्द्धयामयमघंटगताः कलांशाः ॥ ३९ ॥**

अथ सूर्यादिवारेषु शिष्याणां सद्य एव दोषज्ञानार्थं दुर्मुहूर्तादिनामकान् मुहूर्तान् शार्दूलविक्रीडितवसंततिलकाभ्यामाह-सूर्ये इति । रविवारे षष्ठसप्तमाष्टमदशमचतुर्दशसंख्या मुहूर्ता निंद्याः । सोमवारे चतुर्थषष्ठाष्टमनवमद्वादशत्रयोदशचतुर्दशमुहूर्ता निंद्याः ॥ भौमे द्वित्रिचतुःषड्दशसंख्या मुहूर्ता निंद्याः । बुधे द्विचतुरष्टनवदशचतुर्दशसंख्या मुहूर्ता निंद्याः । गुरौ हि षड्द्वादशचतुर्दशपंचदशषोडशसंख्यामुहूर्ता निंद्याः । शुक्रे चतुःपंचषण्नवदशद्वादशचतुर्दशसंख्या महूर्ता निंद्याः । शनौ एकद्विवसुदशैकादशद्वादशसंख्याका मुहूर्ता निंद्याः । एषु मुहूर्तेषु केषुचित् दुष्टक्षणो दुर्मुहूर्तो ज्ञेयः । केषुचित्कुलिककंटककालवेलाः स्युः । केषुचिदर्द्धयामयमघंटाः स्युः । तत्प्रमाणमाह-कलांशा इति । कलांशाः षोडशांशाः । दिनस्येति शेषः । यस्मिन्दिने कुलिकादिजिज्ञासा तद्दिने यद्दिनमानं तत्षोडशभिर्भाज्यम् । यल्लब्धं घटीपला-

त्मकं तन्मुहूर्तपरिमाणम् । तेषु मुहूर्तेषु यथासंभवं दुर्मुहूर्तादयो दोषा ज्ञातव्याः। तथाहि । रवौ चतुर्दशसंख्यो मुहूर्तो दुर्मुहूर्तः । कुलिकश्च षष्ठः कण्टकसंज्ञः। सप्तमाष्टमावर्द्धयामाख्यौ । तत्राष्टमः कालवेलाख्यश्च । दशमो यमघण्टाख्यः । एवं सोमवारादिष्वपि बोद्धव्यम् । तत्र कुलिककण्टककालवेलायमघण्टज्ञानं पूर्वश्लोकेऽभ्यधायि । दुर्मुहूर्तार्द्धयामान्विवाहप्रकरणे ' रवावर्यमा ' इत्यादिना वक्ष्यति । ननु दुर्मुहूर्तकुलिकादेर्वाचनिकस्यार्थस्य 'सूर्ये षट्स्वर' इत्यादिलघुप्रकारेणाभिधानात्पूर्वं परस्ताच्च पुनर्ग्रन्थोक्तप्रकाराभिधानमुक्तं प्रतिभाति । केचिद्दृष्टांतार्थमिदमभिधानम् । तथाहि । ग्रन्थेषु दुर्मुहूर्तकुलिककण्टककालवेलार्धयामयमघंटानां श्लोकषट्केनाभिधानात्, व्याख्यानगम्यार्थत्वाच्चेति गौरवम् । अत्र तु सर्वमप्यर्थं शब्दतः संक्षिप्य श्लोकद्वयेन व्याख्यानानपेक्षयाभिधानमिति लाघवमिति दृष्टांतदर्शनद्वारा सर्वत्र प्रकरणे लाघवसूचनार्थं शिष्याणामत्र ग्रन्थपठनादरातिशयार्थं च पुनरुक्तिः ॥ ३८ ॥ ३९ ॥

## होलिकाष्टकदोषा विवाहादौ–

**विपाशेरावतीतीरे शुतुद्र्याश्च त्रिपुष्करे ॥**
**विवाहादिशुभे नेष्टं होलिकाप्राग्दिनाष्टकम् ॥ ४० ॥**

अथ विवाहादिशुभकृत्ये होलिकाष्टकनिषेधमनुष्टुभाह–विपाशेति । विपाशा नदी इरावती च ते नद्यौ पश्चिमदेशे प्रसिद्धे । एतयोर्नद्योस्तीरवर्तिदेशेषु तथा शुतुद्री नदी सापि तत्रैव प्रसिद्धा । तस्या अपि तीरवर्तिदेशेषु तथा त्रिपुष्कराख्ये च होलिका फाल्गुनपौर्णमास्यामग्निदाहः । ततः प्राक् दिनाष्टकं विवाहादिशुभकृत्ये नेष्टं निषिद्धमित्यर्थः । अत्र तावद्धोलिकाष्टकनिषेधः शीघ्रबोधे–" शुक्लाष्टमीं समारभ्य फाल्गुनस्य दिनाष्टकम् । पूर्णिमावधिकं त्याज्यं होलाष्टकमिदं शुभे ॥" इति ॥

## अस्यापवादः–

अस्यापवादोपि तत्रैव "शुतुद्र्यां च विपाशायामैरावत्यां त्रिपुष्करे । होलाष्टकं विवाहादौ त्याज्यमन्यत्र शोभनम् " इति ॥ ४० ॥

## मृत्युक्रकचदग्धादिषु मतान्तराणि–

**मृत्युक्रकचदग्धादीनिंदौ शस्ते शुभाञ्जगुः ॥**
**केचिद्यामोत्तरं चान्ये यात्रायामेव निंदितान् ॥ ४१ ॥**

मृत्युक्रकचेति ॥ मृत्यवो मृत्युयोगा आनंदादिष्वष्टाविंशतियोगेषु 'द्वाक्षादर्के' इत्यादिना प्रागुक्ताः । क्रकचः–'षष्ठ्यादितिथयो मंदाद्विलोमम्' इत्युक्तः । दग्धयोगः 'सूर्येशपंचाग्निरसाष्टनंदा' इत्युक्तः । आदिशब्देन विषयोगा हुताशनयोगाश्च गृह्यंते । चंद्रे शस्ते समीचीने सति । समीचीनत्वं गोचरप्रकरणे वक्ष्यते । मृत्युक्रकचदग्धादीन् शुभान् अनिष्टफलमपास्य शुभफलदान् जगुरूचुः । यदाह राजमार्तंडः " क्रकचो मृत्युयोगाख्यो दिनं दग्धं तथैव च । चंद्रे शुभे क्षयं यांति वृक्षा वज्रहता इव ॥ " इति । केचिदाचार्या यामोत्तरं मृत्युक्रकचदग्धादीनशुभाञ्जगुः। तथा च दीपिकायां राजमार्तण्डः–"उत्पाते यमघण्टे च काणे च क्रकचे तथा । तिथौ दग्धे च काले च प्रयामात्परतः शुभम् ॥" इति ॥

मृत्युक्रकचदग्धयोगफलं यात्रायामेवेति केचित्-

अन्ये आचार्या मृत्युक्रकचदग्धादीन् यात्रायामेव निंदितान् जगुः । विवाहादीनि तु प्रतिषेधाभावादवश्यं कार्याणि । यदाह लल्लः-"वारर्क्षतिथियोगेषु यात्रामेव च वर्जयेत् । विवाहादीनि कुर्वीत गर्गादीनामिदं वचः" इति ॥ वारर्क्षतिथियोगेषु निंद्येष्विति शेषः ॥ ४१ ॥

पुनरप्यस्यापवादः-

**अयोगे सुयोगोपि चेत्स्यात्तदानीमयोगं निहत्यैष सिद्धिं तनोति॥परे लग्नशुद्धया कुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वं च शस्तम् ॥ ४२ ॥**

अथ पुनरप्यपवादं भुजंगप्रयातेनाह-अयोग इति । अयोगे क्रकचादौ सति सुयोगः सिद्धियोगोपि चेत् स्यात्तदा एष सिद्धियोगः अयोगम् अयोगफलं निहत्य सिद्धिं कार्यसिद्धिं तनोति निष्पादयति । यदाह राजमार्तंडः-"अयोगः सिद्धियोगश्च द्वावेतौ भवतो यदि । अयोगो हन्यते तत्र सिद्धियोगः प्रवर्तते ॥" इति । अन्यच्च "हंत्यमृताख्ययोगः सर्वाण्यशुभानि लीलया नियतम् । न भवति पुनरिह शक्तो वैधृतिविष्टिव्यतीपाते ॥"इति ॥ यत्तु दीपिकाकारवचनं-"यदि विष्टिर्व्यतीपातो दिनं वाप्यशुभं भवेत् । हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥" इति । तदमृतयोगस्यातिप्राशस्त्यसूचनार्थं नतु भद्राव्यतीपातादिदोषापवादत्वार्थम् । 'हंत्यमृताख्ययोगः' इत्येकवाक्यताबलात् ॥ परे आचार्या लग्नशुद्धया समीचीनलग्नबलेन कुयोगानां मृत्युक्रकचादीनां नाशम् । वदंतीति शेषः । यदाह स एव-"यत्र लग्नं विना कर्म क्रियते शुभसंज्ञकम् । तत्र तेषामयोगानां प्रभावाज्जायते फलम्" अथावश्यकशुभकृत्ये कालांतरप्रतीक्षाऽयोग्यतायां परिहारमाह-विष्टिपूर्वमिति । विष्टिर्भद्रा तत्पूर्वं तदादि व्यतीपातादिकं दिनार्धोत्तरं मध्याह्नादनंतरं शस्तं प्राहुः । अर्थान्मध्याह्नं यावत्कालो निषिद्धः "विष्टिरंगारकश्चैव व्यतीपातश्च वैधृतिः । प्रत्यरिं जन्मनक्षत्रं मध्याह्नात्परतः शुभम् ॥" इति तेनैवोक्तत्वात् ॥ ४२ ॥

( विष्टि ) भद्रानिषिद्धकालः-

**शुक्ले पूर्वार्द्धेऽष्टमीपंचदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे ॥ कृष्णेंत्यार्द्धे स्यात्तृतीयादशम्योःपूर्वे भागे सप्तमीशंभुतिथ्योः ४३॥**

अथ भद्रा निषिद्धेति पूर्वमुक्तम् । तदधुना प्रस्तावात्तन्निषिद्धकालं शालिनीछंदसाह-शुक्ल इति । शुक्लपक्षे अष्टम्यां पूर्णिमायां च पूर्वार्द्धे भद्रा भवति । एकादश्यां चतुर्थ्यां चोत्तरार्द्धे भद्रा । कृष्णे कृष्णपक्षे तृतीयायां दशम्यां चांत्यार्धे उत्तरार्धे भद्रा स्यात् । सप्तम्यां शंभुतिथौ चतुर्दश्यां च पूर्वभागे पूर्वार्द्धे भद्रा स्यात् । पूर्वे इति । "पूर्वादिभ्यो नवभ्यो वा" इति अस्मिन्नभावपक्षे रूपम् । अष्टम्यादीनां तिथीनां गतभोग्यघटिकायोगार्धं भद्राप्रमाणमिति यावत् ॥ "तिथेर्गतैष्यैक्यदलं तन्मानं करणं भवेत्"इति बोपदेवोक्तेः । "तिथ्यर्धभागं सर्वेषां करणानां प्रकल्पयेत्" इति सूर्यसिद्धांतोक्तेश्च ॥ उक्तं च दीपिकायां-"तृतीया-

दशमीशेषे तत्पचंम्योस्तु पूर्वतः । कृष्णे विष्टिः सिते तद्वत्तासां परतिथिष्वपि ॥" इति । बृहस्पतिना स्पष्टमुक्तम्—"सिते चतुर्थ्यामंत्यार्द्धमष्टम्याद्यार्धमेव च । एकादश्यां परार्धं तु पूर्वार्धं पूर्णशीतगौ ॥ कृष्णे तृतीयांत्यार्धं हि सप्तम्याद्यार्धमेव च । दशम्यामुत्तरार्द्धं तु चतुर्दश्यर्द्धमादितः॥ विष्ट्याख्योयं महादोषः कथितोऽत्र समस्तगः । तदानीं कृतसत्कर्म कर्त्रा सह विनश्यति ॥" इति । पूर्णशीतगौ पूर्णिमायाम् ॥

## भद्रानामानि—तत्स्वरूपं च—

रत्नकोशे प्रत्येकं भद्रानामानि—"हंसी नंदिन्यपि च त्रिशिराः सुमुखी करालिका चैव । वैकृतिरौद्रमुखी च चतुर्मुखी विष्टयः क्रमशः" इति॥ चतुर्थ्यादितिथिसंबंधिभद्रानामाभिधानं नामसादृश्येन फलतारतम्यसूचनार्थम् । भद्रास्वरूपं रत्नमालायाम्—"उद्बद्धोद्धटतरपीडिताऽतिकृष्णा दंष्ट्रोग्रा पृथुहनुगंडदीर्घनासा । कार्यघ्नी हुतवहनं समुद्गिरंती विश्रांतः पतति समंततोऽत्र विष्टिः" इति ॥ ४३ ॥

## भद्राया मुखपुच्छादिविभागः—

**पंचद्व्यद्रिकृताष्टरामरसभूयामादिघटयः शराः**
**विष्टेरास्यमसद्गजेंदुरसरामाद्र्यश्विबाणाब्धिषु ॥**
**यामेष्वंत्यघटीत्रयं शुभकरं पुच्छं तथा वासरे**
**विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ तु पूर्वार्धजा ॥ ४४ ॥**

अथ चतुर्थ्यादितिथिषु भद्राया मुखपुच्छविभागादिकं शार्दूलविक्रीडितेनाह-पंचेति। चतुर्थ्यादितिथीनां क्रमतः पंचमादिप्रहरेषु शराः पंच नाड्यः आदिमा विष्टेर्भद्राया आस्यं मुखम् । यथा चतुर्थ्याः पंचमप्रहरे आदिभूताःपंचघट्यो भद्रामुखम्॥ एवमष्टम्या द्वितीयप्रहरे एकादश्याःसप्तमप्रहरे पौर्णमास्याश्चतुर्थप्रहरे तृतीयाया अष्टमप्रहरे सप्तम्यास्तृतीयप्रहरे चतुर्दश्याः प्रथमप्रहरे भद्रामुखमित्यर्थः । तद्भद्राया मुखमसदशुभमित्यर्थः। पुनश्चतुर्थ्यादितिथीनां क्रमेण गजादिप्रहरेषु अंत्यम् अंते भवमंत्यम् "दिगादिभ्यो यत्" इति यत् । घटीत्रयं पुच्छं पुच्छसंज्ञम् । तच्छुभकरं समस्तकार्येष्वित्यर्थः । यथा चतुर्थ्या अष्टमप्रहरस्यांत्यघटीत्रयं भद्रापुच्छम् । एवमष्टम्याः प्रथमप्रहरस्य एकादश्याः षष्ठप्रहरस्य पूर्णिमायास्तृतीयप्रहरस्य तृतीयायाः सप्तमप्रहरस्य सप्तम्याःद्वितीयप्रहरस्य दशम्याः पंचमप्रहरस्य चतुर्दश्याश्चतुर्थप्रहरस्यांत्यघटीत्रयं भद्रापुच्छमित्यर्थः।यदाह गुरुः—"भूतदशस्वरांभोधिवसुवह्न्यंगरूपकाः। यामेष्वेषु क्रमादास्यं भवेत्तिथ्यर्द्धविष्टिषु" इति । व्यवहारसमुच्चये—"दशम्यामष्टम्यां प्रथमघटिकापंचकपरं हरिद्युःसप्तम्यां द्विदश १२ घटिकांते त्रिघटिकम् । तृतीयाराकायां खयम २० घटिकाभ्यः परभवं शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे" इति ॥ हरिद्युरेकादशी । राका पूर्णिमा ॥ ननु भद्रा देवतेत्यभिधीयते । तस्याः पुच्छकथनात्तु पशुत्वसिद्धिर्दृश्यते । देवता च कथं पशुर्भवितुमर्हति। सत्यम् । दैत्येन्द्रैर्देवेषु पराजितेषु रुद्रस्य ज्वालामालाकुलनेत्रालोकितशरीरादेवी भद्रासंज्ञा मुखपुच्छादिम-

त्युत्पन्ना सती दैत्यान् जघान । यदुक्तं श्रीपतिना—"दैत्येन्द्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान्स्वं कायं किल निर्गता खरमुखी लांगूलिनी च त्रिपात् । विष्टिः सप्तभुजा मृगेंद्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणप्रान्ते नियुक्ता सदा ॥" इति ॥

## करणानि—तत्र भद्रा—

करणान्याह गर्गः—"बवं च बालवं चैव कौलवं तैतिलं गरम् । वणिजं विष्टिरित्याहुः करणानि चराणि तु । अंते कृष्णचतुर्दश्याः शकुनिर्दर्शभागयोः। भवेच्चतुष्पदं नागं किंस्तुघ्नं प्रतिपद्दले" इति । विष्टिर्भद्रा ॥ अतः 'तिथ्यर्धभागः करणम्' इत्युक्तेः प्रतिपत्पूर्वार्धे स्थिरकरणं किंस्तुघ्नम् । ततो बवकरणं प्रतिपद्द्वितीयार्द्धे । बालवकौलवकरणे द्वितीयायाः पूर्वोत्तरार्धयोः । तैतिलगरकरणे तृतीयापूर्वोत्तरार्धयोः। चतुर्थीपूर्वार्धे वणिक् उत्तरार्द्धे तु भद्रा । एवं पंचमीषष्ठीसप्तमीषु बवबालवकौलवतैतिलगरवणिक्करणानि भवंति । ततोऽष्टम्या ह्यर्द्धे भद्रा भवति॥ एवं पुनः पुनरावृत्तावुक्ततिथिषु भद्रा ज्ञेया । अत एवोक्तम् "शुक्ले पूर्वार्द्धेऽष्टमीपंचदश्योः" इत्यादि । एवं चतुर्दश्याः पूर्वार्द्धे भद्रा, उत्तरार्द्धादारभ्य शकुन्यादीनि स्थिरकरणानि चत्वारि ॥

## भद्राकृत्यम्—

भद्राकृत्यमाह वसिष्ठः—"वधबंधविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत् । तुरंगमहिषोष्ट्रादिकर्म विष्ट्यां तु सिध्यति ॥ न कुर्यान्मंगलं विष्ट्यां जीवितार्थी कदाचन । कुर्वन्नज्ञस्तदा क्षिप्रं तत्सर्वं नाशयेत्पुमान् " इति ॥

## भद्रांगविभागः—तत्फलं च—

तत्रांगविभागः फलं च कश्यपसंहितायाम्—"मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः । नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छे तु नाडिकाः॥ कार्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता । कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः" इति ॥

## तत्र नाडीभेदे विशेषः—

अयं च भद्रांगविभागो नाडीनां त्रिंशतोक्तः । त्रिंशतो न्यूनाधिकत्वे तु त्रैराशिकेन मुखादीनामंगानां विभागो ज्ञेयः । यथा यदि नाडीत्रिंशता इदमुक्तमंगपरिमाणं तदेष्टपरिमाणेन त्रैराशिकम् । एवं सति उक्तांगपरिमाणं भद्राभोगमितघटीभिः संगुण्य त्रिंशता भाज्यम् । लब्धसमोंगविभागः । त्रैराशिकस्वरूपं लीलावत्यामुक्तम्—"प्रमाणमिच्छा च समानजाती आद्यंतयोस्तत्फलमन्यजाति । मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलं व्यस्तविधिर्विलोमे" इति ॥

## तत्र मुखादिकालः—

तत्र मुखादिकालो रत्नमालायाम्—" जलशिखिशशिरक्षःशर्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः । नियतमृषिभिराशासंख्ययाप्रक्रमेण स्फुटमिह परिहार्यं मंगलेष्वेतदेव " इति ॥ जलं वरुणः । कीनाशो यमः । शुक्लचतुर्थ्यां उत्तरार्धे पश्चिमदिशि भद्रामुखम् । तच्चाशासंख्यया क्रमेण पंचमे प्रहरे भवति । अर्थादेव भद्रायाः प्रहरचतुष्टयाधिकास्थितिभावादेते एव घटिकात्रयं पुच्छम् । ततोऽष्टम्यां द्वितीयप्रहरे

तेन प्रकारेण आग्नेय्यां दिशि मुखं मुखाच्च प्राक् पुच्छमिति प्रथमप्रहरांत एव पुच्छघटिका इत्येवं सर्वास्वपि भद्रातिथिष्ववगंतव्यम् ॥

## तत्प्रयोजनम्–

प्रयोजनमपि तत्रैव–" मनुवसुमुनितिथियुगदशशिवगुणसंख्यासु तिथिषु पूर्वस्याः। आयाति विष्टिरेषा पृष्ठे शुभदा पुरस्त्वशुभा " इति। तदेतदात्ययिककार्यसंभवे सति मुखादिक्संमुखयात्रानिषेधकमवधेयम्। ग्रन्थान्तरेऽन्यदप्युक्तम्–" असिते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी। सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च " इति ॥

## निशि दिवा वा भद्रोत्पत्तिफलविभागः–

अथ परिहारमाह–तथेति। विष्टिस्तिथ्यपरार्धजा तिथ्युत्तरार्धे संभूतावासरे दिवसे यदि स्याद्भद्रा तदा शुभकरी। तेनैव प्रकारेण तिथिपूर्वार्द्धजा भद्रा रात्रौ चेत्स्यात्तदा शुभा शुभकरी स्यात्। उक्तं च–"रात्रिभद्रा यदाह्नि स्याद्दिवाभद्रा यदा निशि। न तत्र भद्रादोषः स्यात्सा भद्रा भद्रदायिनी ॥" इति। रात्रिभद्रा तिथ्युत्तरार्धोद्भवा दिवाभद्रा तिथिपूर्वार्धोद्भवा। अमुमर्थं स्पष्टमाह गुरुः–" निशि पूर्वार्धजा विष्टिर्दिवा चपरतः शुभा। क्रमागता तु या विष्टिः सैव हालाहलोपमा ॥" इति। लल्लोपि–दिवा परार्धजा विष्टिः पूर्वार्धोत्था यदा निशि। तदा विष्टिः शुभायेति कमलासनभाषितम्"। ब्रह्मसिद्धांतेपि–"दिवा परार्धजा विष्टिर्विष्टिरेव दिवानिशोः। सा त्याज्या त्वन्यथा विष्टिः सर्वकर्मशुभप्रदा ॥" इति। ननु यत्तु नारदकश्यपादिभिरुक्तम्–" करणानि बवादीनि शुभसंज्ञानि षट् क्रमात्। क्रमायाताऽक्रमायाता विष्टिनेष्टा तु मंगले"इति। अत्र क्रमायाता दिवारात्रिक्रमायाताऽक्रमायाता दिवाभद्रा रात्रौ रात्रिभद्रा च दिवेत्यर्थः। एवं सति द्विविधाया अपि भद्राया दोषवत्त्वोक्तेः पूर्वोक्तपरिहाराभिधानमयुक्तम्। उच्यते। इदमेव क्रमायातेति वचनं ज्ञापकमुक्तार्थस्य। अन्यथा सामान्यतो भद्रा दुष्टेत्युक्ते द्विविधभद्राया दोषवत्त्वसिद्धेरनर्थकमिदं स्यात्। तस्माच्छुभकार्याणां भद्रारूपदुष्टदिनव्यतिरिक्तकालप्रतीक्षायोग्यत्वे तदैव कार्यं न दुष्टदिने ॥ 'अबाधेनोपपत्तौ बाधो न न्याय्यः' इति न्यायात्, वचनस्य निषेध एव तात्पर्याच्च। अवश्यकर्तव्यस्य तु शुभकर्मणः कालांतरप्रतीक्षामसहमानस्यैवमादिपरिहारमाश्रित्य दुष्टदिने कृतिरुचितैव। 'विष्टिरंगारकश्चैव' इत्यपि परिहार एतत्पर एवेत्यलं पल्लवितेन ॥ ४४ ॥

## भद्रानिवासस्तत्फलं च–

**कुंभकर्कद्वये मर्त्ये स्वर्गेऽब्जेऽजात्त्रयेऽलिगे ॥**
**स्त्रीधनुर्जूकनक्रेऽधो भद्रा तत्रैव तत्फलम् ॥४५॥**

अथ भद्रानिवासं तत्फलं चानुष्टुभाह–कुम्भेति। अब्जे चंद्रमसि कुंभद्वये कुम्भमीनस्थे कर्कद्वये कर्कसिंहराशिस्थिते सति भद्रा मर्त्ये मनुष्यलोके तिष्ठति। अथ मेषादित्रये मेषवृषमिथुनस्थितेऽलिगे वृश्चिकस्थिते चंद्रे स्वर्गे भद्रा तिष्ठति। कन्याधनुस्तुलानकरराशिस्थितेऽधः पाताललोके भद्रा तिष्ठति। अथ भद्रा तत्रैव मर्त्यस्वर्गपातालेषु फलस्वोक्तशुभाशुभफलं प्रदादातीत्यपवादद्वारा प्रयोजनमुक्तं भवति। उक्तं च–"मेषोक्षकीर्य-

मिथुने घटसिंहमीनकर्केषु चापमृगतौलिसुतासु चंद्रे । स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति विष्टिः फलान्यपि ददाति हि तत्र देशे ॥ " इति । भूपालवल्लभे-"कन्यातुलामकरध-न्विषु नागलोके मेषालिवैणिकवृषेषु सुरालये स्यात् । पाठीनसिंहघटकर्कटकेषु मर्त्ये चंद्रे वदंति मुनयस्त्रिविधां हि विष्टिम्" इति । पाठीनो मीनः ॥ ४५ ॥

### वर्ज्यकृत्यानि कालाशुद्धौ-

**वाप्यारामतडागकूपभवनारंभप्रतिष्ठे व्रतारंभोत्सर्गवधूप्रवेशनमहादानानि सोमाष्टके ॥ गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतं नीलोद्वाहमथातिपन्नशिशुसंस्कारान्सुरस्थापनम् ॥ ४६ ॥ दीक्षामौंजिविवाहमुंडनमपूर्वदेवतीर्थेक्षणं संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकौ गमम् ॥ चातुर्मास्यसमावृती श्रवणयोर्वेधं परीक्षां त्यजेद्वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा ॥ ४७ ॥**

एवं महता ग्रंथसंदर्भेण पंचांगदूषणान्युक्तानि । अधुना कालाशुद्धौ निषेध्यवस्तूनि शार्दूलविक्रीडिताभ्यामाह । वाप्यारामेति । वापी दीर्घिका । आराम उपवनम् । तडागः पुष्करिणी । कूपः प्रसिद्धः । भवनं गृहम् । एतेषामारंभप्रतिष्ठे आरंभो निर्माणम् । प्रतिष्ठा उत्सर्गः । तत्र गृहप्रतिष्ठा गृहप्रवेशो ज्ञेयः । व्रतारंभोत्सर्गौ व्रतानामनंतशिवरात्रिव्रतादीनामारंभ उत्सर्गोऽनंतव्रतादीनामुद्यापनम् । महादानानि षोडशमहादानानि । सोमः सोमयागः । अष्टका अष्टकाश्राद्धम् । गोदानं केशांतसंज्ञं कर्म । आग्रयणं नवान्नेष्टिः । प्रपा जलशाला । ' प्रपा पानीयशालिका ' इत्यभिधानात् । महाराष्ट्राः पाणपोई इति वदंति । पहुआ इति कान्यकुब्जाः ॥ प्रथमकोपाकर्म प्रथममारभ्यमाणं श्रावणीकर्म । वेदव्रतं महानाम्न्यादित्रयम्-उपनिषद्व्रतं महानाम्नीव्रतं वेदव्रतं च । नीलोद्वाहः नीलशब्दवाच्यः काम्यो वृषोत्सर्गः न त्वेकादशाहे क्रियमाणः । तस्य तदैव विहितत्वान्मुहूर्त्तविचारानुन्मेषः । अतिपन्नाशिशुसंस्काराः अतिपन्ना अतिक्रान्ता जातकर्मनामकर्मादयः शिशूनां संस्काराः । दीक्षा मन्त्रग्रहणादिकाः । मुण्डनं चौलम् । अपूर्व देवक्षणं तीर्थेक्षणं च । अग्निपरिग्रहोऽग्निहोत्रम् । अग्न्याधानम् । चातुर्मास्यं चातुर्मास्याख्यो यागः । समावर्तनं मौंजीमोक्षः । श्रवणयोर्वेधः कर्णवेधः । परीक्षा तप्तमाषादिरूपा दिव्यमिति यावत् । अन्यानि कर्माणि नामतः स्पष्टानि । एतानि सर्वाणि कर्माणि त्यजेन्न कुर्यात् । इज्यसितयोर्बृहस्पतिशुक्रयोर्वृद्धत्वे शिशुत्वे बाल्ये च तथा न्यूनाधिमासे क्षयमासे अधिकमासे च न कुर्यात् ॥

### शुक्रास्तादिनिषेधः प्रथमोपक्रमे एव-

अयं च निषेधः प्रथमोपक्रांतकृत्येषु न तु नित्यवदारब्धवार्षिकयात्रादौ । अत्र मूलवचनानि लिख्यन्ते ॥ तत्र शुक्रास्तादिषु ज्योतिस्सारसागरे कक्षोच्चयः-" वापीकूपतडागयाग-

गमनं क्षौरं प्रतिष्ठा व्रतं विद्यामंदिरकर्णवेधनमहादानं वनं सेवनम् । तीर्थस्नानविवाहदेवभवनं मन्त्रादिदेवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्ते गुरौ भार्गवे ॥ बाले शुक्रे वृद्धे जीवे वृद्धे शुक्रे जीवे बाले । जीवे सिंहे सिंहादित्ये जीवादित्ये नष्टे जीवे । तथा मलिम्लुचे मासि सुराचार्ये तथास्तगे । वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत् " इति । वनमारामादि । सेवनं राजादीनाम् । नष्टे जीवे नष्टबले । नीचस्थिते गुरौ इत्यर्थः । लल्लः–"उपनयनं गोदानं परिणयनगृहप्रवेशगमनानि । अस्तमितेषु न कुर्यात्सुरगुरुभृगुपुत्रचंद्रेषु" इति । शातातपः– अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे । उद्यापनमुपारंभं व्रतानां नैव कारयेत् " ॥

## शुक्रास्तादौ शुभकृत्ये फलानि–

अस्तमयादिफलमाह बादरायणः–" गुरोरस्ते पतिं हन्याच्छुक्रास्ते चैव कन्यकाम् । चंद्रे नष्टे उभौ हन्यात्तस्मादस्तं विवर्जयेत् ॥ " इति । विवाह इति शेषः ॥ " बालभावे स्त्रियं हन्याद्वृद्धभावे नरं तथा । तस्माद्बाले च वृद्धे च विवाहं नैव कारयेत् " ॥ उपलक्षणमेतत् । एवं व्रतबन्धादिष्वपि कर्तुर्मरणं ज्ञेयम् । ' एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि विनियुज्यते ' इतिन्यायात् । उक्तं च शार्ङ्गीयविवाहपटले–"विवाहो व्रतबन्धो वा यात्रा वा गृहकर्म च । गुरावस्तमिते शुक्रे ध्रुवं मृत्युं विनिर्दिशेत् " इति ॥

## अधिमासक्षयमासयोर्वर्ज्यकृत्यानि–

अधिमासक्षयमासवर्ज्यानि । तत्र गृह्यपरिशिष्टे–"सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे । तथैवाग्रयणाधानचातुर्मास्यादिकान्यपि ॥ महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ॥ " इति ॥ गर्गबृहस्पती अपि–"अग्न्याधानं प्रतिष्ठां च यज्ञदानव्रतानि च । वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ मांगल्यमभिषेकं च मालमसे विवर्जयेत् " ॥ मरीचिः–" गृहप्रवेशगोदानस्थानाश्रममहोत्सवम् । न कुर्यान्मलमासे तु संसर्पेंऽहस्पतौ तथा ॥ " इति ॥

## संसर्पाहस्पतिस्वरूपे–

यदा क्षयमासो भवति तदा पूर्वोत्तरावधिमासौ भवतः । तत्र पूर्वः संसर्पः द्वितीयोऽहस्पतिः ॥

## गुरुशुक्रयोरस्तादावप्येतानि वर्ज्यानि–

एतान्यधिकमासक्षयमासवर्ज्यानि गुरुशुक्रयोरस्तादावपि वर्ज्यानि । यदाह वृद्धगार्ग्यः– " बाले वा यदि वा वृद्धे शुक्रे वास्तंगते गुरौ । मलमास इवैतानि वर्जयेद्देवदर्शनं " इति । अत्र देवदर्शनमपूर्वं विवक्षितम् । यदाह गर्गः–" अपूर्वदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे । मलमासेष्वनावृत्ततीर्थयात्रां परित्यजेत् ॥ " इति ॥ अनावृत्ततीर्थयात्रामपूर्वतीर्थयात्राम् । दीपिकायां–" नो शुक्रास्तेष्टमेऽर्क गुरुसहितरवौ जन्ममासेष्टमेन्दौ विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ । नाडीनक्षत्रहीने सुरगुरुरजनीनाथताराविशुद्धौ प्रातः कार्या परीक्षा द्वितनुचरगृहांशोदये शस्तलग्ने ॥ " इति ॥ गुरुसहितरवौ गुर्वादित्ये इत्यर्थः । इदं सिंहस्थितमकरस्थितास्तामितगुरूणामुपलक्षणम् । उक्तं च व्यवहारोच्चये–" सिंहस्थे मक-

रस्थे च जीवे चाऽस्तमिते तथा । मलमासे न कर्तव्या परीक्षा जयकांक्षिणा ॥ " इति ॥ मलमासग्रहणं क्षयमासस्याप्युपलक्षणम् । नाडीनक्षत्राणि वैनाशिकनक्षत्राणि । परीक्षा दिव्यम् ॥

## नियतानियतकर्मणां व्यवस्था गुरुशुक्रास्तमलमासादौ-

अयमत्र तात्पर्यार्थः-अनियतकालविहितानि चूडाकरणवाप्यारामादिशुभकृत्यानि गुर्वादेरस्तादिषु सर्वथा न कार्याणि । यानि तु नियतकालानि सीमन्तनामकरणादीनि तानि गुर्वादेरस्तादिसत्त्वेऽपि स्वोक्तकाल एव भवंति । " चतुर्थे गर्भमासे स्यात्सीमंतोन्नयन-क्रिया । षष्ठेऽष्टमे वा कुर्वीत सूत्रांतरविधानतः ॥ " इति शौनकादिमुनिवचनेभ्यः काल-स्यापि नियामकत्वावगतेः । अत एवाह बृहस्पतिः--" मासप्रयुक्तकार्येषु मूढत्वं गुरुशु-क्रयोः । न दोषकृन्मलो मासो गुर्वादित्यादिकं तथा ॥" इति । यमोऽपि-"चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् । कार्याणि मलमासेपि नित्यं नैमित्तिकं तथा ॥ " इति । अन्यत्रापि " सीमंतजातकादीनि प्राशनांतानि यानि वै । न दोषो मलमासस्य मौढ्यस्थगुरुशुक्रयोः" इति । एवं सति प्रतिबन्धवशादतिक्रांतकालेषु जातकर्मादिषु सत्सु गौणकालस्य तुल्यत्वात् । उक्तं च वसिष्ठेन" अतीतकालान्यखिलान तानि कार्याणि सौम्यायनगे दिनेशे । सिते गुरौ चाप्यथ दृश्यमाने तदुक्तपक्षांगदिनेऽप्यखण्डे ॥ " इति । अतएवोक्तम्--आतिपन्नशिशुसं-स्कारा इति ॥ ४६ ॥ ४७ ॥

## सिंहमकरादिस्थगुरुदोषाः-

**अस्ते वर्ज्यं सिंहनक्रस्थजीवे वर्ज्यं केचिद्वक्रगे चातिचारे ॥**
**गुर्वादित्ये विश्वघस्रपि पक्षं प्रोचुस्तद्वद्दंतरत्नादिभूषाम् ॥ ४८ ॥**

अथ सिंहस्थगुर्वादिदोषान् शालिन्याह--अस्ते वर्ज्यमिति यदस्ते । गुर्वादेरस्ते वर्ज्यमुक्तं तत् सिंहनक्रस्थजीवे सिंहस्थगुरौ मकरस्थगुरौ च वर्ज्यं निषिद्धम् । यदाह वराहः--" उद्यानचूडा-व्रतबंधदीक्षाविवाहयात्रादिवधूप्रवेशम् । तडागकूपत्रिदशप्रतिष्ठा बृहस्पतौ सिंहगते न कुर्यात् ॥ " इति । देवीपुराणेपि--"सिंहसंस्थे गुरौ यत्नात्सर्वारंभान्विवर्जयेत् । प्रारब्धं न च सिध्येत्त महाभयकरं भवेत् ॥ पुत्रभ्रातृकलत्राणि हन्याच्छीघ्रं न संशयः । कारको व्रजते नाशं संतानं म्रियतेऽचिरात् ॥ देवारामतडागाश्च प्रपोद्यानगृहाणि च । विवाहयज्ञोपनयचूडादि न च सिध्यति ॥ यथा सिंहस्थितो जीवस्तथैव मकरस्थितः ॥ "इति ॥ त्रिस्थलीसेतौ-"गुर्वादित्ये गुरौ सिंहे शुक्रे वास्तमुपागते । त्यजेद्यानं महादानं व्रतं देवविलोकनम् ॥ " इति । लल्लोपि-" नीचस्थे वक्रसंस्थेप्यतिचरणगते बालवृद्धेस्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा । मौंजीबंधो गणानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्ना-त्रिदशपतिगुरौ सिंहराशिस्थिते वा " ॥ इति ॥

## नियतानियतकर्मव्यवस्था सिंहमकरस्थर्व्यादौ-

अयमपि निषेधो नियतकालविहितानां न भवति । उक्तं च शार्ङ्गीये-" सीमंतजातकादीनि

प्राशनांतानि यानि वै। कर्तव्यानि न दोषोस्ति पञ्चाननगते गुरौ ॥" इति उपलक्षणमेतत्। एवं मकरस्थेपि कार्याणि शुभानि ॥

## क्वचिदपूर्वतीर्थयात्रायां गयाश्राद्धादौ चापवादः–

क्वचिदपूर्वतीर्थयात्रायां मौढ्यादिदोषाभावोऽभिहितः त्रिस्थलीसेतौ–"गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये। सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥" वायुपुराणे–" गयायां सर्वकालेषु पिंडं दद्याद्विधानतः॥ अधिमासे जन्मदिने ह्यस्ते च गुरुशुक्रयोः ॥ न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ ॥" इति। अत्र श्राद्धस्य यात्रापूर्वकत्वाद्गयायात्रापि न निषिद्धेति ज्योतिर्निबन्धे व्याख्यातम्। गुर्वाद्यस्तस्योपलक्षणत्वात्सिंहस्थगुरावपि गोदावरीयात्रा न निषिद्धेत्याहुः। अन्यत्र–" अधिमासे सिंहगुरावस्ते च गुरुशुक्रयोः। तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना ॥" इति। अत्र 'अधिमासे च जन्मर्क्षे' इति पठंति। तत्र यात्रायां जन्मनक्षत्रस्यातिनिषिद्धित्वाद्गोदावरीगयायात्रयोरपवादो युक्त एव। तथा ग्रहणार्धोदयकपिलाषष्ठीसंक्रान्त्युद्देशेनापूर्वतीर्थयात्रायां कर्तव्यायां शुक्रास्तादिमहादोषो नास्तीत्युक्तं त्रिस्थलीसेतौ लल्लेन–" उपप्लवे शीतलभानुभान्वोरर्धोदये वा कपिलाख्यषष्ठ्याम्। सुरासुरेज्यास्तमयेपि तीर्थयात्राविधिः संक्रमणेपि शस्तः ॥" इत्यलमियता ॥

## वक्रातिचारगतगुरौ वर्ज्यानि–

अथ गुर्वाद्यस्ते यद्वर्ज्यमुक्तं तद्वक्रगे गुरावथवातिचारगे गुरौ वर्ज्यम्। यदाह वात्स्यः–" यात्रोद्वाहौ प्रतिष्ठां च गृहचूडाव्रतादिकम्। वर्जयेद्यत्नतश्चैव जीवे वक्रातिचारगे ॥ कीर्तिभंगः प्रतिष्ठायां चौरभीतिस्तथाध्वनि। तथोद्वाहे भवेन्मृत्युर्व्रते हानिर्भयं गृहे ॥" इति।

## वक्रातिचारगतजीवापवादः–

क्वचिदस्यापवादोऽभिहितो राजमार्तंडे–" वक्रातिचारगे जीवे वर्जयेत्तदनंतरम्। व्रतोद्वाहादिचूडायामष्टाविंशतिवासरम् ॥" इति। मुक्तावल्यां त्वतिचारस्यैवापवादः–" अतिचारे सुरपूज्यो भवनाद्भवनांतरं यदा याति। अष्टाविंशतिदिवसान्विवर्जयेत्परिणयं प्रयत्नेन ॥" इति। परिणयमित्युपलक्षणम्। अस्यापवादो दीपिकायाम्–" त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः। यदा तदा प्राह शुभं विलग्नं हिताय पाणिग्रहणं वसिष्ठः ॥" अतएव लल्लः–" प्रतिषिद्धो नोद्वाहो वक्रिणि जीवे तथातिचारगते। गोचरबलं प्रधानं लग्नं च पराशरः प्राह ॥" इति। विवाहे एव कर्तव्येऽयमपवादो न तु यज्ञोपवीतादाविति केचित्। 'लग्नं च पराशरः प्राह' इति सामान्योक्तेः सर्वस्यापि कर्मणोपवाद इत्यन्ये। विशेषमाह लल्लः–" यद्यप्यनुपचयस्थो जीवः कन्यातिकालमावहति। गुणवद्वरोपलब्धौ तथापि पाणिग्रहः कार्यः ॥" इति ॥

## गुर्वादित्यपदस्यार्थः–

अथ केचिद्गुर्वादित्ये गुरुसहिते आदित्ये सूर्ये। एकराशिगतौ गुरुसूर्याविति यावत्। सगुर्वादित्यस्तस्मिन्नपि सर्वमस्तोक्तं शुभकर्म वर्ज्यम्। यदाह शौनकः–"एकराशिगतौ सूर्यजीवौ

स्यातां यदा पुनः । व्रतबंधविवाहादिशुभकर्माखिलं त्यजेत् " इति । यत्तु गुरुवचनम्–" गुरुक्षेत्रगतो भानुर्भानुक्षेत्रगतो गुरुः । गुर्वादित्यः स विज्ञेयो गर्हितः सर्वकर्मसु ॥ " इति । तदविचारितरमणीयम् । तथाहि " गुरुक्षेत्रे धनुर्मीनौ " तत्र भानुः सूर्यो गुर्वादित्य इति यत्तदसत् । धनुरर्कस्य दक्षिणायनत्वादेव निषेधसिद्धेः । मीनार्कस्य तु यज्ञोपवीतव्यतिरिक्तकर्ममात्रे निषेधसिद्धेः । तथा भानुक्षेत्रं सिंहस्तत्र गतो गुरुर्गुर्वादित्य इति चेन्न, तत्र सिंहस्थगुरुत्वादेव निषेधसिद्धेः । अथ गणितवशेन यस्मिन्नेव गुरुक्षेत्रे भानुस्तस्मिन्नेव राशौ गुरुः स गुर्वादित्य इति । तन्न । संभवत्येकवाक्यतायां भिन्नवाक्यताकरणस्य वैयर्थ्यापत्तेः ॥ ननु गुरोर्बाल्यवृद्धत्वास्तमयानां पृथक् निषेधोऽनर्थकः गुर्वादित्यनिषेधेनैव सिद्धत्वादितिचेत्, मैवं वोचः । राश्यादौ सूर्यः तद्राशेरवांते अष्टाविंशत्यंशे गुरुःतत्र सप्तविंशत्यंशानां व्यवधानात्तावद्गुरोरस्ताभावः । कलांशाश्च गुरोरेकादश ११ तदंतरे ह्यस्तमयत्वोक्तः । सप्तदशांशांतरितत्वाच्च वार्धकमपि नास्ति । यतो बाल्यं वार्द्धकं च परमं पक्षमात्रं १५ नारदादिभिरुक्तम् । तत्र दिनद्वयमधिकमवशिष्यते । येषां तु दश वा सप्त वा दिनानि बाल्यं वार्द्धकं चेति पक्षस्तेषामपि सप्त वा दश वा दिनानि बाल्यवार्द्धकरहितान्यवशिष्यन्ते । तत्र गुर्वादित्यप्रयुक्तोपि दोषो यथा स्यादिति वचनारंभः । एवं बाल्येपि द्रष्टव्यम् ॥ नन्वेवं गुर्वादित्य एव तर्हि वक्तव्यो गुरोर्बाल्यवार्द्धकास्तानां पार्थक्येन दोषाभिधानमनर्थकमिति चेन्न । यदा यत्र राशौ सूर्यस्ततः प्राग्राशौ गुरोरुदयस्तत्र बाल्यदोषः सावकाशः । यदोत्तरराशौ गुरुस्तदा वार्द्धकदोषः सावकाशः । बह्वंशान्तरत्वादस्तमयसंभावनापि नास्ति । तत्र गुर्वादित्यदोषेण बाल्यवार्धकास्तमयदोषाणां कथं निरासः कर्तुं शक्यः । नहि भिन्नराशिस्थयोरपि गुर्वादित्ययोर्गुर्वादित्यदोषाभिधानं कैश्चिदुक्तम् ॥ तस्मात्प्रागुक्तविषय एव गुर्वादित्यदोषः ॥

## गुरोः पञ्चावस्था-बाल्यवार्धकास्तेषु–

यदा त्वेकराशिस्थितत्वं तथा यदि बाल्यवार्द्धकास्तमयदोषाणां संभवस्तदा दोषस्याधिक्यन्यूनतातरतमभावो ध्येयः । तथाहि बृहस्पतेः खलु पंचावस्थाः संभवंति । ( १ )–पूर्वं गुर्वादित्यसंज्ञा । साल्पदोषा । ( २ ) ततो यथायथा रविसामीप्यं तथातथा क्षीणताधिक्याद्वार्धक्यव्यपदेशो गुर्वादित्यव्यपदेशाद्दुष्टफलः । (३)–ततः सूर्यातिसान्निध्येनास्तंगतत्वेऽस्तमयाख्यो व्यपदेशः सोत्यंतदुष्टफलः। (४ )ततः पुनरपिकालांशातिक्रमेण रविविप्रकर्षादुदये सति बालत्वव्यपदेशः प्राक्फलात्किंचिन्न्यूनदोषकरः । ( ५ ) ततः पुनरपि राश्यंते गुर्वादित्यव्यपदेशः सोल्पदोष इति ॥

## गुरोर्बाल्यवार्द्धक्यदिनसंख्याव्यवस्था–

एवं गुरोर्बाल्यवार्द्धक्यदिनानामपि बहुत्वाल्पत्वयोरपि व्यवस्था ध्येया । तथाहि ( १ ) यदास्तोदयाभ्यां प्राक् पश्चाच्च वार्धक्यं बाल्यं च पक्षमभिहितं तदा पक्षांतिमदिनपंचकमल्पदोषपम् । ( २ ) यदा तु दशदिनानीतिपक्षस्तदा तदंतिमं दिनत्रयं मध्यमदोषम् ।( ३ ) यदा तु सप्तदिनानीति पक्षस्तदा तु महादोष एव । एवं धीमद्भिरन्यत्रापि व्यवस्थाविरोधे सति महादोषाल्पदोषजनिकावश्यकानावश्यकाविषयिणी ध्येयेत्यलमतिप्रसंगेन ॥

## त्रयोदशदिनात्मके पक्षे शुभं वर्ज्यम्–

अथ केचिद्विश्वघस्रेपि पक्षे त्रयोदशदिने पक्षे यस्मिन् पक्षे तिथिद्वयह्रासः स त्रयोदशदिनात्मकः पक्षोतिनिंद्यः। तदुक्तं ज्योतिर्निबंधे–"पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरवकालयोगः। पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः॥" इति। तथा "त्रयोदशदिने पक्षे तदा संहरते जगत्। अपि वर्षसहस्रेण कालयोगः प्रकीर्तितः॥ इति। एवंविधे काले सर्वं गुर्वाद्यस्तोक्तं शुभकर्म वर्ज्यं प्रोचुः॥ तदुक्तं व्यवहारचंडेश्वरे "त्रयोदशदिने पक्षे विवाहादि न कारयेत्। गर्गादिमुनयः प्राहुः कृते मृत्युस्तदा भवेत्॥" इति। विवाहे दंपत्योश्चौलोपनयनादौ च शिशोर्मृत्युरित्यवधारितव्यम्। संस्कार्यतया प्राधान्यात्। ज्योतिर्निबंधेपि–"उपनयनं परिणयनं वेश्मारंभादिकर्माणि। यात्रां द्विक्षयपक्षे कुर्यान्न जिजीविषुः पुरुषः॥" इति॥

## त्रयोदशदिनात्मकपक्षसंभवादिविचारः–

अथ प्रसंगात् त्रयोदशदिनात्मकपक्षः कथं संभवति कथं च न संभवतीति विचारः प्रस्तूयते। कस्मिंश्चिच्छककाले कस्मिंश्चित्पक्षे प्रतिपत्सोमवारे घटिकैका दशपलाधिका १। १०। ततो द्वितीयाक्षयोन्मुखत्वात्पक्षस्य सोमवार एवांतर्हिता। अतएवाऽवमाख्या जाता-घट्यः ५७ पलानि ६। ततः पुनरपचयक्रमेण तिथीनां चतुर्दश्यपि क्षयं गताऽवमाख्या शुक्रवार एव। ततः शनिवारे पूर्णिमाक्षयोन्मुखी चतुर्दशी तुल्या वा। एतादृशः पक्षस्त्रयोदशदिनात्मकः संभवति। यद्यपि 'पक्षपरिग्रहे' इत्यस्माद्धातोः पचाद्यचि पक्षशब्दो निष्पन्नो नानार्थश्चास्ति। तथापि ज्योतिःशास्त्रे प्रतिपदाद्यक्षणमारभ्य पंचदश्यंतिमक्षणपर्यंतं पंचदशतिथ्यात्मके काले रूढः शिष्टपरिगृहीतत्वादृगृह्यते। दिनशब्दोप्यत्र त्रयोदशपदसमभिव्याहारादहोरात्रवाचकः। 'दशाहं शावमाशौचं सपिंडेषु विधीयते' इत्यादावहःशब्दवत्। तत्र दिवसस्तु "यत्कृच्छ्रसूतकचिकित्सितवासराद्यं तत्सावनाच्च घटिकादिकमार्क्षमानात्" इति भास्करोक्तेः सावन एवात्र ग्राह्यः। स च सूर्योदयमारभ्यापरसूर्योदयं यावत् तावत्कालो रविवाराद्यपरपर्यायः सकललोकप्रसिद्धो गृह्यते। तत्र–'त्रयोदशदिने पक्षे नूनं संहरते जगत्, इति वचनादेतादृशस्य त्रयोदशदिनात्मकस्य पक्षस्य दोषवत्ता स्मर्यते॥ ननु कथमस्य पक्षस्य त्रयोदशदिनात्मकत्वम्? उच्यते–त्रयोदशसंख्याकानि दिनानि यस्मिन्स त्रयोदशदिनस्तस्मिंस्तादृशे पक्ष इति व्युत्पत्त्या पक्षस्यान्यपदार्थकत्वात्तस्य पंचदशतिथ्यात्मकस्य त्रयोदशाहोरात्रसंबंधोऽभिहितो भवति। प्रस्तुतोदाहरणे तावत्प्रतिपदंतिमघटीसंबंधः प्रातःकाले सोमवारस्य जातः। ततो द्वितीयादितिथिसंबंधः सोमवारमारभ्यैव जातः क्रमेण पंचदश्याः शनिवारसंबंधोऽभूदिति पक्षस्य त्रयोदशदिनात्मकत्वमजनिष्ट। यदि प्राग्लक्षणलक्षितस्य पक्षस्य त्रयोदशाहोरात्रसंबंधो विवक्ष्यते तदा पक्षस्य त्रयोदशदिनात्मकता खपुष्पतुल्यैव भवेत्। यतोपचयाभिमुखत्वात्तिथीनां मध्ये एकस्या एव तिथेः क्षयः स्यान्न द्वयोस्तिथ्योः। तदा पक्षस्य चतुर्दशदिनात्मकता संभवति। "पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरवकालयोगः। पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ताः॥" इति वाक्याद्द्वयोस्तिथ्योरेव क्षये पक्षस्य त्रयोदशदिनात्मकता सम्भवेत्। सा चाल्पावशिष्टप्रतिपत्सम्भवे इति निष्कृष्टोऽर्थः॥

## अत्रैवंविधमन्यदप्युदाहरणम्–

विंशत्युत्तरपञ्चदशशतमिते १५२० शककाले कार्तिकशुक्लपक्षे जातमास्ति–तदेवं विधेयम् । एवं च यदा कदाचिच्छककाले पञ्चदशीतिथिर्गुरुवारे घटिकैका १ पुनस्तस्मिन्नेव वारे प्रतिपत् ५९ क्षयं गता । ततस्तस्मिन्नेव वारे पुनर्द्वितीया संलग्ना पुनः प्रातरारभ्य शुक्रवारसम्बंधेन द्वितीया संपूर्णाभूत् । पुनः क्षयाभिमुखत्वात्तिथीनां चतुर्दश्याः पञ्चदश्या वा क्षयः संवृत्तः । तदा पञ्चदशीतिथिर्गुरुवार एव सम्भूत् । तदा चतुर्दशदिनात्मक एव पक्षो भवति । यतः प्रतिपत्सम्बन्धः शुक्रवारे एकपलात्मकोपि नाभूत्किन्तु गुरुवारेणैव ॥ ननु–'पक्षस्य मध्ये द्वितिथी पतेताम्' इति लक्षणा त्रयोदशदिनात्मकः पक्षो भविष्यतीति चेन्न । योऽत्र मध्यशब्दः पठ्यते स यदष्टमीतिथियुतषष्ठ्यादितिथिपञ्चकात्मकत्रिभागमाक्षिपति । तथाच 'द्वितिथी पतेताम्' इति वाक्यार्थासम्भव एव स्यात् । सम्भवस्तु वाक्यार्थे लक्षणयोपयुज्यते । यथा हि पक्षे इति सप्तम्यंतपदे वक्तव्ये मध्यपदोच्चारणसामर्थ्यादाक्षिप्तयोराद्यंतयोस्तिथ्योर्निवृत्तिमाह स इति वाक्यार्थोऽवगम्यते । एवं सति प्रतिपत्पञ्चदश्योर्युगपत्क्षये दोषवत्ता नैव भवति । किंतु द्वितीयामारभ्य चतुर्दश्यंतं तिथिद्वयह्रासे त्रयोदशदिनात्मकः पक्षोऽतिदोषावहो भवति ॥ यद्येवं द्वितीयापञ्चदश्योः क्षयेऽतिदोषवत्ता न स्यादिष्यते च तत्रापि । सत्यम् । नहीदमेव वचोतिनिर्णायकं किंतु–'त्रयोदशदिने पक्षे' इत्यनेनैकवाक्यतामापन्नं सत् 'सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम्' इत्युक्तेः । कथं तिथिद्वयक्षयवान् त्रयोदशाहोरात्रसम्बंधवान्पक्षः त्रयोदशदिनः पक्ष इत्यनुगतं लक्षणं क्रियते । अतो नात्राव्याप्तिरित्यस्त्यतिदोषवत्ता । यत्र चतुर्दशदिनात्मकः पक्ष इति प्रसिद्धिस्तत्र पञ्चदशतिथीनां त्रयोदशाहोरात्रसम्बन्धात्पक्षस्य त्रयोदशदिनात्मकता स्यात् सा माभूदिति तिथिद्वयक्षयवानित्युक्तम् । अतः प्रतिपत्तिथेश्चतुर्दशीपञ्चदश्योरन्यतरतिथेश्च युगपत्क्षये त्रयोदशदिनात्मकपक्षत्वं नास्त्येवेति सिद्धांतः । अतएव भीष्मपर्वणि कुरुपांडवसैन्यक्षयनिमित्तभूतमुत्पातमाह दुर्योधनं प्रति भीष्मः–"चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् । इमां त्वमभिजानेऽहममावास्यां त्रयोदशीम् ॥", इति । अस्यार्थः । पूर्वं हि पञ्चांगगणनया प्रतिपदमारभ्यामावस्यां तिथिं च चतुर्दशाहोरात्रे निष्पन्नां भूतपूर्वाम् पूर्वं भूतामहमभिजाने । पक्षस्यैकतिथिक्षयसद्भावात् । तथामावास्यां पंचदशीं पंचदशाहोरात्रे पूर्वजातामहमभिजाने । पक्षस्य तिथिक्षयवृद्धिराहित्यात् । तथामावस्यां षोडशीं षोडशाहोरात्रे पूर्वं जातामहमभिजाने । पक्षस्यैकतिथिक्षयवृद्धिसद्भावात् । पक्षमध्ये तिथिद्वयवृद्धिस्तु खपुष्पतुल्यैव । भूतपूर्वामित्यनेन गणितसाध्यपंचांगेष्वनेकशो दृष्टत्वादाश्चर्याभावोऽभिहितः । अतः फलमप्यस्य वराहेण सामान्यत उक्तम्–"शुक्ले पक्षे संप्रवृद्धे प्रवृद्धिं ब्रह्मक्षत्रं याति वृद्धिं प्रजाश्च । हीने हानिस्तुल्यता तुल्यतायां कृष्णे सर्वं तत्फलं व्यत्ययेन ॥" इति । व्यत्ययस्तु शुक्लपक्षापेक्षया । अत्रातिदुष्टफला श्रवणान्नोत्पातरूपत्वमस्य पक्षस्य ॥ परमस्मिन्नवसरे त्विमां पंचांगे मया दृष्टाममावस्यां त्रयोदशीं प्रतिपत्तिथिमारभ्य त्रयोदशाहोरात्रे तिथिद्वयह्रासाज्जातां कदाप्यनुभूतां नाहमभिजाने इति महानुत्पातो मया दृष्टः । अतो युद्धान्निवर्तस्वेति वाक्यतात्पर्यार्थः ॥ ननु प्रकृतेरन्यत्वमुत्पात इत्युत्पातलक्षणानाक्रांतत्वमत्रास्ति । गणितज्ञानसाध्यत्वात् शुक्रास्तादिरुत्पातः केनाप्यं–

गीक्रियते। सत्यम्। यद्यपि पक्षद्वयमध्ये तिथीनां क्षयगामित्वात्तिथिद्वयह्रासो दृश्यते। बहुधा गणितसाध्यत्वात्। तथाप्यस्मिन् कालेऽप्यस्मिन्नेवैकस्मिन्पक्षे प्रतिपदमारभ्य तिथिद्वयह्रासस-द्भावाद्बहुभिर्वर्षैरभाव स्यात्त्रयोदशी जाता। अदृष्टा तादृशी च मया कदापि नानुभूतेति महो-त्पातरूपत्वमस्य युक्तमेव सम्पन्नमिति। ज्योतिर्विन्नीलकण्ठस्य गोविंदेन तनूभुवा। त्रयोदशाह-पक्षस्य तत्त्वं सम्यक् प्रकाशितम्॥ इति॥

## प्रथमसुवर्णादिधारणे वर्ज्यकालाः–

तद्वत्तेन प्रकारेण दन्तरत्नादिभूषां दन्ता हस्तिदन्तास्तत्सम्बंधिनीं भूषां रत्नसंबंधिनीं भूषां तथादिशब्दात्सुवर्णमणिसंबंधिनीं भूषामपि वर्ज्यां प्रोचुः॥ सर्वस्मिन्निषिद्धे काले इत्यर्थः। यदाह राजमार्तंडः–"यात्रां चूडां विवाहं श्रुतिविवरविधिं शंखसद्मप्रवेशं प्रासादोद्यानहर्म्यं सुर-नरभवनारंभविद्याविधानम्। मौंजीबन्धं प्रतिष्ठां मणिकनकरदाधारणं कुर्वतो व मृत्युः सिंह-स्थितेऽज्ये गुरुदिनकरयोरेकराशिस्थयोश्च"॥ इति सिंहस्थगुरोरुपलक्षणत्वाद्गुर्वस्तादावपि प्रथम-कर्तव्यसुवर्णादिधारणं वर्ज्यमित्यर्थः॥ ४८॥

## विवाहे सिंहस्थगुरोरदुष्टत्वं त्रिधा–

**सिंहे गुरौ सिंहलवे विवाहो नेष्टोऽथ गोदोत्तरतश्च यावत्॥**
**भागीरथीयाम्यतटे हि दोषो नान्यत्र देशे तपनेऽपि मेषे॥ ४९॥**

अथ सिंहस्थगुरोः प्रकारत्रयेण परिहारमिंद्रवज्रयाह–सिंहे इति। (१) प्रथमंशभेदेन परिहार उच्यते–गुरौ सिंहस्थिते सत्यपि सिंहांशे तृतीयांशसहितत्रयोदशांशकेभ्योनन्तरं १३–२० तृतीयांशसहितांशत्रयं ३–२० पंचमो नवांशसिंहांशस्तत्र गुरौ सति विवाहो नेष्टो निषिद्धः। उक्तं ज्योतिर्निबंधे राजमार्तंडेन–"सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः। सर्वदेशेष्वयं त्याज्यो दंपत्योर्निधनप्रदः॥" इति। विशेषमाह वसिष्ठः–"सिंहे सिंहांशके जीवे कलिंगे गौडगुर्जरे। कालमृत्युरयं योगो दंपत्योर्निधनप्रदः॥" इति। अतोवशिष्टेष्वं-शेषु विवाहादि शुभं भवतीत्यर्थः। "सिंहेपि भगदैवत्ये गुरौ पुत्रवती भवेत्। अत्यंतसुभगा साध्वी धनधान्यसमन्विता॥" इति राजमार्तंडोक्तेः। (२)–अथ देशभेदेन द्वितीयः परिहार उच्यते–गोदोत्तरतः गोदा गोदावरीनदी तस्या उत्तरदिशि भागीरथी गङ्गा तस्या या-म्यतटं दक्षिणकूलं यावन्मर्यादीकृत्य गोदावरीगङ्गान्तरालवर्ती यो देशस्तत्र सिंहस्थगुरुर्वर्ज्यः नाऽन्यत्र देशे। अन्येषु देशेषु न सिंहस्थगुरुदोषः। तदाह लल्लः–"गोदावर्युत्तरतो यावद्भागी-रथीतटं याम्यम्। तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये॥" इति। अर्थाद्गोदावरीदक्षिणे देश भागीरथ्युत्तरे देशे च सिंहस्थगुरुदोषो नास्ति। यदाह वसिष्ठः–"भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तटे। विवाहो व्रतबंधो वा सिंहस्थेऽज्ये न दुष्यति॥ मृगेंद्रसंस्थिते जीवे मध्य-देशे करग्रहः। मृत्युयोगो मृत्युदः स्याद्दंपत्योः पंचवर्षतः॥" इति। अत्र विवाहव्रतबंधावेव निषिद्धौ। आभ्यामन्यानि शुभकर्माण्यनिषिद्धान्येव। अपवादस्य संकोचाश्रयत्वादुपलक्ष-णत्वायोगात्। (३)–सूर्यराशिवशेन तृतीयः परिहार उच्यते–तपनेपि मेषे सूर्ये मेषराशौ विद्यमाने सति वा सिंहस्थगुरोर्दोषो नास्ति। "मंगलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा। भानौ मेषगते सम्यगित्याहुः शौनकादयः॥" इति ज्योतिर्निबंधोक्तेः। अन्यच्च तत्रैव

"सिंहगते सुरमंत्रिणि कन्यामेषगते तपने परिणीता । भूषणरत्नयुता च सुशीला सत्यवती सुखकीर्तिसमेता ॥" इति ॥ ४९ ॥

### सिंहस्थगुरुविषयाविधिनिषेधयोर्निष्कर्षः-

**मघादिपंचपादेषु गुरुः सर्वत्र निंदितः ॥**
**गंगागोदांतरं हित्वा शेषांघ्रिषु न दोषकृत् ॥ ५० ॥**
**मेषेर्के सन्व्रतोद्वाहे गंगागोदांतरेऽपि च ॥**
**सर्वः सिंहगुरुर्वर्ज्यः कलिंगे गौडगुर्जरे ॥ ५१ ॥**

सिंहराशिगतगुरुर्निषेधवाक्यानां प्रतिप्रसववाक्यानां च निर्गलितार्थमनुष्टुब्द्वयेनाह-मघादिपंचेति । श्लोकद्वयं स्पष्टार्थम् ॥ ५० ॥ ५१ ॥

### द्विधा मकरस्थगुरोरपवादः क्वचित्-

**रेवा पूर्वे गंडकीपश्चिमे च शोणस्योदग्दक्षिणे नीच इज्यः ॥**
**वर्ज्यो नायं कौंकणे मागधे च गौडे सिंधौ वर्जनीयः शुभेषु ॥५२॥**

अथ मकरस्थितगुरोः प्रकारद्वयेन परिहारं शालिन्याह-रेवापूर्वे इति ।(१)-रेवा नर्मदानदी तस्याः पूर्वे भागे गंडकीनदी तस्याः पश्चिमे च भागे शोणनदस्योत्तरे दक्षिणे च भागे नीच इज्यः मकरस्थगुरुर्न वर्ज्यः । एषु देशेषु मकरस्थितगुरोर्दोषो नास्ति । तदुक्तं लल्लेन-"नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे । गंडक्याः पश्चिमे भागे मकरस्थो न दोषभाक्" ॥ अर्थादन्येषु देशेषु निषिद्ध एव । ( २ )-द्वितीयः परिहारः-अयं मकरस्थितगुरुः कौंकणे देशे मागधे देशे च गौडदेशे सिंधुदेशे अटकाख्यनगराधस्तात् सिंधुर्नाम नदोऽस्ति । तत्पारे शुभेषु शुभकृत्येषु वर्ज्यो निषिद्धः । उक्तंच दैवज्ञमनोहरे—"मागधे गौडदेशे च सिंधुदेशे च कौंकणे। व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ ॥" इति । अतोऽन्येषु देशेषु मंगलं कार्यमित्यर्थतः सिद्धम् । व्यवहारचंडेश्वरे तु विशेषः—"नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु । नीचांशकगतस्त्याज्यो यस्मादंशेषु नीचता ॥" इति । अतएव वामनपुराणे—"वापीकूपतडागादि निषिद्धं सिंहगे गुरौ । मकरस्थेपि तत्कार्यं न दोषः काललोपतः ॥" इति । काललोपो नाम कालनिषेधः स इह नास्ति निषेधवाक्यस्य देशपरत्वादंशपरत्वाच्चेति भावः ॥ गरुडपुराणेपि-'यदा सिंहगतो जीवो नैव कल्याणमाचरेत् । मकरस्थेपि कर्तव्यं नात्र कार्या विचारणा ॥" इति । अत्रापि पूर्वोक्त एवाशयः ॥ ५२ ॥

### विलुप्तसंवत्सरदोषापवादस्त्रिधा विना धनुकर्कटमीनान्-

**गोऽजांत्यकुंभेतरभेतिचारगो नो पूर्वराशिं गुरुरेति वक्रितः ॥**
**तदा विलुप्ताब्द इहातिनिंदितः शुभेषु रेवासुरनिम्नगांतरे ॥ ५३ ॥**

अथ लुप्तसंवत्सरदोषापवादं वंशस्थवृत्तेनाह—गोजांत्येति । गौर्वृषःअजो मेषः अन्त्यो मीनः

कुंभः यस्मिन् कस्मिंश्चिद्राशौ स्थितो गुरुराक्रांतराशेः सकाशादग्रिमराशौ महातिचारेण समागतः सन् पश्चात्कियद्भिर्दिनैर्वक्रितो यदा पूर्वराशिं मुक्तराशिं नो एति तदा विलुप्ताब्दः लुप्तसंवत्सर उच्यते स विलुप्ताब्दः इह शुभकृत्येषु अतिनिंदितः निषिद्ध इत्यर्थः। तदुक्तं व्यवहारोच्चये-" अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः।लुप्तसंवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु "॥(१) यदा तु गोजांत्यकुम्भेषु पूर्वराशेः सकाशात् महातिचारेणायाति पूर्वराशिं च नैति तदा न लुप्तसंवत्सरदोषः। यदाह गुरुः-"मेषे वृषे झषे कुंभे यद्यतीचारगे गुरौ। न तत्र कालदोषः स्यादित्याह भगवान्यमः "॥ इति। (२)-यदि तु दशैकादश वा मासान्भुक्त्वा यस्मिन्कस्मिंश्चिद्राशावतिचारेण गुरुः समायाति पूर्वं राशिं च न गच्छति तदा लुप्तसंवत्सर एव नास्ति। यदाह च्यवनः-"मासान् दशैकादश वा प्रभुज्य राशेर्यदा राशिमुपैति जीवः। मुंक्ते न पूर्वं च पुनस्तथापि न लुप्तसंवत्सरमाहुरार्याः " ॥ इति। (३)-अथ पूर्वराशिभेदेन परिहारमुक्त्वेदानीं देशभेदेन परिहारमाह-रेवेति । लुप्तसंवत्सरो रेवा नर्मदा सुरनिम्नगा गंगा तयोर्नद्योरंतरे मध्ये निषिद्धः। उक्तं च-" लुप्ताब्ददोषोऽत्रिमतेन मध्ये सोमोद्भवायाः सुरनिम्नगायाः " इति। केषुचिद्राशिषु लुप्तसंवत्सरदोषातिशयोस्तीत्युक्तं सारसागरे-" अतिचारगते जीवे धनुः कर्कटमीनगे। लुप्तसंवत्सरो ज्ञेयो विवर्ज्यः सर्वकर्मसु"॥

## समसप्तकाख्यो दोषो विवाहे-

अन्यैर्विवाहादिनिषेधकं समसप्तकाख्यं दोषांतरमप्युक्तम्। यदाह नारदः-" समदृष्टिर्गुरुः शुक्रस्तन्मासे तु प्रयत्नतः। विवाहादि न कुर्वीत नर्मदातीर उत्तरे ॥ " इति। गुरुरपि-" यदा जीवसितौ चक्रे परस्परनिरीक्षितौ। सप्तमस्थौ तदा दोषो मूढत्वादतिरिच्यते " इति। वसिष्ठोऽपि-" समसप्तकयोर्जीवशुक्रयोश्च परस्परम्। तदा मूढसमो दोषः शुभकार्यविनाशदः " ॥ इति ॥ ५३ ॥

## वारप्रवृत्तिः-सूर्योदयात्प्राक्पश्चाच्च-

**पादोनरेखापरपूर्वयोजनैः पलैर्युतोनास्तिथयो दिनार्द्धतः ॥**
**ऊनाधिकास्तद्विवरोद्भवैः पलैरूर्ध्वं तथाधो दिनपप्रवेशनम् ॥५४॥**

अथ ग्रहाणां होरां वक्ष्यति सा च वारप्रवृत्त्यधीना। तदर्थं वारप्रवृत्तिमुपजात्याह ॥ पादोनेति ॥

## भूमध्यरेखा-

रेखा भूमध्यरेखा " पुरी रक्षसां देवकन्याथ कांची सितः पर्वतः पर्यलीवत्सगुल्मम्। पुरी चोज्जयिन्याह्वयो गर्गराटं कुरुक्षेत्रमेरू भुवो मध्यरेखा ॥ " इति भास्करेणोक्ता। उपलक्षणं चैतत्। लंकात आरभ्य सुमेरुपर्यंतं यद्दत्तं सूत्रं तदधोवर्तिनो ये देशास्ते मध्यरेखा उच्यते । तदुक्तं तेनैव-" यल्लंकोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान्स्पृशत्सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः " इति ॥ यस्मिन्देशे वारप्रवृत्तिश्चिकीर्षिता स देशो यदि मध्यरेखातः प्राक्पश्चाद्वा यावंति योजनानि भवंति तानि स्वदेशचतुर्थांशोनानि कृत्वा तावद्भिः पलैस्तिथयः पंचदश युतोनाः कार्याः। यदि मध्यरेखातः प्रत्यग्योजनानि तदा युताः यदा तु प्राग्योजनानि तदोनाः कार्या इत्यर्थः ॥ अथ यद्दिने वारप्रवृत्तिरिष्टा तद्दिने-" चरपलयुतहीना नाडिकाः पंच चंद्राद्द्विदलमथ

निशार्धं याम्यगोले विलोमे " इति भास्करोक्तरीत्या दिनार्द्धं साध्यम् । तस्माद्दिनार्द्धात्संस्कारविशिष्टाः पंचदशोनाधिकाश्चेद्भवंति तद्विवरोद्भवैः पलैर्दिनार्धस्य संस्कारविशिष्टपंचदशानां च यद्विवरमंतरं तत्सबंधेनोत्थैरुत्पन्नैः पलैरूर्ध्वं तथाधो दिनपस्य वारस्य प्रवेशनं वारप्रवृत्तिः स्यात् । यदा दिनार्द्धात्संस्कारविशिष्टा पंचदश चेदूनाः स्युस्तदा सूर्योदयादूर्ध्वं वारप्रवेशनम् । यदा ह्यधिकास्तदा सूर्योदयाप्राग्वारप्रवृत्तिरित्यर्थः । यथा वाराणसीप्राङ्मध्यरेखाभिधात् कुरुक्षेत्रात् त्रिषष्टियोजनानि ६३ पादोनानि ४७ प्राग्योजनत्वादेतैः पलैः ४७ ऊनाः पंचदश १५ जाताः १४ । १३ ॥ दिनार्द्धं १७ । २ अस्मात् न्यूनाः पञ्चदशेति ( विवर २ । ४९ ) सूर्योदयादूर्ध्वं वारप्रवृत्तिः ॥

## प्रकारान्तरम् ।

अयमर्थो ग्रंथकृता लाघवायोपनिबद्धः । राजमार्गस्तु वसिष्ठसंहितायां–" प्रभाकरस्योद्गमनात्पुरे स्याद्वारप्रवृत्तिर्दशकंधरस्य । चरार्द्धदेशांतरनाडिकाभीरूर्ध्वं तथाधोऽथ परत्र तस्मात् " इति । श्रीपतिरपि–" चरार्धदेशांतरयोर्वियोगयोगोत्थमानीय पलैश्च सम्यक् । सूर्योदयादूर्ध्वमृणे धनेधो वारप्रवृत्तिं मुनयो वदंति " ॥ इति । तत्र चरमुत्तरदक्षिणगोलवशादृणं धनं च 'अस्वं स्वं चरगोलयोः स्यात्' इति भास्करोक्तेः॥देशांतरमपि पूर्वापरयोजनवशादृणं धनं च । तत्र " योगे युतिः स्यात् क्षययोः स्वयोर्वा धनर्णयोरंतरमेव योगः ॥ " इत्युक्तेः ऋणयोर्देशांतरचरयोर्योगे तूर्ध्वं वारप्रवृत्तिः । धनर्णयोर्योगे सूर्योदयादधः धनर्णयोर्योगेऽन्तरं कार्यम् । तद्यदृणं धनं च तदा सूर्योदयादूर्ध्वमधश्च वारप्रवृत्तिः । ग्रंथकृता तु चरसंस्कारो मध्याह्नस्य तद्विशिष्टत्वान्न कृतः । देशांतरसंस्कारोऽवशिष्यते स लंकादिनार्धे पंचदशघटीमिते कार्यः तथा कृते सति यदुभयोरंतरं तावत्सूर्योदयादूर्ध्वमधश्च वारप्रवृत्तिः ॥ ५४ ॥

## वारप्रवृत्तिफलं–होरा च–

**वारादेर्घटिका द्विघ्नाः स्वाक्षह्रच्छेषवर्जिताः ॥**
**सैकास्तष्टा नगैः कालहोरेशा दिनपात्क्रमात् ॥ ५५ ॥**

अथ वारप्रवृत्तिप्रयोजनपुरःसरां होरामनुष्टुभाह–वारादेरिति । वारप्रवृत्तिप्रकारेण यस्मिन् क्षणे वारप्रवृत्तिर्जाता तत इष्टघट्यो द्विगुणाः कार्याः । ता द्विस्थाने स्थाप्याः । तत्र पंचभिर्भक्ते यल्लब्धं तत् त्याज्यम् । यच्छेषं तत् द्विगुणघटीमध्ये वर्जितं कार्यम् ॥ एवंविधा घट्यः सैका एकयुक्ताः कार्याः । ततो नगैः सप्तभिस्तष्टा भक्ता अवशिष्टाः कालहोराः स्युः । तद्दिनपाद्वारात् क्रमाद्गणनीयाः । यथा रविवारे इष्टघटिकाः षट् ६ द्विगुणाः १२ पृथगक्षाप्तशेष २वर्जिताः १० ।नगैः ७ तष्टाःशेषं३ सैकम् ४ रविवारक्रमगणनया चतुर्थो बुधस्तस्य होरा ॥ अत्र वासना ॥ तत्र वसिष्ठः–"वारप्रवृत्तेर्गदिता दिनेशात्कालाख्यहोरापतयः क्रमेण । सार्धेन नाडीद्वितयेन तष्टः षष्ठश्च षष्ठश्च पुनः पुनः स्यात् " इति । तत्र कृतेऽहोरात्रे चतुर्विंशतिः कालहोरा भवंति ॥ अत्रानुपातः–यदि घटिकानां षष्ट्या ६० चतुर्विंशतिः २४ होरा लभ्यन्ते तदा एकया किमिति । अत्रैकेन गुणे विशेषाभावाच्चतुर्विंशतेः छेदः षष्टिर्जातः । उभयो

द्वादशापवर्ते इष्टघटिका द्विगुणाः पञ्चभक्ताः कालहोराः स्युरिति ॥ तथा चोक्तं रत्नमालायां—"वारप्रवृत्तेर्घटिकाद्विनिघ्नाः कालाख्यहोरापतयः शराप्ताः। दिनाधिपाद्या रविशुक्रसौम्यशशांकसौरेज्यकुजाः क्रमेण" ॥ अथ ग्रंथकृदुक्ता वासना—सार्धघटीद्वयेनैकहोराद्विगुणिताः सार्धद्विघटयः पंच भवंति। अत एवोक्तं—"वारादेर्घटिका द्विघ्ना" इति। एकयोगे षट् जाता। एवं रविवारे क्रमेण गणनया द्वितीया शुक्रस्य कालहोरा प्रवृत्ता। अत उक्तं 'सैका' इति। भवन्मतेपि सूर्यात्षष्ठः शुक्रस्तस्यैव होरा। इयं च शुक्रहोरा पंचघटीपर्यंतम्। स्वमते इष्टघटिका ४ द्विगुणाः ८। अत्र पंचभ्य आधिक्यमनुचितमिति द्वितीयस्थाने स्थापयित्वा पंच भक्तावशिष्टत्रयेणोनाः पंच जाताः। अत उक्तं—'स्वाक्षहृच्छेषवर्जिता' इति। एकयोगे षट्। एवंसति पुनः सैव होरा। एवमिष्टघटीभिः कालहोरानयनं सुगमम्। वाराणां सप्तसंख्यात्वात्तदाधिक्यमनुचितमिति—'नगैस्तष्टा' इत्युक्तम्। क्रमगणनायां त्वियं युक्तिः द्वयोर्होरास्वामिनोरंतरं पंचकं संभवति। एकयोगस्तु वर्तमानकालहोराज्ञानार्थम्। अतः षष्टिक्रमगणनया भवद्विवक्षिता सैव होरा भवति ॥

## वारप्रवृत्तिरुदयात्तत्पूर्वं वेति मतयोर्व्यवस्था—

विवाहवृन्दावने तु उदयमारभ्योक्ताः कालहोराः। यथा—"तत्कालार्कन्यूनलग्नांशपिंडाभक्ताः पंचक्षाणिभिर्भुक्तहोराः। भास्वच्छुक्रज्ञेंदुसौरेज्यभौमाः संख्यायेरन्वारतस्ते तदीशाः ॥" इति। अनयोर्विषयविभागो वसिष्ठसंहितायां—"वारप्रवृत्तेर्विज्ञानं क्षणवारार्थमेव हि। अखिलेष्वन्यकार्येषु दिनादिरुदयाद्भवेत् ॥" इति। क्षणवारः कालहोरारूपः। तदर्थं वारप्रवृत्तिः। अन्यकार्येषु दिक्छूलादिषु तिथिवारप्रयुक्तेषु नक्षत्रवारप्रयुक्तेषु चायोगेषु सुयोगेषु च सूर्योदयादेव वारा ग्राह्याः ॥ ५५ ॥

## कालहोराफलं प्रकारान्तरेणापि—

**वारे प्रोक्तं कालहोरासु तस्य धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेऽस्य॥
कुर्याद्दिक्छूलादि चिंत्यं क्षणेषु नैवोल्लंघ्यः पारिघश्चापि दंडः॥५६॥**

अथ कालहोराप्रयोजनमन्यच्च शालिन्याह—वारे प्रोक्तमिति ॥ यत्कर्म यस्मिन् वारे प्रोक्तं तद्दिनस्य सदोषत्वादत्यावश्यककृत्ये तस्य कालहोरायां कर्तव्यम्। यदाह नारदः—"यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते। ग्रहस्य क्षणवारेऽपि तस्य तत्कर्म सर्वदा ॥" इति ॥

## होराफलानि प्रत्येकम्—

अत्र केचित्। यस्य वारे यत्कर्म प्रोक्तं तस्य बलिनो नवांशे सूर्यश्चन्द्रो वा चेत्तिष्ठेत् तदा तत्कर्म कार्यमित्याहुः उक्तं च—"यस्य ग्रहदिने कर्म यत्किंचिदभिधीयते। तस्यांशे संस्थिते सूर्ये चंद्रे वा तद्विधीयते ॥" इति ॥ कैश्चित्प्रत्येकं होराफलान्युक्तानि—"भानुहोरा मृतिं कुर्याच्चंद्रहोरा स्थिरासनम्। काराबंधं भौमहोरा बुधहोरा च पुत्रदा ॥ वस्त्रालंकारदा जीवहोरा शौक्री विवाहदा। जडत्वं शनिहोरायां सप्तहोरा फलं त्विदम् ॥ प्रश्नकाले तु या होरा तस्याः फलमवाप्नुयात् ॥" इति ॥

## उदयाद्धोरानयनफलम्—

उदयादारभ्य होरानयनप्रयोजनं तु—"पादः स्ववर्षे च दलं स्वमासे दिने स्वकीये चरणो-

नरूपम् । रूप स्वहोरास्वितिकालवीर्यमुक्तं हि होरानिपुणैः पुराणैः ॥" इति । युक्तं चैतत् । वर्षेशादीनामुदयादितः प्रवृत्तानां साहचर्याद्वारेशा अप्युदयादेव गणनीयाः॥ अथ प्रसंगान्नक्षत्रप्रयुक्तानां कर्मणामनुष्ठाने प्राप्तेऽपवादमाह—धिष्ण्य इति। यस्मिन् धिष्ण्ये नक्षत्रे यत्कर्म वस्त्रपरिधानादिकमुक्तं तत्सत्यावश्यकत्वे अस्य धिष्ण्यस्य स्वामितिथ्यंशके स्वामिमुहूर्ते कुर्यात् । उक्तं च नारदेन—"यस्मिन्नृक्षे तु यत्कर्म निखिलं कथितं च यत् । तद्दैवत्ये तन्मुहूर्ते कार्यं यात्रादिकं तथा ॥ " इति । मुहूर्तस्वामिनो विवाहप्रकरणे वक्ष्यति । अत्रापि स्वामितिथ्यंशे इदमवश्यं चिंत्यं विचारणीयम् । किम् ? दिक्शूलाद्यं वारशूलं नक्षत्रशूलं च । आदिशब्देन लालाटिकयोगोऽपि। क्षणेषु मुहूर्तेषु इदमवश्यं चिंत्यं विचारणीयम्। एवं पारिघो दंडः क्षणेषु नैवोल्लंघ्यः । यदाह वसिष्ठः—"यत्कर्म कथितमृक्षे यस्मिंस्तत्कर्म तत्क्षणे कार्यम् । दिक्छूलादिकमखिलं पारिघदंडादिविज्ञेयम् ॥" इति । विज्ञेयमवश्यं विचारणीयम् । दिक्छूलादिकं तु यात्राप्रकरणे वक्ष्यति ॥ ५६ ॥

## मन्वाद्यो युगादयश्च-

**मन्वाद्यास्त्रितिथी मधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी**
**ज्येष्ठेंत्ये च तिथिंस्त्विषे नव तपस्यश्वाः सहस्ये शिवा ॥**
**भाद्रेऽग्निश्च सिते त्वमाष्ट नभसः कृष्णे युगाद्याः सिते**
**गोग्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघासिते ॥ ५७ ॥**

## इति दैवज्ञानन्तसुतदैवज्ञरामज्योतिर्विद्विरचिते मुहूर्तचिन्तामणौ शुभाशुभप्रकरणं प्रथमं समाप्तम् ॥ १ ॥

अथ कार्यमात्रनिषिद्धान्मन्वादीन्युगादींश्च शार्दूलविक्रीडितेनाह—मन्वाद्या इति । एते चतुर्दश मन्वाद्या ज्ञेयाः । सिते इति वक्ष्यमाणं पदमनुकृष्य चैत्रादिमासेष्वपि संवध्यते । मधौ चैत्रमासे सिते शुक्लपक्षे त्रितिथी तृतीयापूर्णिमे । ऊर्जे कार्तिके शुक्लपक्षे तिथिरवी पूर्णिमाद्वादश्यौ । शुचावाषाढमासे शुक्लपक्षे दिक्तिथी दशमीपूर्णिमे । ज्येष्ठे अंत्ये फाल्गुने च तिथिः पूर्णिमा । इषे आश्विने शुक्लपक्ष नव नवमी । तपसि मासे माघे मासि शुक्लपक्षे [illegible] सप्तमी। सहस्ये पौषे शुक्लपक्षे शिवा एकादशी । भाद्रपदमासे शुक्लपक्षेऽग्निस्तृतीया । नभसः श्रावणस्य कृष्णपक्षे अमा अमावास्या अष्ट अष्टमी । अत्राष्टमी जन्माष्टमी तदनंतरभाविनी अमावास्या च गृह्यते । यदाह नारदः—"द्वादश्यूर्ज शुक्लपक्षे नवम्याश्वयुजे सित । चैत्रे भाद्रपदे चैव तृतीयाशुक्लसंज्ञिता ॥ एकादशी सिता पौषेऽप्याषाढदशमी सिता । माघे च सप्तमी शुक्ला नभस्येप्यसिताष्टमी ॥ श्रावणे मास्यमावास्या फाल्गुने मासि पूर्णिमा । आषाढे कार्तिके मासि चैत्री ज्येष्ठस्य पूर्णिमा । मन्वादयः स्नानदानश्राद्धेष्वानंत्यपुण्यदाः ॥" इति । मत्स्यपुराणेपि—"आश्वयुक्शुक्लनवमी कार्तिके द्वादशी तथा । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ श्रावणस्य त्वमावास्या पौषस्यैकादशी तथा । आषाढस्यापि दशमी-

माघमासस्य सप्तमी ॥ श्रावणस्याऽष्टमी कृष्णा आषाढस्यापि पूर्णिमा । कार्तिकी फाल्गुनी चित्रा ज्येष्ठी पंचदशी सिता ॥ मन्वंतरादयश्चैता दत्तस्याऽक्षयकारिकाः ॥ " इति । अत्र नारदवाक्ये 'नभस्येप्यसिताष्टमी' इति । तत् कृष्णादिमासाभिप्रायेण । मत्स्यपुराणवचनं तु 'श्रावणस्याष्टमी कृष्णा' इति । तच्छुक्लादिमासाभिप्रायेण ॥ एवं सति जन्माष्टमी सिद्धा उभयमते। अमावास्या शुक्लादिमासाभिप्रायेण जन्माष्टम्यनंतरभाविनी गृह्यते ॥

## युगादयश्चत्वारः–

युगाद्याः युगादयश्चत्वार उच्यंते । बाहुलः कार्त्तिकः राधो वैशाखः गोघ्नी नवमीतृतीये यथासंख्यं ज्ञेये। सिते शुक्लपक्षे कार्तिके शुक्लपक्षे नवमी । वैशाखे शुक्लपक्षे तृतीया । भाद्रमाघासिते यथासंख्यं मदनदर्शौ भाद्रपदकृष्णपक्षत्रयोदशी माघकृष्णाऽमावास्या । एते युगादयश्चत्वारः । यदाह नारदः–" कार्तिके शुक्लनवमी चादिः कृतयुगस्य सा । त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंमिता ॥ कृष्णा पञ्चदशी माघे द्वापरादिरुदीरिता । कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी ॥ " शुक्लादिमासाभिप्रायेण श्राद्धपक्षत्रयोदशी प्रसिद्धशिवरात्र्यनंतराभाविन्यमावास्या च गृह्यते ॥

## अनध्यायाः –

उशनाः–"अयने विषुवे चैव शयने बोधने ह..।अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु॥" इति । याज्ञवल्क्यस्त्वष्टत्रिंशत्तात्कालिकाननध्यायानाह–" संध्यागर्जितनिर्घातभूकंपोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ पंचदश्यां चतुर्दश्यामष्टम्यां राहुसूतके । ऋतुसंधिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च ॥ पशुमंडूकनकुलश्वाहिमार्जारमूषकैः । कृतेंतरे त्वहोरात्रं शुक्रपाते तथोच्छ्रये ॥ खरोष्ट्रगर्दभोलूकसामबाणार्तनिःस्वने । अमेध्यशवशूद्रांत्यश्मशानपतितांतके ॥ देशेऽशुचावात्मनि च विद्युत्स्तनितसंभवे । भुक्त्वार्द्रपाणिरंभोभिरर्द्धरात्रेतिमारुते ॥ पांसुवर्षे दिशां दाहे संध्यानीहारभीतिषु । धावतः पूतिगंधे च शिष्टे च गृहमागते ॥ खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणिरोहणे । अष्टत्रिंशदनध्यायानेतांस्तात्कालिकाञ्जगुः ॥ " इति । अन्यच्च–" अहन्येते ह्यनध्यायाः शिष्यर्त्विग्गुरुबंधुषु । उपाकर्मणि चोत्सर्गे स्वशाखा श्रोत्रिये मृते ॥ " एवमादयोन्येप्यनध्याया धर्मशास्त्रोक्ताः अनुसंधेयाः ॥ ते च व्रतबंधे विद्यारंभे ..विसर्गादौ नित्याध्ययने च यथायोग्यं वर्जनीयाः । सोपपदादीननध्यायान् ग्रंथकृत् व्रतबंधप्रकरणे वक्ष्यतीति शिवम् ॥ ५७ ॥

## शुभाशुभप्रकरणसमाप्तिः–

शुभाशुभप्रकरणं गद्येनोपसंहरति–इति श्रीदैवज्ञेति । " इति हेतु ..करणप्रकारादिसमाप्तिषु " इत्यमरः । श्रीशब्दो ..स्यालंकारे । शुभं सिद्धियोगादि । अशुभं सिंहस्थादि । तयोः प्रकरणानिरूपणम् । अन्यत्स्पष्टम् । ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिन्तामणेः । गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने हि शुभाशुभप्रकरणं पूर्णत्वमभ्यागमत् ॥ १ ॥

इति श्रीविद्वद्वरदैवज्ञमुकुटालंकारनलिकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां शुभाशुभप्रकरणं समाप्तम् ॥ १ ॥

# अथ नक्षत्रप्रकरणम् २.



### नक्षत्रस्वामिनः--

नासत्यांतकवह्निधातृशशभृद्रुद्रादितीज्योरगा
ऋक्षेशाः पितरो भगोर्यमरवित्वष्टाशुगाश्च क्रमात् ॥
शक्राग्नी खलु मित्रशक्रनिर्ऋतिक्षीराणि विश्वे विधि-
गोविंदो वसुतोयपाऽजचरणाऽहिर्बुध्न्यपूषाभिधाः ॥ १ ॥

श्रीगणेशाय नमः ॥ शर्वाणीतनयमवाब्धिदावमीशं नत्वा श्रीगुरुपदभक्तिलब्धविद्यः । गोविंदो विबुधवरप्रहर्षिणीं तां नक्षत्रप्रकरणटिप्पणीं तनोति ॥ अथ नक्षत्रप्रकरणं व्याख्यायते । तत्रादौ नक्षत्राणां प्रसिद्धत्वादेवावक्तव्यतायां तत्स्वामिनः शार्दूलविक्रीडितेनाह--नासत्यांतकेति । एते क्रमादृक्षेशा नक्षत्राधीशा ज्ञेयाः । यथा-अश्विन्या नासत्यावश्विनीकुमारौ । भरण्या अन्तको यमः । कृत्तिकाया वह्निरग्निः । रोहिण्या धाता ब्रह्मा । मृगस्य शशभृच्चन्द्रः । आर्द्राया रुद्रो महादेवः । पुनर्वसोरदितिर्देवमाता । पुष्यस्येज्यो बृहस्पतिः । आश्लेषाया उरगः सर्पः । मघायाः पितरः पूर्वफल्गुन्या भगः सूर्यविशेषः । उत्तरफल्गुन्या अर्यमा सूर्यविशेषः । हस्तस्य रविः सूर्यः । चित्रायास्त्वष्टा विश्वकर्मा । स्वात्या आशुगो वायुः । विशाखायाः शक्राग्नी इन्द्राग्नी । अत्र समुदितयोर्देवतात्वम् । अनुराधाया मित्रः सूर्यविशेषः । ज्येष्ठायाः शक्र इन्द्रः । मूलस्य निर्ऋती राक्षसः । पूर्वाषाढायाः क्षीरमुदकम् । उत्तराषाढाया विश्वे विश्वेदेवाः । अभिजितो विधिः । श्रवणस्य गोविन्दो विष्णुः । धनिष्ठाया वसवोऽष्टौ देवताविशेषाः । शततारकायास्तोयपो वरुणः । पूर्वाभाद्रपदाया अजचरणः सूर्यविशेषः । उत्तराभाद्रपदाया अहिर्बुध्न्यः सूर्यविशेषः । रेवत्याः पूषा सूर्यविशेषः॥ यदाह नारदः--" नक्षत्रेशाः क्रमाद्दस्रयमवह्निपितामहाः । चन्द्रेशादितिजीवाहिपितरो भगसंज्ञिताः ॥ अर्यमार्कस्त्वष्टृमरुच्छक्राग्निमित्रवासवाः । निर्ऋत्युदकविश्वेजगोविंदावसवोऽम्बुपः ॥ ततोजपादहिर्बुध्न्यः पूषा चेति प्रकीर्तिताः ॥ " इति । प्रयोजनं तु तिथिप्रकरणे प्रोक्तमस्माभिः ।

### नक्षत्रस्वामिनां व्यासज्यवृत्तित्वमित्यादि-

अत्र वसव इति बहुवचनांतत्वाद्बहूनामेव व्यासज्यवृत्तिदेवतात्वं प्रतीयते । " धनिष्ठानक्षत्रं वसवो देवताः " इति श्रुत्युक्तेश्च । एवं सति केचिद्दीपिकाकारादयो बहुत्वमविवक्षितमिति मत्वा वसुशब्दं च द्रव्यवाचकं मत्वा स्वं धनं द्रव्यमित्यादिशब्दं धनिष्ठानक्षत्रवाचकं मन्यन्ते-ते चिन्त्योक्तयो वेदितव्याः ॥

## नक्षत्रेषु कार्याणि-

अत्र प्रसंगात्प्रत्येकं नक्षत्रकृत्यानि ग्रन्थकृदनुक्तान्युच्यंते । तान्याह नारदः-" वस्रो-पनयनक्षीरसीमन्ताभरणक्रिया । स्थापनाश्वेभयानस्त्रीकृषिविद्यादयोऽश्विभे ॥ १ ॥ वापीकूपत-डागादिविषशस्त्रोग्रदारुणः । बिलप्रवेशगणितानिःक्षेपा याम्यभे शुभाः ॥ २ ॥ अग्न्याधानास्त्र-शस्त्रोग्रसंधिविग्रहदारुणः । संग्रामौषधवादित्रक्रियाः शस्ताश्च वह्निभे ॥ ३ ॥ सीमन्तोन्नयनो-द्वाहवस्त्रभूषास्थिरक्रिया । हयहस्त्यभिषेकाश्च प्रतिष्ठा ब्रह्मभे शुभाः ॥ ४ ॥ प्रतिष्ठा भूषणो-द्वाहसीमंतोन्नयनक्रियाः । क्षौरवास्तुगयोष्ट्राश्वयात्राः शस्ताश्च चन्द्रभे ॥ ५ ॥ ध्वजतोरण-संग्रामप्राकारास्त्रक्रियाः शुभाः । संधिविग्रहवैराणि रसाद्याः शर्वभे शुभाः ॥ ६ ॥ प्रतिष्ठायानसीमन्तवस्त्रवास्तूपनायनम् । क्षौराश्वकर्मादितिभे विधेयं धान्यभूषणम् ॥७॥ यात्रा प्रतिष्ठा सीमन्तव्रतबन्धप्रवेशनम् । करग्रहं विना सर्व कर्म देवेज्यभे शुभम् ॥ ८ ॥ अनृतं-व्यसनं द्यूतं धातुवादौषधाहवम् । विवादरसवाणिज्यं कर्म कद्रूजभे शुभम् ॥ ९ ॥ कद्रूजः सर्पः ॥ कृषिवाणिज्यगोधान्यरणोपकरणादिकम् । विवाहनृत्यगीताद्यं निखिलं कर्म पितृभे ॥ १० ॥ विवादाविषशस्त्राग्निदारुणोग्रहवादिकम् । पूर्वात्रयेऽखिलं कर्म कर्त्तव्यं मांसविक्रयः ॥ ११ ॥ प्रतिष्ठोद्वाहसीमंताभिषेकव्रतबन्धनम् । प्रवेशस्थापनाश्वेभवास्तुकर्मोत्तरात्रये ॥१२॥ प्रतिष्ठोद्वाहसीमन्तयानवस्त्रोपनायनम् । क्षौरवास्त्वभिषेकाश्च भूषणं कर्म भानुभे ॥ १३ ॥ प्रवेशवस्त्रसीमंतप्रतिष्ठाव्रतबंधनम् । त्वाष्ट्रभे वास्तुविद्याश्च क्षौरभूषणकर्म यत् ॥ १४ ॥ प्रतिष्ठोपनयोद्वाहवस्त्रसीमंतभूषणम् । विषादश्वेभकृष्यादिक्षौरकर्म समारभे ॥ १५ ॥ वस्त्र-भूषणवाणिज्यरसधान्यादिसंग्रहम् । इन्द्राग्निभे नृत्यगीताशिल्पलेखनकर्म्म यत् ॥ १६ ॥ प्रवे-शस्थापनोद्वाहव्रतबन्धाष्टमंगलम् । वस्त्रभूषणवास्तुश्च मैत्रभे संधिविग्रहम् ॥ १७ ॥ क्रूरोग्र-शस्त्रवाणिज्यगोमहिष्यम्बुकर्म च । इन्द्रभे नृत्यवादित्रशिल्पलोहाश्मलेखनम् ॥ १८ ॥ विवा-हकृषिवाणिज्यदारुणाहवभेषजम् । निर्ऋतिभे नृत्यशिल्पसंधिविग्रहलेखनम् ॥ १९ ॥ " इति । पूर्वाषाढोत्तराषाढयोः कृत्यमुक्तम् ॥ २० ॥ २१ ॥ "प्रतिष्ठाक्षौरसीमंतयानोपनय-नौषधम् । पुरग्रामगृहारंभा विष्णुभे पट्टबंधनम् ॥२२॥ वस्त्रोपनयनं क्षौरप्रतिष्ठायानभूषणम् । वसुभे वास्तुसीमंतप्रवेशास्त्रविभूषणम् ॥ २३ ॥ प्रवेशास्थापनक्षौरमौंजीबन्धनभेषजम् । अश्व-रोहणसीमंतं वास्तुकर्म जलेशभे ॥ २४ ॥" इति ॥ पूर्वाभाद्रपदोत्तराभाद्रपदयोः कृत्यमुक्तं पूर्वम् ॥ २५ ॥ २६ ॥ विवाहव्रतबन्धाश्च प्रतिष्ठायानभूषणम् । प्रवेशवस्त्रसीमंतक्षौरभे-षजमंत्यभे ॥ " २७ ॥ इति ॥ १ ॥

## ध्रुवनक्षत्राणि-तत्कृत्यानि च-

**उत्तरात्रयरोहिण्यौ भास्करश्च ध्रुवं स्थिरम् ॥**
**तत्र स्थिरं बीजगेहशांत्यारामादिसिद्धये ॥ २ ॥**

अथ ध्रुवगणं तत्कृत्यं चानुष्टुभाह-उत्तरात्रयेति । उत्तरात्रयम् उत्तराफल्गुन्युत्तराषाढा उत्तराभाद्रपदास्तिस्र उत्तरा रोहिणी च एतानि नक्षत्राणि ध्रुवसंज्ञकानि स्थिरसंज्ञानि चेति

संज्ञाद्वयम् । तत्र ध्रुवनक्षत्रेषु स्थिरं कर्म कार्यम् । तथा बीजं यवादि गेहं गृहं शान्त्यादि विनायकशान्त्यादि आरामो नगरोपकंठवार्तिवनम्–आदिशब्दान्मृदुनक्षत्रोक्तमपि कर्म सिद्ध्यै भवति । तदुक्तं वसिष्ठेन–"स्थिरसंज्ञं भचतुष्टयमंबुजस्यृक्षमुत्तरात्रितयम् । नरपतिपत्तनसदनप्रवेशबीजादि सिद्ध्यते तत्र ॥ मृदुवृंदे कथितान्यपि स्थिरवृंदे तानि कार्याणि ॥" इति ॥संज्ञाद्वये प्रमाणमुच्यते–" ध्रुवमचलं क्षिप्रलघुचरं चलं चात्र मृदुसंज्ञम् ॥ साधारणमिश्राख्यं क्रूरोग्रं तीक्ष्णदारुणं तुल्यम् ॥." इति वसिष्ठोक्तम् । एवं भास्करो रविरपि स्थिरः । यदाह वसिष्ठः –"सूर्यः स्थिरः शीतकरश्चरात्मा धराज उग्रः शशिजो विमिश्रः । देवेंद्रपूज्यो लघुरिंद्रशत्रुपूज्यो मृदुस्तीक्ष्णतनुश्च सौरिः " ॥ इति । अत्रापि सामान्यतः स्थिरकृत्यं कार्यं मूलश्लोकोक्तम्, अन्यदपि वारोक्तकर्म कार्यमभिधानात् ॥ यदाह नारदः–"नृपाभिषेकमांगल्यसेवायानास्त्रकर्म यत् । औषधाहवधात्वादि विधेयं भानुवासरे ॥ " इति ॥ २ ॥

### चरनक्षत्राणि–तत्र कृत्यानि च–

**स्वात्यादित्ये श्रुते त्रीणि चंद्रश्चापि चरं चलम् ॥**
**तस्मिन्गजादिकारोहो वाटिकागमनादिकम् ॥ ३ ॥**

अथ चरगणं तत्कृत्यं चानुष्टुभाह–स्वात्यादित्य इति । स्वाती आदित्यम् अदितिर्देवतास्य आदित्यम् ॥ " दित्यदित्यादित्यपत्युत्तरपदाण्यः, इति ण्यः । आदिवृद्धिः । " यस्येति च" इतीकारलोपः ॥ आदित्यं पुनर्वसुः । श्रुतेः श्रवणमारभ्य त्रीणि श्रवणधनिष्ठाशततारकाः सोमवारश्च चरसंज्ञाश्चलसंज्ञाश्चैते ज्ञेयाः । तस्मिंश्चरनक्षत्रे गजो हस्ती तदादयोऽश्वादयस्तेषामारोहो वाटिका आरामस्तत्र गमनं यात्रा आदिशब्दाल्लघुनक्षत्रोक्तमपि कर्म । सिध्यतीतिशेषः । तदाह वसिष्ठः–"अदितिः श्रुतिभात्रितयं चरसंज्ञं पञ्चकं मरुद्भं च । वाहनकर्मविभूषणचरकार्योद्यानमंत्रसिद्ध्यैतत् ॥ कथितान्यपि लघुवृंदे चरसंज्ञे तानि कार्याणि । मणिमुक्ताफलहेमकसद्रजतत्रपुसीसकर्माणि ॥ " इति । नारदः–"शंखमुक्ताम्बुरजतवृक्षेक्षुस्त्रीभूषणम् । पुष्पगीतक्रतुक्षीरकृषिकर्मेन्दुवासरे" ॥ ३ ॥

### उग्रनक्षत्राणि–तत्र कृत्यानि च–

**पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा ॥**
**तस्मिन्घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति ॥ ४ ॥**

अथोग्रगणमनुष्टुभाह–पूर्वात्रयमिति पूर्वात्रयं पूर्वाफाल्गुनी पूर्वाषाढा पूर्वाभाद्रपदारूपं नक्षत्रत्रयं याम्यं भरणी मघा च तथा कुजो भामश्च उग्रसंज्ञः क्रूरसंज्ञश्च तस्मिन्नुग्रनक्षत्रे घातो हननमग्निराग्निदाहः शाठ्यं खलत्वं विषं विषभक्षणादि शस्त्रं शस्त्रमारणादि आदिशब्दादन्यदपि अरिष्टकृत्यं दारुणनक्षत्रोक्तं सिध्यति निष्पद्यते । उक्तं च वसिष्ठेन–"पूर्वात्रितयं पित्र्यं भमुग्रसंज्ञं च पंचकं याम्यम् । मारणभेदनबन्धनविषहननं पंचभे कार्यम् ॥ यद्दारुणभे चोक्तं तत्कमव त्वथोग्रभे कार्यम् ॥" इति । नारदः–" विषाग्निबंधनस्तेयसंधिविग्रहमासवम् । धात्वाकरप्रवालस्त्रीकर्मभूमिजवासरे " ॥ ४ ॥

मिश्रनक्षत्राणि-तत्र कृत्यानि च-

**विशाखाग्नेयभे सौम्यौ मिश्रं साधारणं स्मृतम् ॥**
**तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादिसिद्धये ॥ ५ ॥**

अथ मिश्रगणमनुष्टुभाह-विशाखेति । विशाखा आग्नेयं कृत्तिका सौम्यो बुधश्च एतत्त्रयं मिश्रसंज्ञं साधारणसंज्ञं च । तत्र मिश्रसंज्ञेषु नक्षत्रेषु अग्निकार्यमग्निहोत्रं मिश्रं नक्षत्रांतरोक्तं कर्म वृषोत्सर्गः काम्यः आदिशब्दादुग्रमपि कर्म सिद्धये भवति । तदाह वसिष्ठः-"भद्वितय-श्वसनसखं सेंद्राग्निभकं हि मिश्रसंज्ञं स्यात् । निखिलानि च साधारणकार्याण्युग्राणि तत्र कार्याणि" इति ॥ नारदः-"नृत्यशिल्पकलागीतलिपिभूरससंग्रहम् । विवाहधान्यसंग्राहकर्म सौम्यस्य वासरे"॥ ५ ॥

लघुनक्षत्राणि-तत्र कृत्यानि च-

**हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा ॥**
**तस्मिन्पण्यरतिज्ञानं भूषाशिल्पकलादिकम् ॥ ६ ॥**

अथ लघुगणमनुष्टुभाह-हस्ताश्वीति । पूर्वार्द्धं स्पष्टम् । तस्मिन् लघुनक्षत्रे पण्यं विक्रेय-वस्तु रतिः स्त्रीभोगः ज्ञानं शास्त्रादेः भूषा आभरणं शिल्पं चित्रादि कलाश्चतुःषष्टिकला नृत्या-दिकाः-आदिशब्दाच्चरनक्षत्रोक्तमपि कार्यम् । तदाह वसिष्ठः-"सुरसचिवाश्विनहस्ता-स्ताराः स्युः क्षिप्रसंज्ञकास्तासु । औषधपण्यविभूषणशिल्पकलाज्ञानकर्मसिद्धिः स्यात् ॥ चरधिष्ण्ये कथितान्यपि कार्याण्यखिलानि लघुगणे नूनम् ॥" इति ॥ नारदोऽपि-"क्षिप्रं सूर्याश्विपुष्यभम्" इत्याह । अत्राभिजिन्नोक्तः । दैवज्ञमनोहरे 'आर्ष्टिषेण' इत्युक्त्वा पठितं "लघुक्षिप्रं करस्तिष्योभिजिदास्रं बृहस्पतिः" इति । अत एवोक्तं श्रीपतिना-"अश्विनी गुरुभमर्कदैवतं साभिजिल्लघुचतुष्टयं स्मृतम्" इति । वसिष्ठादिभिस्तु प्रत्येकं नक्षत्रकृत्येषु अभिजितोऽनुक्तिः । वारकृत्ये नारदः-"यज्ञपौष्टिकमांगल्यस्वर्णवस्त्रादिभूषणम् । वृक्षगुल्मल-तायानकर्म देवेज्यवासरे" इति ॥ ६ ॥

मृदुनक्षत्राणि-तत्र कृत्यानि च-

**मृगांत्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा ॥**
**तत्र गीतांबरक्रीडामित्रकार्यविभूषणम् ॥ ७ ॥**

मृदुगणमनुष्टुभाह-मृगांत्येति । मृगः अंत्यं रेवती चित्रा मित्रर्क्षमनुराधा भृगुःशुक्रः मृदुसंज्ञं मैत्रसंज्ञं च । अत्र गीतम्, अंबरं वस्त्रम्, क्रीडा स्त्रिया सह क्रीडा, मित्रस्येष्टस्य कार्यं विभूषण-मलंकार एतत्सिध्यति ॥ यदाह वासिष्ठः-"मृदुवृंदं भचतुष्टयमंत्यं त्वाष्ट्राख्यसौम्यामित्रर्क्षम् । मंगलवनिताभूषणमंदिरगीतानि सिध्यति" इति ॥ तत्र नारदः-"नृत्यवादित्रगीतादिस्वर्णस्त्री-रत्नभूषणम् । भूपण्योत्सवगोधान्यकर्म भार्गववासरे" ॥ ७ ॥

## तीक्ष्णनक्षत्राणि–तत्र कृत्यानि च–

**मूलैन्द्रार्द्राहिभं सौरिस्तीक्ष्णं दारुणसंज्ञकम् ॥**
**तत्राभिचारघातोग्रभेदाः पशुदमादिकम् ॥ ८ ॥**

अथ तीक्ष्णगणमनुष्टुभाह–मूलैंद्रेति । मूलम् ऐंद्रं ज्येष्ठा आर्द्रा अहिभमाश्लेषा सौरिः शनैश्चरः तीक्ष्णसंज्ञं दारुणसंज्ञं च । तत्र तीक्ष्णनक्षत्रे अभिचारकर्माणि उग्रं भयंकरकृत्यं मारणादिर्भेदः अत्यंतः मित्रयोः कलहोत्पादनादि पशूनां हस्त्यादीनां दमः शिक्षा आदिशब्दात् बंधनादीनि । यदाह वसिष्ठः–"दारुणभानि पुरन्दरकोणपाशिवसर्पदैवानि । दारुणबंधनदहनप्रहरणकर्माणि सिद्धिमायांति" ॥ इति । नारदः–"त्रपुसीसायसाश्मास्त्रविषपानासवानृतम् । स्थिरकर्माखिलं वास्तुसंग्रहं सौरिवासरे" ॥ इति ॥ ८ ॥

## ध्रुवादिसंज्ञाः ।

| संज्ञा | नक्षत्राणि | ग्रहाः |
|---|---|---|
| ध्रुवं, स्थिरं | रो. उ. फा. उ. षा. उ. भा. | रविः |
| चरं, चलं | स्वा. पुन. श्र. ध. श. | चन्द्रः |
| उग्रं, क्रूरं | पू. फा. पू. षा. पू. भा. भ. म. | भौमः |
| मिश्रं, साधारणं | वि. कृ. | बुधः |
| क्षिप्रं, लघु | ह. अश्वि. पुष्य. अभि. | गुरुः |
| मृदु, मैत्रं | मृ. रे. चित्रा. अनु. | शुक्रः |
| तीक्ष्णं, दारुणं | मू. ज्ये. आर्द्रा. आश्ले. | शनिः |

## अधोमुखोर्ध्वमुख–तिर्यङ्मुखनक्षत्राणि–

**मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयं ध्रुवम् ॥**
**तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानीदृशकृत्यमेषुसत् ॥ ९ ॥**

अथाधोमुखोर्ध्वतिर्यङ्मुखनक्षत्राणि इंद्रवंशयाह–मूलेति ॥ मूलम् अहिराश्लेषा मिश्रं कृत्तिका विशाखे उग्रं पूर्वात्रयमघाभरण्यः एतानि नव नक्षत्राण्यधोमुखानि ज्ञेयानि । एषु ईदृशकृत्यमधोमुखकृत्यं वापीकूपादि तत्समीचीनमुक्तम् । तदुक्तं गरुडपुराणे–"भरणीकृत्तिकाश्लेषामघामूलविशाखिकाः । तिस्रः पूर्वास्तथा चैवमधोवक्त्राः प्रकीर्तिताः" ॥ एषु 'वापीकूपतडागादिखननं च तृणादिकम् । देवतागारखननं निधानखननं तथा ॥ गणितं

ज्योतिषारंभं खनीबिलप्रवेशनम् । कुर्यादधोगतान्येव कार्याणि वृषभध्वज ॥ '' इति । आर्द्रा इज्यः पुष्यः हरित्रयं श्रवणधनिष्ठाशततारकाः ध्रुवमुत्तरात्रयरोहिण्यः एतन्नक्षत्रनवकमूर्ध्वास्यमूर्ध्वमुखं भवेत् । अत्राप्येतादृशकृत्यं प्रासादादि सत्स्यात् । तदुक्तं गरुडपुराणे-'' रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयम् । वारुणं श्रवणं चैव नव चोर्ध्वमुखाः स्मृताः । एषु राज्याभिषेकं च पट्टबंधं च कारयेत् ॥ '' इति । ऊर्ध्वमुखानि उच्छ्रितानि सर्वाणि एषु च कारयेत् ॥ मैत्रं मृदुनक्षत्रं मृगरेवतीचित्रानुराधाः करो हस्तः अनिलः स्वाती अदितिः पुनर्वसुः ज्येष्ठा आश्विनम् अश्विनी एतन्नक्षत्रनवकं तिर्यङ्मुखं पार्श्वमुखं भवेत् । अत्रापि तादृशमेव कृत्यं चक्ररथहलादिकं भवेत् । तदुक्तं गरुडपुराणे-'' रेवती चाश्विनी चित्रा स्वाती हस्तः पुनर्वसुः । अनुराधा मृगज्येष्ठा एताः पार्श्वमुखाः स्मृताः ॥ गजोष्ट्राश्वबलीवर्ददमनं महिषस्य च । बीजानां वपनं कुर्याद्गमनागमनादिकम् ॥ चक्रयंत्ररथादीनां नवादीनां प्रवाहणम् । पार्श्वेषु यानि कर्माणि कुर्यादेतेषु तानि च '' इति ॥ ननु सर्वेषामेव कर्मणां पार्थक्येन नक्षत्राभिधानादिदं पुनरुक्तं किमर्थमुक्तमिति चेन्न । विशेषनक्षत्रविहितानां कर्मणामवश्यकर्त्तव्यत्वे सति कतिपयदिनमन्यमुहूर्तालब्धौ सत्यां कर्मण आकारमधोमुखादिकं विदित्वा तत्तन्नक्षत्रेषु तानि तानि कर्माणि कार्याणि । यानि सर्वथा विशेषतोऽनुक्तान्येव बिलप्रवेशनिधिखननचक्रयंत्रहलपरिखाद्यूतक्रीडामेषगर्दभगर्त्तादीनि तेषामेष्वेव नक्षत्रेषु कृतिरुचिता । एवमन्येषामप्यप्रसिद्धानां कर्मणां तिर्यङ्मुखाद्याकारज्ञाने सत्येषु नक्षत्रेषु कर्त्तव्यतौचित्यात् । सामान्येन विशेषभावेन च सुदिनलब्धिः ' द्विर्बद्धं सुबद्धं भवति ' इति न्यायादत्युत्तमैव । सद्यःकालपक्षे तु-' धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकेस्य ' इति वचनान्मुहूर्तं कार्यमित्यलमियता ॥ ९ ॥

### प्रवाल-दन्त-शंख-स्वर्ण-वस्त्र-धारणे मुहूर्ताः-

**पौष्णध्रुवाश्विकरपंचकवासवेज्यादित्ये प्रवालरदशंखसुवर्णवस्त्रम् ॥ धार्यं विरिक्तशनिचन्द्रकुजेह्नि रक्तं भौमे ध्रुवादितियुगे सुभगा न दध्यात् ॥ १० ॥**

अथ प्रवालदंतशंखसुवर्णवस्त्रपरिधानमुहूर्तं वसंततिलकेनाह-पौष्णेति । पौष्णं रेवती ध्रुवाणि रोहिण्युत्तरास्तिस्रः अश्विनी करपंचकं हस्ताचित्रास्वातीविशाखानुराधाः वासवं धनिष्ठा इज्यः पुष्यः आदित्यः पुनर्वसुः अयं समाहारद्वंद्वः । तत्र प्रवालं विद्रुमम् । पवलेति महाराष्ट्रभाषाज्ञाः मूंगा इति कान्यकुब्जाः । रदा हस्तिदंताः अर्थाद्वलयादि शंखः शंखवलयं सुवर्णं वस्त्रं श्वेतम् । एतानि वस्तूनि धार्याणि । तानि रिक्तातिथिशनिचंद्रभौमरहितेह्नि दिने धार्याणि । यदाह श्रीपतिः-रोहिणीषु करपंचकेश्विभे त्र्युत्तरेपि च पुनर्वसुद्वये । रेवतीषु वसुदैवते शुभे नव्यवस्त्रपरिधानमिष्यते ॥ '' इति । प्रवालादीनां तु विशेषस्तेनैवोक्तः-''करादिपंचकेऽश्विभे सपौष्णवासरे स्मृता । धृतिश्च शंखकांचनप्रवालरक्तवाससाम् ॥ '' इति ॥

## तत्र वाराः–

वारानप्याह–"जणि रवा सततमंबुभिरार्द्रमिंदौ भौमे शुचे बुधदिन च भवेद्धनाय । ज्ञानाय मंत्रिणि भृगौ प्रियसंगमाय मंदे मलाय च नवाम्बरधारणं स्यात् ॥" इति । अतः परिशेषात्सूर्यभौमशनयो निषिद्धाः ॥

## वस्त्रादौ वर्णभेदेन वारभेदा धारणे–

रक्तं कौसुंभादिरंगेण रक्तं वस्त्रं भौमे धार्यम् । "मांजिष्ठकौसुं...करागयोश्च महीसुतः कांचनभूषणेषु" इति तेनैवोक्तत्वात् । "नासत्यपौष्णवसुभैः करपंचकेन मार्तडभौमगुरुदानवमंत्रिवारैः । मुक्तासुवर्णमणिविद्रुमशंखदंतरक्तांबराणि विधृतानि भवंति सिद्धौ ॥" इति दैवज्ञवल्लभोक्तेश्च ॥

## तत्र स्त्रीणां विशेषः–

स्त्रीणां विशेषः । ध्रुवादितियुगे उत्तरात्रयरोहिणीपुनर्वसुपुष्येषु सुभगा सभर्तृका स्त्री प्रवालादिकं दध्यात् । उक्तं च दीपिकायां–"पुष्टेंदौ समये शुभे ध्रुववसुराचार्यादिताशेंऽगना नो रत्नं बिभृयात्प्रवालकमणिं शंखेभदंतौ तथा ॥" इति ॥

## स्नाने वस्त्रभूषणादिधारणे च स्त्रीणां निषेधादि–

केचित्तु शततारानक्षत्रे स्त्रीणां स्नानमपि निषिद्धम् । उक्तं च–"रोहिणीगुरुपुनर्वसूत्तरे या बिभर्ति नववस्त्रभूषणम् । सा न योषिदवलंबते पतिं स्नानमाचरति वारुणेपि या ॥" इति चंडेश्वरोपि–"स्नानं कुर्वीत या नार्यश्चंद्रे शतभिषान्विते । सप्तजन्म भवद्वंध्या विधवा दुर्भगा भृशम् ॥ प्रमादाच्छतभस्नानं नारीणां यदि जायते । पूजयेत्स्वामिनं तत्र ह्यात्मना च धनेन च ॥" इति । विशेषो राजमार्तंडे–"अस्तंगते भृगुसुते शयने च विष्णोर्जन्माद्यचापझषगे दिनपे न दध्यात् । रक्तेंदुभानुदिवसेंशकवर्जिते च शंखं च रक्तपटकं युवतिः कथंचित् ॥" दिनपः सूर्यः । रक्तः भौम इत्याहुः ॥ १० ॥

## वस्त्राय दाहच्छेदपंकलेपेषु शुभाशुभविचारः–

**वस्त्राणां नवभागकेषु च चतुष्कोणेऽमरा राक्षसा**
**मध्यत्र्यंशगता नरास्तु सदशे पाशे च मध्यांशयोः॥**
**दग्धे वा स्फुटितेंबरे नवतरे पंकादिलिप्ते न सद्रक्षोंऽशे**
**नृसुरांशयोः शुभमसत्सर्वांशके प्रांततः ॥ ११ ॥**

अथ वस्त्रस्य नवधाविभक्तस्य दग्धादिदोषे शुभाशुभफलं शार्दूलविक्रीडितेनाह वस्त्राणामिति । वस्त्राणां नवभागाः कार्याः । कोणचतुष्टये अमरा देवाः स्थाप्याः । राक्षसा मध्यभूतांशत्रयगता ज्ञेयाः । नराः सदशे दशासहिते पाशे च पुनर्मध्ययोरंशयोः स्थाप्याः । एतदुपलक्षणं–शयनासनपादुकास्वप्यस्य विचारस्य । तत्र चेद्रक्षोंश नवतरे अतिनूतने अंबरे वस्त्रे दैवाद्दग्धे स्फुटिते पाषाणधात्वादिभिर्निहते पंकेन कर्दमेन आदिशब्दाद्गोमयादिभिर्लिप्ते उपहत सति तद्वस्त्रं न सत् शुभफलजनकं न भवति किंतु मरणं विदधा-

## मूलशान्तिप्रकारः तत्र जातदोषपरिहारार्थः–

शौनकः–"रुद्रकुम्भस्थापनम्–पुण्यर्ग्भिर्मंत्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः । तत्रोदकुंभं सुश्लक्ष्णं रक्तं व्रणविवर्जितम्, ।। अकृष्णमूलानिर्णिक्तं पूरयेन्निर्मलांभसा । वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा ।। कूर्चहेमसमायुक्तं नूत्नपल्लवसंयुतम् । स्वस्तिकोपरि विन्यस्य क्षीरिद्रुमसुपल्लवैः ।। द्रोणव्रीहींश्च निःक्षिप्य ऐशाने च निधापयेत् । पञ्चरत्नानि निःक्षिप्य सर्वौषधिसमन्वितम् ।। अर्चितं गंधपुष्पाद्यैः श्रीरुद्रंस्थापयेत्ततः । तत्राप्रतिरथं १ सूक्तं शत २ रुद्रानुवाककम् ।। ३ रक्षामंत्रं तथा पुण्यं रक्षोघ्नं४च स्पृशञ्जपेत् ।। त्रियंबकं जपेत्सम्यगष्टोत्तरसहस्रकम् ।। एकैकवारं जापी च पावमानीः स्पृशञ्जपेत् । जपस्य पंच कुंभांश्च द्वयं वा तदलाभतः ।। श्रीरुद्रस्यैककुंभश्च सर्वसूक्तानि तत्र तु ।। ततः देवताप्रतिष्ठा–अग्निस्थापनं च–अधान्यं पंचमं कुंभं पूर्वोक्तैर्लक्षणैर्युतम् ।। चतुःप्रस्रवणं कुर्यात्पंचवक्त्रं च तद्भवेत् ।। वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा ।। पंचरत्नसमायुक्तमाम्रपल्लवसंयुतम् । गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ।। राजद्वारप्रदेशाच्च मृदमानीय निःक्षिपेत् । कुंभस्य नैर्ऋते देशे होमदेशं प्रकल्पयेत् ।। गोमयालेपिते देशे कुर्यात्स्थंडिलमुत्तमम् । कृत्वाग्निमुखपर्यंतमुल्लेखादिस्वशाखतः ।। पूर्णपात्रनिधानांतं कृत्वा पूजां समारभेत् । नक्षत्रदेवतारूपं सुवर्णेन प्रयत्नतः ।। निष्कमानेन चार्द्धेन पादेनापि स्वशक्तितः । प्रतिमां लक्षणैर्नैकां कारयित्वा विचक्षणः ।। यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् । सुवर्णं सर्वदैवत्यं सर्वदेवात्मकोऽनलः ।। सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः । संस्मरेन्निर्ऋतिं१९श्यामं सुमुखं नरवाहनम् ।। रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितम् । प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् ।। पङ्कजं कारयेद्भूमौ रक्तामैर्व्रीहितंडुलैः । चतुर्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वितम् । तस्योपरि न्यसेत्पात्रं स्वर्णं वा रौप्यमृन्मयम् । शुद्धवस्त्रेण संच्छाद्य तत्र मूलानि निःक्षिपेत् ।। मूलानि–शतमूलानि । तदलाभे विष्णुक्रांता सहदेवी तुलसी तु शतावरी । मूलानीमानि गृह्णीयाच्छतालाभे विशेषतः ।। स्थापयेत्कर्णिकामध्ये वस्त्रगंधाद्यलंकृतम् । कूर्चहेमजलोपेतं कुंभौषधिसमन्वितम् ।। कुंभोपरि न्यसेद्विद्वान्मूलनक्षत्रदैवतम् । अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः ।। अधिदेवं जपेदादौ ज्येष्ठा१८नक्षत्रदैवतम् २० ।" पूर्वाषाढायां जलम् । उत्तराषाढा २१ ऋक्षे विश्वेदेवाः । विष्णुः २२ वसवः २३ वरुणः २४ अजैकपात् ।। २५ अहिर्बुध्न्यः २६ पूषा २७ अश्विनौ १ यमः २ अग्निः ३ प्रजापतिः ४ सोमः ५ रुद्रः ६ अदितिः ७ बृहस्पतिः ८ सर्पाः ९ पितरः १० भगः ११ अर्यमा १२ सविता १३ त्वष्टा १४ वायुः १५ इन्द्राग्नी १६ मित्रः १७ इत्याद्यनुराधांतमर्चयेत् ।। ततः पूजा–"ऐंद्रादीशानपर्यंतं पूजयेत्स्वस्वनामतः ।। स्वलिंगोक्तैश्च मन्त्रैश्च प्रधानादीन्प्रपूजयेत् । पञ्चामृतेन संस्नाप्य आवाह्याथ समर्चयेत् ।। उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः । रक्तचन्दनगन्धाढ्यैः पुष्पैः कृष्णसितादिभिः ।। मेषशृंगादिधूपैश्च घृतदीपैस्तथैव च । सुरापौलिकमांसाद्यैर्नैवेद्यैर्भोजनादिभिः ।। मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् । सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् ।। पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ।। उक्तगन्धाद्यलाभे तु यथालाभं समर्पयेत् ।। ततो होमः–पुष्पांतं तु समभ्यर्च्य होमं कुर्याद्यथोदितम् । निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथाविधि ।। हविर्गृहीत्वा विधिवन्नैर्ऋत्यां च ऋचा हुनेत् । मोषुणः परा.

परेति यत्तेदेवेतिवा पुनः ॥ पायसं घृतसंमिश्रं हुनेदष्टोत्तरं शतम् ॥ हुनेत् होमयेत् । समि- दाज्यचरून्पश्चाच्छक्तितः संख्यया हुनेत् ॥ अधिदैवतयोश्चैव जुहुयात्स्वस्वमंत्रतः ॥ चतु- र्थ्यन्तैर्नमोन्तैश्च स्वाहांतैः स्वस्वमंत्रकैः । नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् ॥ कृणुष्वेति पञ्चदशभिर्जुहुयात्कृसरं ततः ॥ गायत्र्या जातवेदेति त्रियंबकमिति क्रमात् ॥ सीरा युंजंति तामग्निं वास्तोष्पत्यग्निमेव च । तामग्निवर्णां तपसा ज्वलंतीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ क्षेत्रस्य पतिना गृणानाग्निं दूतं तथैव च । श्रीसूक्तेन तथाविद्वान्समिदाज्यचरून्क्रमात् ॥ अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः । त्वं नः सोमेन पायसं जुहुयात्तु त्रयोदश ॥ चतुर्गृहीतमाज्ये च या ते रुद्रेति मंत्रतः । स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् ॥ हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत् । आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् । होमशेषं समाप्याथ वह्निमारोपयेद्बुधः। कुम्भाभि- मंत्रणं कुर्याद्दक्षिणेनाभिमंत्रयेत्॥मृत्युप्रशमनार्थाय जपेत्त्र्यंबकं शतम्।रुत्रकुंभोक्तमार्गेण रुद्र- मंत्रं स्पृशञ्जपेत् ॥ धूपं दीपं च नैवेद्यं कुम्भयुग्मे निवेदयेत् । प्रसादयेत्ततो देवमभिषेकार्थमा- दरात् ॥ तस्मिन्काले ग्रहातिथ्यं कर्तव्यं भूतिमिच्छता । पृथक्प्रशस्तं तत्रैव नक्षत्रेष्ट्या सहैव च ॥ ततोऽभिषेकः-अभिषेकविधिं वक्ष्ये सर्वाचार्यैरुदीरितम् । भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः॥ दारपुत्रसमेतस्या कुर्युस्तस्याभिषेचनम् । अक्षीभ्यामिति सूक्तेन, पावमानीभिरेवच ॥ आपोहिष्ठेतिनवभिराप इद्वा इयेन च । सहस्राक्षत्र्यृचेनापिदेवस्यत्वेतिमंत्रतः ॥ शिवसंक- ल्पमंत्रेण वक्ष्यमाणैश्च मंत्रकैः । योसौवज्रधरो देवो महेंद्रो गजवाहनः ॥ मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु । योसौ शक्तिधरो देवो हुतभुग्मेषवाहनः ॥ सप्तजिह्वश्च देवोग्निर्मूलदोषं व्यपोहतु । योसौ शक्तिधरो देवो धर्मो महिषवाहनः ॥ मूलजातशिशोर्दोषं व्यपोहतु यमो मम । योसौ खड्गधरो देवी निर्ऋती राक्षसाधिपः ॥ प्रशामयतु मूलोत्थदोषं गंडांतसंभवम् । योसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहः प्रचेताह्वो मूलोत्थाघं व्यपोहतु । योसौ देवो जगत्प्राणो मारुतो मृगवाहनः ॥ प्रशामयतु मूलोत्थं दोषं बालकशांतिदः । योसौ निधि- पतिर्देवः खड्गभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु । योसौ पशुपति- र्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडांतदोषमाशु व्यपोहतु ॥ विघ्नेशः क्षेत्रपो दुर्गा लो- कपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः । तच्छंयोरभिषेकं तु सर्वदोषोप- शांतिदम् । सर्वकामप्रदं दिव्यं मंगलानां च मंगलम् । वस्त्रांतरितकुंभाभ्यां पश्चात्तं स्नापये- त्ततः ॥ ततः ऋत्विगादिभ्यो दक्षिणा तारतम्येन-ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः । यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् ॥ धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् । निर्ऋतिप्रतिमां वस्त्रकुम्भहेमादि दापयेत् ॥ श्रीरुद्रजापिने देयः कृष्णोऽनड्वान् प्रयत्नतः । तत्कुम्भवस्त्रप्रतिमास्तस्मै दद्यात्प्रयत्नतः ॥ इतरेभ्योपि विप्रेभ्यो दद्याच्छक्त्या च दक्षि- णाम् । उक्तालाभे ततो दद्यादाचार्यब्रह्मऋत्विजाम् । तन्मूल्यं च प्रदातव्यं शक्त्या वापि प्रदा- पयेत् ॥ आचार्याय च यद्दत्तं तदर्द्धं ब्रह्मणे भवेत् । सदस्याय ब्रह्मणोर्द्धमृत्विग्भ्यश्च तदर्द्ध- कम् । आशिषश्च तेभ्यो गृह्णीयात्प्रणम्याथ क्षमापयेत् ॥ ब्राह्मणभोजनं-दद्यादन्नं पायसादि ब्राह्मणान्भोजयेच्छतम् । अलाभे सति पंचाशद्दशकं तदभावतः॥ सर्वशांतेश्च पठनं ब्राह्मणैराशि-

षस्तथा। गृही क्षमापयेद्विद्वान्निर्ऋतिः प्रीयतामिति ॥ विधाने चरितेस्मिंस्तु ततः शान्तिर्भवेद्ध्रुवम्। गंडांतेपि तथा कार्यं पुष्यार्द्धे तद्वदेव तु ॥ समाष्टके द्वादशाहे कुर्याद्वा शांतिमादरात्। इत्युक्तं मनुना सम्यङ्मूलजातहिताय च ॥ मातापित्रोर्धनस्यापि वंधोः शोकोपशांतये" इति ॥ श्रीशौनकप्रोक्तो मूलजननशांतिविधिः समाप्तः ॥

## अथ श्लेषाजननशांतिविधिरुच्यते।

मनुः—"आश्लेषायां तु जातानां शांतिं वक्ष्याम्यतः परम्। आश्लेषाशान्तिकालः—जातस्य द्वादशाहे च शांतिहोमं समाचरेत्। असंभवे तु जन्मर्क्षमन्यास्मिन्वा शुभे दिने। स्नातोऽभ्यंगादिभिस्तास्मिन्वरयेत्तु द्विजोत्तमान् ॥ कलशप्रतिष्ठा—विभवे पंचकुम्भांस्तु द्वयं वा तदलाभतः। देवतास्थापने चैकमेकं रुद्राभिमंत्रणे। मूलर्क्षोक्तप्रकारेण कुंभे निःक्षिप्य पूजयेत् ॥ गोमयालेपिते देशे धात्वाद्यैः परिशोभिते। पंकजं कारयेत्तत्र चतुर्विंशतिपत्रकैः ॥ तंदुलैः कारयेद्यद्वा रक्तपीतसितासितैः। कर्णिकायां न्यसेद्व्रीहीन्स्थापयेत्तेषु कुंभकम् ॥ आकलशेष्वित्यनया कलशस्थापनं शुभम्। इमं मे इति मन्त्रेण पूरयेत्तीर्थवारिणा ॥ कुंभं सुवस्त्रगंधाद्यैस्तत्तन्मंत्रैश्च पूजयेत्। याः फलिनीरित्यनया क्षिपेद्रत्नौषधादिकान् ॥ ततः पूजा ॥ कुम्भोपरिस्थपात्रे तु आश्लेषाप्रतिमां यजेत्। निष्कानिष्कार्द्धपादैर्वा कारयित्वा स्वशक्तितः ॥ तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत्। ऐंद्रादीशानपर्यंतासितरक्षाणि पूजयेत् ॥ मूलोक्तेन विधानेन कुम्भयोरभिमंत्रणम्। रुद्रार्चा रुद्रकुंभे तु पूर्ववच्छेषमाचरेत् ॥ नमोस्तु सर्पेभ्य इति पूजामंत्र इहोदितः ॥ सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः ॥ फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥ ततो होमः—एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समाचरेत् ॥ कर्त्तुः शाखोक्तमार्गेण आचार्यस्याथवा चरेत् ॥ मुखांतं कर्म निर्माय हविरादाय शास्त्रतः। इदं सर्पेभ्यो जुहुयात्साधिप्रत्यधिदैवतम् ॥ अष्टोत्तरशतं वाथ अष्टाविंशतिमेव च। मूलनक्षत्रवच्छेषहोमं तत्र समापयेत् ॥ पूर्णाहुत्यंतकर्माणि कृत्वा संपातकं तथा ॥ ततोऽभिषेकः—कुंभाज्जलं तु प्रक्षिप्य त्वभिषेकमथाचरेत् ॥ दारपुत्रसमेतस्य यजमानस्य पूर्ववत्। अभिषिंचेत्तदाचार्यऋत्विग्भिः सहितस्ततः। अभिमंत्रितकुम्भाद्भिरभिषेचनमाचरेत्। तथा पौराणमंत्रैश्च पल्लवैरभिषेचयेत् ॥ आश्लेषाऋक्षजातस्य मातापित्रोर्द्धनस्य च। भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु। योऽसौ वागीश्वरो नाम चाधिदेवो बृहस्पतिः ॥ मातापित्रोः शिशोश्चैव गंडांतं च व्यपोहतु ॥ त्रातारः सर्वभूतानां रक्षंतु पितरः सदा। सर्पनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान् ॥ एवं कृतेऽभिषेके तु सर्पशांतिर्भवेद्ध्रुवम् ॥ ततो ऋत्विगादिदक्षणादानम्—ततः शुक्लांबरधरो यजमानः सुभूषितः॥ दक्षिणाभिस्ततो विप्रान्मूलवच्च प्रतोषयेत्। भुक्तवद्भ्यश्च विप्रेभ्यः स्वीकुर्यादाशिषं गृही ॥ इत्युक्तेन विधानेन सर्वारिष्टं व्यपोहति ॥ सर्वे कामाश्च सिद्ध्यन्ति वेदोक्तायुर्भविष्यति ॥ इत्युक्तं सर्पशांत्यर्थसारमागमचोदितम्। मानवानां हितार्थाय मनुना सार्वकामिकम् ॥ सर्प्पाधीश नमस्तुभ्यं नागानां च गणाधिप। गृहाणार्घ्यं मया दत्तं सर्वारिष्टप्रशांतये ॥ इत्यर्घ्यमन्त्रः ॥ मूलनक्षत्रवत्कुर्यात्सर्पगंडे स्वनामतः" ॥ इति श्रीमानवसंहितायामाश्लेषाजननशांतिविधिः समाप्तः ॥

## विवाहे मूलाश्लेषोत्पन्नवधूवरयोरपि शांतिः-

एतच्च मूलाश्लेषाशांतिद्वयं विवाहे उपस्थिते श्वशुरस्य श्वश्वाश्च सत्त्वे मूलाश्लेषोत्पन्नयोरपि वधूवरयोस्तत्तदनिष्टनिवृत्त्यर्थं विधेयम् । उपलक्षणत्वाच्च ज्येष्ठाविशाखयोरुत्पन्नाया वध्वास्तत्रोत्पन्नवरस्य ज्येष्ठबंधुकनिष्ठबंधुपीडाशांतये च । यदाह वसिष्ठः-"नैर्ऋत्यभोद्भूतसुतः सुता वा क्षिप्रं त्ववश्यं श्वशुरं निहंति ॥ तदंत्यपादे जनिता निहंति नैवोत्क्रमेताहिभवः कलत्रम् " इति ॥ अहिराश्लेषा । अहिभव इति पुंस्त्वमविवक्षितम् । तदाह-" सुरेशताराजनिता धवाग्रजं द्विदैवताराजानिता तु देवरम् " इति । नारदोपि-" मूलजा श्वशुरं हंति व्यालजा च तदंगनाम् । ऐंद्री पत्यग्रजं हंति देवरं तु द्विदैवजा ॥ शांतिर्वा पुष्कला चेत्स्यात्तर्हि दोषो न कश्चन " इति ॥

### नक्षत्रगण्डान्तजन्मशान्तिः-

अन्याः शांतयः श्लोकक्रमेणोच्यंते ॥ तत्र तावन्नक्षत्रगंडांतशांतिविधिरुच्यते ॥ " गंडशांतिं प्रवक्ष्यामि सोममंत्रेण भक्तिमान् ॥ कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवम् । अष्टभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा । तन्मध्ये पायसं शंखे नवनीतेन पूरिते ॥ राजतं चंद्रवर्मेति सितपुष्पसहस्रकैः । दैवज्ञः क्षौमवासाश्च शुक्लमाल्यांबरार्चितः ॥ सोमोहामिति संचिंत्य पूजां कुर्यादतंद्रितः । जपेत्साहस्रकं मंत्रं श्रद्धधानः समाहितः । आप्यायस्वेति मंत्रेण पूजां कुर्यात्समाहितः । दद्याद्वै दक्षिणामिष्टां गंडदोषप्रशांतये । शुक्लं वागीश्वरं चैव ताम्रं पाद्यसमन्वितम् । गंडदोषोपशांत्यर्थं दद्याद्वेदविदे शुचिः ॥ इति श्रीमानवसंहितायां नक्षत्रगण्डांतजननशांतिविधिः ॥

### गण्डान्तस्य लक्षणान्तरं तज्जन्यदोषपरिहारोपायश्च-

नक्षत्रगण्डांतलक्षणमन्यैर्मुनिभिरेवमुक्तम्-"अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः । रेवतीसार्प्पशाक्रांते मासाश्च ऋतुसायकाः ॥ अश्विनीमघमूलादौ नाडिकाद्वितयं तथा । रेवतीसार्प्पशाक्रांते नाडिकाद्वितयं तथा ॥ अश्विनीमघमूलानां पूर्वार्द्धे बाध्यते पिता । पूषाहिशक्रपश्चार्द्धे जननी बाध्यते शिशोः ॥ पितृहा तु दिवाजातो रात्रिजातस्तु मातृहा । आत्मध्रुक् सन्ध्ययोर्जातो नास्ति गण्डो निरामयः ॥ सर्वेषां गण्डजातानां परित्यागो विधीयते । वर्जयेद्दर्शनं तावत्तच्च षाण्मासिकं भवेत् ॥" इति ॥

### तिथिलग्नगण्डान्तयोर्जातस्य शान्तिः-

तिथिलग्नगण्डांतशांतिविधिरुच्यते ॥ अभुक्तेतरजातस्य सूतकांत्यदिने पिता । शांतिं शुभेह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् । तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते ॥ कांचनं लग्नगण्डे तु गंडदोषो विनश्यति ॥ आद्यभागे पितुर्गंडं त्रयाणामभिषेचनम् । इतरत्र शिशोर्मातुरभिषेकं च कारयेत् ॥ उत्तरे तिलपात्रं स्यात्तिष्ये गोदानमुच्यते । अजाप्रदानं त्वाष्ट्रे च पूर्वाषाढे च कांचनम् ॥ उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च । कुर्याच्छांतिं प्रयत्नेन नक्षत्राकारजां बुधः ॥ सुवर्णेन तदर्द्धेन यथावित्तानुसारतः । नक्षत्राधिपते रूपं कृत्वा वस्त्रद्वयान्वितम् ॥ वरुणस्यार्चनं कार्यं स्वस्तिवाचनपूर्वकम् । शतौषधानि रत्नानि सत्वकपल्लवसंयुतान् ॥ पूजांते समिदन्नाज्यैर्होमं तिलयवैस्तथा । ततः पूर्णाहुतिं

हुत्वा वेदाध्यायिकुटुंबिने ॥ उत्तराप्रथमे पादे तिलपात्रं तथैव च । तिष्ये तु गां सवत्सां च सुशीलां च पयस्विनीम् ॥ अजां चित्रासु वै दद्यात्पूर्वाषाढे तु कांचनम् । यवांश्च व्रीहि-माषांश्च तिलमुद्गांश्च दापयेत् ॥ यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनम् । पितुरायुष्यवृद्ध्यर्थे शांतिरत्र विधीयते ॥ एवं यः कुरुते सम्यक्शांतिकर्म समाहितः । न दोषैर्लिप्यते नूनं पद्मप-त्रमिवांभसा ॥ आयुरारोग्यमैश्वर्यं संप्राप्नोति दिनेदिने । धनधान्यसमृद्धिं च पुत्रपौत्रसमृद्धि-मान्" ॥ इत्युत्तरगार्ग्योक्तितिष्यादिगंडांतजननशांतिविधिः ॥

## ज्येष्ठाजननशान्तिः–

ज्येष्ठाशांतिविधिरुच्यते ॥ तत्र जन्मनि फलम्–तत्र प्रत्येकं घटिकाषट्कस्य फलान्याह भारद्वाजः–"ज्येष्ठादौ मातृजननीं मातामहं द्वितीयके । तृतीये मातुलं हंति मातरं तु चतुर्थके॥ आत्मानं पंचमे हंति षष्ठे गोत्रक्षयो भवेत् । सप्तमे कुलनाशः स्यादष्टमे ज्येष्ठसोदरम् ॥ नवमे श्वशुरं हंति सर्वस्वं दशमे तथा ॥" इति । "सुखासीनमृषिश्रेष्ठं गर्ग मुनिगणान्वितम् । कृतांजलिपुटो भूत्वा पप्रच्छ किल शौनकः ॥ शौनक उवाच ॥ ज्येष्ठानक्षत्रसंभूतगंडदोष-विनिर्णयम् । तस्य शांतिविधानं च वद मे मुनिसत्तम ॥ शौनकस्य वचः श्रुत्वा प्रत्युवाच महामुनिः । शृणु शौनक यत्नेन गंडदोषविनिर्णयम् ॥ तस्य शांतिविधानं च यथावत्कथया-म्यहम् । घटिकैका च मैत्रांते ज्येष्ठादौ घटिकाद्वयम् ॥ तयोः संधिरिति ज्ञेयं शिशुगंडं समी-रितम् । प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके ॥ पादत्रये जातनरः श्रेष्ठोप्यत्र प्रजायते । ज्येष्ठांत्यपादजातस्तु पितुः स्वस्य विनाशनः॥ जायते नात्र संदेहो दशाहाभ्यंतरे तथा। ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाग्रजम् ॥ शान्तिकालः–तच्छांतिं तस्य वक्ष्यामि गंडदोषप्रशां-तये । सुदिने शुभनक्षत्रे चंद्रताराबलान्विते ॥ सूतकांते तथा कुर्याज्ज्येष्ठाशांतिं विधानतः ॥ कलशप्रतिष्ठा–वज्रांकुशधरं देवमैरावतगजान्वितम् । कुर्याच्छचीपतिं रम्यं देवेन्द्रं सुरनाय-कम् । कर्षमात्रसुवर्णेन कर्षार्द्धेनाथ पादतः ॥ यथाविधि प्रकुर्वीत वित्तशाठ्यं न कारयेत् ॥ ततः पूजा–शालितंडुलसंपूर्णकुंभस्योपरि पूजयेत् ॥ इंद्रायेंदोमरुत्वते इति मंत्रेण वाग्यतः । गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः ॥ पूजयेद्विधिना विप्र लोकपालान् गणान्वितान् । पुण्योद-कसमायुक्तान्वस्त्रयुग्मेन वेष्टितान् ॥ कुंभेषु विन्यसेद्धीमान्पंचगव्यं समंत्रकम् । पंचवृक्षकषा-यांश्च पंचपल्लवकांस्तथा ॥ सुवर्णकुशदूर्वाश्च निःक्षिपेच्छतमोषधीः । पूजयेद्वारुणैर्मंत्रैः कुंभा-न्धीमान्प्रयत्नतः ॥ त्वं नो अग्ने जपेदादौ सत्वं नोपि द्वितीयकम् । समुद्रज्येष्ठा इति चेमंमे-गङ्गे चतुर्थकम् ॥ पूजयेद्वस्त्रयुग्माद्यैश्चतुरः कलशानपि । जपं कुर्युः प्रयत्नेन मंत्रैरेभिर्द्विजो-त्तमाः ॥ आनोभद्राजपं चादौ भद्रा अग्नेर्द्वितीयकम् । इंद्रसूक्तं रुद्रजाप्यं जपं मृत्युंजयं ततः ॥ इत्थं संपूज्य देवेशं वरुणं कुंभसंस्थितम् ॥ ततो होमः–सुसंकल्पविधानेन होमकर्म तत-श्चरेत् ॥ समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं तथा । सर्पिषा चरुणा चैव मूलमंत्रेण वाग्य-तः ॥ हुनेज्जाप्यं च तेनैव यत इंद्रभयेति च । तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ॥ भार्याशिशुसमोपेतं यजमानं विशेषतः । अभिषेकं प्रकुर्वीत सूक्तैर्वारुणसंज्ञितैः ॥ समुद्रज्ये-ष्ठादिभिर्मंत्रैरिमं मे वरुणस्तथा ॥ ततोभिषेकः–द्यौः शान्तिरित्यादिभिर्मंत्रैरभिषेकं समाच-रेत् ॥ अभिषेकनिवृत्तौ तु यजमानः समाहितः । शुक्लांबराणि धृत्वा च कुर्यादाज्याव-लोकनम् ॥ रूपं रूपेति मंत्रेण चित्रं तच्चक्षुरेव च । देवतापुरतः स्थित्वा धूपदीपनिवेद-

नम् । दद्यादाचमनं सम्यक्तांबूलार्थं तथैव च ॥ नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते ॥ गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये । कार्यं तत्पूजकादीनां कर्मणा यत्फलं शुभम् ॥ लब्ध्वा तु तत्फलं सर्वं देवेंद्राय समर्पयेत् ॥ ततो दक्षिणा—आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम् ॥ रक्तवर्णां वत्सयुतां सर्वालंकारभूषिताम् । वस्त्रयुग्मपिधानां च यथाविभवसारतः ॥ यक्षगंधर्वसिद्धैश्च पूजितोसि शचीपते । दानेनानेन देवेश गंडदोषं विनाशय ॥ अष्टोत्तरशतं सद्यः कुर्याद्ब्राह्मणभोजनम् । तेभ्योपि दक्षिणां दत्त्वा प्रणिपत्य क्षमापयेत् ॥ ज्येष्ठाशांतिमिमां कृत्वा यथाविध्युक्तमार्गतः । गंडदोषं विनिर्जित्य आयुष्मान्जायते नरः ॥ इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः । ज्येष्ठानक्षत्रसंभूतगण्डदोषप्रशांतये ॥ अज्ञानाद्वाथवा ज्ञानाद्वैकल्याद्वा धनस्य च । यन्न्यूनमतिरिक्तं च तत्सर्वं क्षंतुमर्हसि ॥" इति श्रीवृद्धगार्ग्यसंहितायां ज्येष्ठानक्षत्रप्रसूतिशांतिः ॥

## शूलयोगादिषु द्वादशसु जन्मनि शान्तिः-

( १ ) शूलयोगस्य ( २–३ )—गणितसाध्ययोर्वैधृतिव्यतीपाताख्ययोः पातयोश्च ( ४–५–६–७ ) परिघव्याघातगण्डावमानांच ( ८ )—भद्रायाश्च ( ९ )—वज्रस्य ( १० )—यमघंटस्य ( ११–१२ )—मृत्युयोगदग्धयोगयोश्च शांतिविधिरभिधीयते—" अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । गंडांतानां च नामानि महादोषकराणि च ॥ दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गंडे च परिघे वज्रे च यमघंटके ॥ कालगंडे मृत्युयोगे दग्धयोगे सदारुणे । तस्मिन्गंडादिने प्राप्ते प्रसूतिर्यदि जायते ॥ अतिदोषकरी प्रोक्ता तत्र पापयुते सति । विचार्य तत्र दैवज्ञं शांतिं कुर्याद्यथाविधि ॥ यजनं देवतानां च ग्रहाणां चैव पूजनम् । दीपं शिवालये भक्त्या घृतेन परिदापयेत् ॥ अभिषेकं शङ्कराय चाश्वत्थस्य प्रदक्षिणम् । आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनम् ॥ गुरुदैवतविप्राणां पूजनं गोत्रवर्द्धनम् । पुष्ट्यायुस्तुष्टिशांत्यर्थमभीष्टफलसिद्धये ॥ सर्वारिष्टपरीहारार्थाय यज्ञं समाचरेत् । शिवाय विधिवद्भक्त्या दीपदानं करोति यः ॥ अखंडं गोघृतेनैव स वै मृत्युं जयेन्नरः । विष्णुमूर्तिं महापुण्यमश्वत्थं श्रीकरं सदा । प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युञ्जयं जपेत् । सर्वसंपत्समृद्ध्यर्थं नित्यं कल्याणवृद्धये ॥ अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनम् । अभिषेकं शिवे शांतिं कृत्वा भक्त्या नरोत्तमः ॥ अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः । गाणपत्यं पुरुषसूक्तं सौरं मृत्युञ्जयं शुभम् ॥ शांतिजाप्यं पुनश्चैव कृत्वा मृत्युञ्जयी भवेत् । मूले वा सार्पगंडे वा कुर्यादेतानि यत्नतः ॥ आयुर्वृद्धिफलार्थाय गंडदोषप्रशांतये ॥" इति श्रीउत्तरगार्ग्यप्रोक्तशूलादिदुष्टयोगजननशांतिविधिः ॥

## सूर्यसंक्रान्ति-व्यतीपात-वैधृति-योगेषु जन्मनि शान्तिः-

सूर्यसंक्रांतिव्यतीपातवैधृतियोगानां शांतिरभिधीयते—"गार्ग्य उवाच ॥ अथातः संप्रवक्ष्यामि जन्मकाले विशेषतः । वैधृतौ च व्यतीपाते महादोषोभिजायते ॥ कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । संक्रांतिश्च रवेस्तत्र जातो दरिद्र्यकारकः ॥ दरिद्राणां महद्दुःखं व्याधि-

पीडा महद्भयम् । अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥ स्त्रीणां च शोको दुःखं च सर्वनाशकरं भवेत् । शांतिर्वा पुष्कला चेत्स्यात्तत्र दोषो न कश्चन ॥ गोमुखप्रसवं कुर्याच्छांतिं कुर्यात्प्रयत्नतः । जपाभिषेकदानैश्च होमानपि विशेषतः ॥ नवग्रहमखं कुर्यात्तस्य दोषोपशांतये । प्रथमं गोमुखाज्जन्म ततः शांतिं समाचरेत् ॥ गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च । अलंकृतं स्वदेशे तु व्रीहिराशिं प्रकल्पयेत् ॥ पंचद्रोणमितं धान्यं तदर्द्धं तंडुलेन च । तदर्द्धं तु तिलैः कुर्यादन्योन्योपरि कल्पयेत् ॥ तृतीयराशौ द्रव्यस्य अष्टपत्रं लिखेद्बुधः । पुण्याहं वाचयित्वा तु आचार्यं वृणुयात्पुरा ॥ आचारवंतं धर्मज्ञं कुलीनं च कुटुम्बिनम् । मंत्रतत्त्वार्थतत्त्वज्ञं शांतिकर्मणि कोविदम् ॥ पंचांगभूषणं दद्यात्पट्टवस्त्रांगुलीयकम् । राशौ प्रतिष्ठितं कुम्भमव्रणं सुमनोहरम् ॥ तीर्थोदकेन संपूर्य समृदोषधिपल्लवम् । पंचगव्यं पंचरत्नं वस्त्रयुग्मेन वेष्टयेत् ॥ तस्योपरि न्यसेत्पात्रं सूक्ष्मवस्त्रेण संयुतम् । प्रतिमां स्थापयेद्धीमान्साधिप्रत्यधिदेवताम् ॥ चन्द्रादित्याकृती पार्श्वे मध्ये वैधृतिमर्चयेत् । एवमेव व्यतीपातशांतौ संक्रमणस्य च ॥ भानोरुत्तरतो रुद्रमग्निदक्षिणतो यजेत् ॥ निष्कमात्रेण चार्द्धेन पादेनापि स्वशक्तितः ॥ प्रतिमाः कारयेद्धीमांस्तत्तल्लक्षणलक्षिताः । प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत् ॥ अधिदेवो भवेत्सूर्यश्चन्द्रः प्रत्यधिदैवतम् । तत्तद्ध्यानाह्वानपूर्वेण तत्तन्मंत्रेण पूजयेत् ॥ त्र्यंबकेण मंत्रेण प्रधानप्रतिमां यजेत्। उत्सूर्य इति मंत्रेण सूर्यपूजां समाचरेत्॥ आप्यायस्वेति मंत्रेण सोमपूजां समाचरेत् । उपचारैः षोडशभिर्यद्वा पंचोपचारकैः ॥ अर्चितं गन्धपुष्पाद्यैर्गुडनैवेद्यमर्पयेत् । मृत्युञ्जयेन मंत्रेण प्रधानप्रतिमां स्पृशन् ॥ अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशतिं वा चाथ प्रजप्याथ स्वशक्तितः ॥ सर्वसौरं प्रजप्याथ सोमार्थं सोममन्त्रतः । आनोभद्रेति सूक्तं च भद्रा अग्नेश्च सूक्तकम् ॥ जपेच्च पौरुषं सूक्तं त्र्यंबकमतः परम् । कुम्भं स्पृष्ट्वा चतुर्दिक्षु जपं कुर्युस्त्वथर्त्विजः ॥ कुम्भस्य पश्चिमे देशे स्थंडिलेऽग्निं प्रकल्पयेत् । स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलम् ॥ त्र्यम्बकेण मन्त्रेण समिदाज्यचरून्हुनेत् । अष्टोत्तरसहस्रं वा त्वष्टोत्तरशतं तु वा ॥ अष्टाविंशतिहोमं वा स्वस्वशक्त्यनुसारतः । मृत्युंजयेन मन्त्रेण तिलहोमं समाचरेत् ॥ ततः स्विष्टकृतं हुत्वा ह्यभिषेकं च कारयेत् । समुद्रज्येष्ठाः सूक्तेन चापोहिष्ठा त्र्यृचेन च ॥ अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च । त्र्यंबकेण उत्सूर्य आप्यायस्वेति मन्त्रतः ॥ सुरास्त्वामिति मन्त्रेण त्वभिषेकं समाचरेत् । अभिषेकाप्लुतं वस्त्रमाचार्याय प्रदापयेत् । श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलंकृतः । यजमानः स्त्रिया युक्त आज्यावेक्षणमाचरेत् ॥ आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः । गोदानं वस्त्रदानं च स्वर्णदानं विशेषतः ॥ तद्दोषशमनार्थाय आचार्याय प्रदापयेत् । प्रच्छादनपटं दद्यात्ततः शांतिर्भविष्यति ॥ जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् । दीनान्धकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणाः ॥ ब्राह्मणाञ्छतसंख्याकान्मिष्टान्नैर्भोजयेच्च तान् । बंधुभिः सह भुंजीत यथाविभवसारतः ॥ एवं यः कुरुते मर्त्यो नैव दुःखमवाप्नुयात् ॥ आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि ॥ सर्वदुःखनिवृत्त्यर्थं पुत्रपौत्रप्रवर्द्धनम् । सर्वान्कामानवाप्नोति शांतिं कुर्वन्हि मानवः" ॥ इति श्रीउत्तरगार्ग्योक्तव्यतिपातवैधृतिसंक्रांतियोगजन्मशांतिविधिः ॥

## कुहूसिनीवालीदर्शजन्मनि शान्तिः-

कुहूसिनी वालीदर्शशांतिरुच्यते ॥ तत्रेयमुपपत्तिः । यथा त्रिविधो दर्शः ( १ )-कुहूरूपः ( २ )-सिनीवालीरूपः ( ३ )-उभयलक्षणव्यतिरिक्तश्चेति । यतो द्विविधामावास्या ॥ " अमावास्या त्वमावस्या दर्शः सूर्येंदुसंगमः । सा दृष्टेंदुःसिनीवाली सा नष्टेंदुकला कुहूः ॥" इत्यमरोक्तेः । निशि चन्द्रवती या तु पूर्णिमा सानुमतिः । सा दिवा चन्द्रवती राका । तद्वदेव द्विधाऽमा ॥ " सिनीवाली चन्द्रवती नष्टचंद्रा कुहूर्मता " इति कश्यपोक्तेश्चामावास्याया द्विविधत्वमेवावसीयते ॥ युक्तं चैतत् दृष्टचंद्रात्वं नष्टचंद्रात्वममावास्यायाः संभवति न पुनरुभयाभावेन तृतीयामावास्येति ॥ नन्विदमप्ययुक्तम् । यतो रवेर्द्वादशांशविप्रकर्षे चन्द्रदर्शनं कालांशवशेनोक्तम् । तदाह भास्करः-"दस्रेंदवः शैलभुवश्च शक्राः रुद्राः खचन्द्रास्तिथयः क्रमेण। चन्द्रादितः काललया निरुक्ता ज्ञशुक्रयोर्वक्रगतौ द्विहीनाः ॥" इति । द्वादशांशमितेन चांतरेणामावास्यालक्षणस्य तिथेर्निष्पत्तिः । उक्तं च सूर्यसिद्धांते-"आर्काद्विनिस्सृतः प्राचीं यद्यात्यहरहः शशी । तच्चांद्रमानमंशैस्तु ज्ञेयो द्वादशभिस्तिथिः ॥ " इति । एवं च कथं दृष्टचंद्रा सिनीवालीत्युक्तं, कथं च नष्टचंद्रा, कुहूः, कथं चानयोर्भेद इति ॥ विना प्रयोजनं चैकस्य वस्तुनोनेकसंज्ञाकरणं न युक्तमिति चेत्, उच्यते । नाहि कालांशवशेन ग्रहाणामस्तोदयौ । किं तर्हि ? क्षेत्रांशवशेन । तदुक्तं सूर्यसिद्धांते-" अष्टादशशताभ्यस्ता दृश्यांशाः स्वोदयासुभिः ॥ विभज्य लब्धं क्षेत्रांशास्तैर्दृश्यादृश्यता मता ॥" इति। तथा च- "सूर्यास्तकालिकौ पश्चात्प्राच्यामुदयकालिकौ । दिवाकरग्रहौ कुर्यात् दृक्कर्मार्थं ग्रहस्य तु " इत्यादिना प्रकारेण द्विविधदृक्कर्म्मसंस्कारसंस्कृताचंद्रादेराश्युदयवैषम्येण देशभेदेन च नियतत्वात्कदाचिदमावास्यायामपि सार्द्धैर्दशभिरंशैरन्तरितश्चन्द्रो दर्शनगोचरो भवति । कदाचित्षोडशांशांतरितो द्वितीयायामपि चन्द्रो दृग्गोचरो भवति । एवमेव कदाचिच्चतुर्दशीशेषे च न दृश्यते । कदाचिदल्पावशिष्टायां प्रतिपद्यपि दृश्यते ।

## प्रतिपच्चन्द्रदर्शने फलविशेषः-

अत एव गर्गेण प्रतिपदुदितस्य चन्द्रस्य फलविशेषोभिहितः । यथा च गर्गसंहितायां-"यदा चन्द्रः प्रतिपदि नौसंस्थाय प्रदृश्यते । उत्तरोज्ज्वलशृंगः स्यात्स्निग्धश्चातिमनोहरः ॥ क्षेमं सुभिक्षमारोग्यं सर्वभूतेषु निर्दिशेत् ॥" इति । अत एव भारविणापि-"प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्" इति। किरातार्जुनीये प्रयुक्तम् ॥ अत्रैतस्य टीकाकाराः- प्रतिपच्छब्देन प्रतिपत्सहचरिता द्वितीया गृह्यते । प्रतिपदि चन्द्रदर्शनाभावादिति व्याचख्युः- ते चिंत्योक्तयो ध्येयाः ॥ ननु प्रतिपदि चन्द्रोदय उत्पातः, तद्दर्शनमशुभफलमिति चेन्न । गणितविसंवादिबुधादिदर्शनं गणितज्ञानाशक्यमेव । केत्वादिदर्शनं चोत्पात इति । तल्लक्षणं प्रागुक्तं मया । चन्द्रोदयस्तु कदापि गणितं न व्यभिचरति । प्रत्यक्षदर्शनात् । प्रतिपदुदितचन्द्रस्य गर्गेण प्रशस्तफलाभिधानाच्च । न ह्युत्पातानां समीचीनं फलं कुत्राप्युक्तं स्वर्तुजानुत्पातान्विहाय । वचनात् यन प्रतिपदि चन्द्रोदय उत्पात इत्युच्यते-तेन चतुर्दशीशेषे प्राप्तः चन्द्रोदयाभावो ह्युत्पातो वाच्य इति । तच्चायुक्तम् । उक्तादेव हेतोः । तस्मात् क्षेत्रांशवशेनैव ग्रहाणामस्तोदयौ भवतः ॥ कालांशोक्तिस्तु क्षेत्रांशनिदानभूतत्वाय सामान्यतः

उदयास्तज्ञानसिद्धैव । तदेतत्पितृचरणैष्टोडरानंदे चंद्रचारविलासे सम्यक् प्रतिपादितम् तस्माद्दृक्कर्मसंस्कारवशेन चतुर्दशीशेषे प्रातश्चंद्रोदयो दृश्यते न दृश्यते च । एवं प्रातरमावास्यायामपि चन्द्रोदयो न दृश्यते दृश्यते च । तस्मात्सुष्ठूक्तं—" सा दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूः" इति, "तद्वदेव द्विधा ह्यमा । सिनीवाली चंद्रवती नष्टचंद्रा कुहूर्मता " इति च । कश्यपोपि ' द्विधैवामावास्या ' इत्याह स्म । तस्मादिदं युक्तमेव—यद्यमावास्यायां चंद्रो दृश्यते तदामावास्या सिनीवाली, यदा चंद्रोऽमावास्यायां न दृश्यते तदा कुहूरिति ॥ परंत्विदमयुक्तम् । यदुभयराहित्येनामावास्यांतरमप्यस्तीति । अस्यासंभवात् । अत्र समाधिं वावदूकास्तावदाहुः ॥ यस्याः कस्याश्चिदमावास्याया अष्टौ विभागान्कृत्वा प्रथमविभागे चन्द्रदर्शनमस्ति नवेति विचार्य यदा चन्द्रदर्शनं तदा सिनीवाली, यदा चन्द्रादर्शनं तदामावास्या सकलचंद्रक्षये कुहूरिति । तदेतदुक्तं छंदोगपरिशिष्टे 'इंदुक्षयकालः श्राद्धकालः' इति प्रस्तुत्येंदुलयकालपरिमाणमुक्तम्—"अष्टमेंशे चतुर्दश्याः क्षीणो भवति चंद्रमाः । अमावास्याष्टमे भागे पुनः किल भवेदणुः " इति । " आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत् । विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः ॥ अत्रेंदुराद्ये प्रथमेवतिष्ठते चतुर्थभागोनकलावशिष्टः । तदंत एव क्षयमेति कृत्स्न एवं ज्योतिश्चक्रविज्ञा वदंति" इति । आभ्यामिति ल्यब्लोपे पञ्चमी । एते अमावास्ये प्रकृत्येत्यर्थः । एतत्कारिकात्रयं तद्भाष्यकारेण व्याख्यातं—"प्रहरनवात्मकश्चंद्रक्षयकालः" इति । तत्राभायाः सप्तमाष्टमयामौ कृत्स्नक्षयकालः चतुर्दशीशेषयामदर्शादियामौ चन्द्रसूक्ष्मताकाल इति । पुनःकिलशब्दाभ्यामयमर्थो द्योत्यते । चतुर्दश्याः क्षैण्यं सूक्ष्मममांत्यभागे कृत्स्नक्षयकाल इति । अमावास्याविशेषे ज्येष्ठादावमाद्ययामे चन्द्रो दृश्यत इत्यर्थः इति । ज्योतिश्चक्रविज्ञा इत्यस्यार्थः पितृचरणैरभिहितः। तेन देशकालगणनाकुशला यथायथा गणयंति तदेवांगीकार्यमिति सूच्यते । ततश्च ज्येष्ठादिकालभिन्नकालेप्येवंविधोपलंभः ज्येष्ठादौ च नोपलंभो देशकालभेदेन संभवतीति ॥ तदयमत्र विवेकः—यस्याममावास्यायां प्रथमे प्रहरे शास्त्रात्प्रत्यक्षतो वा चन्द्रदर्शनं स्यात्सा सिनीवाली सर्ववादिसिद्धा । तत्रोत्पन्नस्य सिनीवालीजननफलमादेश्यं सिनीवालीप्रयुक्ता शांतिश्च विधेया ॥ अथ तस्याममावास्यायां यदा नष्टेंदुकलात्वं स्यात्तदा कुहूरिति ॥ तत्रैकस्याश्चंद्रकलायाः किंचिन्नाशो वा अखिलनाशो वेति संदेहे विनिगमनाविरहात्कृत्स्नकलाक्षय एव विवक्षितः मुख्यत्वात् । यत्किंचिन्नाशस्त्वपचीयमानत्वाद्गौणः । " गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः " इति न्यायान्मुख्यस्यैव ग्रहणं युक्तम् । स च कृत्स्नक्षयकालोमावास्यांतिमक्षण एव । तस्य चातिसूक्ष्मत्वाद्दुर्ज्ञानत्वात्संक्रांतिकालवदित्यमावास्यायाः सप्तमाष्टमप्रहरयोः कृत्स्नक्षयकालस्य भाष्यकारेण परिभाषितत्वात्सप्तमाष्टमप्रहरात्मकः कालः कुहूशब्दवाच्यः तत्रोत्पन्नस्य कुहूजननफलं, तच्छांतिश्चादेश्या । पुनस्तस्यामेवामावास्यायां प्रथमप्रहरानंतरं सप्तमप्रहरादर्वाक् प्रहरपञ्चकात्मकः कालो दर्शशब्दवाच्यः इति । तत्रोत्पन्नस्य दर्शजननफलं, तच्छांतिश्चादेश्या । एवमेकस्यामेवामावास्यायां कालभेदेन त्रयं संभवति ॥ अत्र केचित्सिनीवाल्यां विशेषमाहुः । चतुर्दशीशेषे सूर्योदयात्प्राक् चंद्रदर्शने जाते सति परदिने यामावास्या सा सिनीवाली । तथा च जगन्मोहने बौधायन इत्युक्त्वा पठितं—"मध्याह्न समयं यावच्चतुर्दश्यनुवर्त्तते । सिनीवालीति सा त्वेषा पितृकर्माणि शस्यते ॥ " इति । धर्मशास्त्रेप्येतादृशानि भूयांसि वच-

नानि संति । तेषामिदं श्राद्धकालनिर्णयोपयोगिपारिभाषिकं सिनीवालीत्वं न पुनर्जननादौ । कुतः निरुक्तिविरोधात् । तथाहि 'सा दृष्टेंदुः सिनीवाली' इत्यादिवाक्येषु दृष्टश्चंद्रो यस्यां सा सिनीवालीति बहुव्रीहिः । स च " अनेकमन्यपदार्थे" इति विहितः । तत्रान्यपदार्थतयोपस्थितामावास्यैव गृह्यते, प्रकरणात् । न चैवं सति चतुर्दश्यां चंद्रोदये सिनीवालीत्वं स्यात् । ' दृष्टचन्द्रा सिनीवाली' इत्येतावतैव लक्षणेन सर्वासामपि दृष्टेंदुत्वात्सिनीवालीत्वे तच्छान्तिकोक्तिरनार्थिका स्यात् ॥ ननु दृष्टश्चंद्रो यस्यामित्यन्यपदार्थे सप्तमी सामीप्यपरेतिव्याख्यायते इति चेत्, न तस्याः सामीप्यसप्तम्या गौणाधारपरत्वात् ॥ मुख्यासंभवे हि गौणग्रहणं युक्तम् । अत्र तु मुख्य एवाधारः अमावास्यारूपः संभवतीति गृह्यते ॥ "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति न्यायात् ॥ ननु दृष्टश्चंद्रो यस्या इति षष्ठ्यर्थेऽन्यपदार्थे बहुव्रीहौ संबंधमात्रं मुख्य एव षष्ठ्यर्थं इति सामीप्यसंबंधवत्पष्ठ्यर्थेऽन्यपदार्थे बहुव्रीहिरयं भविष्यतीति चेत्, न । सामीप्यादिसंबंधे मत्वर्थीयं प्रत्ययो बहुव्रीहिर्वा न कैरपि वैयाकरणैरिष्यते । तदेतत् 'तदस्यास्त्यास्मिन्निति मतुप्" इत्यत्र महाभाष्यकारेण प्रत्यपादि ॥ नन्वेवमपि ' कुहूः सिनीवाल्यपि नष्टदृष्टचन्द्रे स्मृते चासितपंचदश्यौ" इत्यादिवाक्येषु बहुव्रीहिनिर्देशो मतुब्निर्देशो वा नास्ति ॥ तत्र कृष्णचतुर्दश्यामपि चंद्रोदयस्य दृष्टत्वादमावास्यायाः सिनीवालीति संज्ञा स्यादितिचेत् न । 'संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्' इति न्यायाच्चंद्रोदयसमानाधिकरणामावास्याग्रहणस्यैव युक्तत्वात् । किंच सिनीपदेन श्वेतचंद्रकलोच्यते । सितशब्दः श्वेतवर्णवाची । तस्मात्स्त्रियां "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीम्नकारौ सिनी । तां वलते प्राप्नोतीति सिनीवालीति व्युत्पत्तेश्चतुर्दश्युदितचन्द्राश्रयायाममावास्यायां युज्यते " कृत्तद्धितसमासानामभिधानं नियामकम् " इति भाष्यकारस्मरणादिति । तस्मात् दृष्टेंदुः सिनीवालीत्यमावास्यैवाभिधीयत इति यत्प्रागुक्तं तदेव ज्यायः । एवमेकस्यामेवामावास्यायां सिनीवाली कुहूदर्शरूपं भेदत्रयं युक्तम् । अथ सिद्धांतविदोन्यथा समादधुः । तत्र "सा दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूः " इत्यादिषु हि दर्शनशब्देन चाक्षुषं दर्शनं विवक्षितम् । तच्चोदयास्ताधिकाररीत्या दर्शनयोग्यत्वे सति पूर्वक्षितिजक्रांतिवृत्तसंबंधवत्त्वं ग्रहादेर्दर्शनशब्दवाच्यम् । मेघाद्यावरणे हि शास्त्रीये दर्शने दृशिर्वर्तते । आत्मा द्रष्टव्य इत्यादिवत् । अत्रार्थे-" पश्यार्थैश्चानालोचने " इति पाणिनिरप्यनुकूलः । अतो भास्करेणाप्युक्तं-"निजनिजोदयलग्नसमुद्गमे समुदयोपि भवेद्गनभःसदाम्" इति । तयैव रीत्या दर्शनायोग्यत्वे पूर्वक्षितिजक्रांतिवृत्तसंबंधवत्त्वमदर्शनशब्दवाच्यम् ॥ यत्तु "भवति चास्तविलग्नसमुद्गमे प्रतिदिनेऽस्तमयः प्रवहभ्रमात् " इति भास्करेणोक्तं-तद्गनभःसमाक्रांतवृत्तपश्चिमक्षितिजसन्निधिवशेनास्तलक्षणमुक्तं नतु पूर्वक्षितिजदर्शनाभावलक्षणमिति मयोक्तं दर्शनाभावलक्षणम् । अतो दर्शनलक्षणवत्यमावास्या सिनीवाली नामादर्शनलक्षणवत्यमावास्या कुहूर्नाम, लक्षणद्वयानाक्रांतामावास्या दर्शशब्दवाच्येति ॥

## सिनीवालीकुहूदर्शानां तच्छान्तीनां च व्यवस्था-

यदा खल्वमावास्या सूर्योदयात्प्राक् घटिकात्रयवती तदा दृक्कर्मसंस्कारवशेन चन्द्रस्य दृश्य-

त्वमागतं चेत् तदा सा संपूर्णामावस्था सिनीवालीनाम । तादृश्याममायां द्वितीयसूर्योदयावधिकायामुत्पन्नस्यारिष्टशांतये सिनीवालीशांतिस्तत्फलं चादेश्यम् । अतिवृद्धौ वा तस्या अमावास्याया द्वितीयसूर्योदयानंतरमवशिष्टामावास्याघटीपूर्वपन्नस्य कुहूशांतिरेव चंद्रादर्शनलक्षणसत्त्वात् ।। यदि सैवामावास्या सूर्योदयात्प्राग्घटिकाचतुष्टयं वा प्रतिपत्संबद्धा तदा सिनीवाल्येव । तादृश्यामेव न्यूनायां वाधिकायां वामावास्यायां तु दृक्कर्मसंस्कारवशेन चंद्रस्यादृश्यत्वमागतम् । सामावास्या संपूर्णा कुहूर्नाम, चंद्रादर्शनलक्षणसत्त्वात् । तत्र कुहूजननफलं सा शांतिश्चादेश्या ।। यदा तु सूर्योदयानन्तरं कियतीषु घटीष्वतिक्रान्तास्वमावास्याप्रवृत्तिस्ततः पूर्वं चतुर्दश्येवावस्थिता तस्यामुषसि दृक्कर्मवशतश्चन्द्रो दृष्टोमा वादर्शि । तस्याममावास्यायां चन्द्रदर्शनादर्शनलक्षणानाक्रान्तत्वात्सामावास्या संपूर्णा दर्शो नाम । तत्र दर्शजननफलं सा शांतिश्च विधेयेति । एवममावास्याभेदे सिनीवालीकुहूदर्शरूपसंज्ञात्रयं सावकाशमित्यस्मन्मतम् ।।

## सुगमप्रकारेण भेदत्रयं ब्रूमः ।

तत्र सिनीवाली सर्वत्रादिसिद्धा सैव । कुहूस्तु प्रकारांतरेण पारिभाषिकी । यदाह वसिष्ठः–" नक्षत्रे यस्य दर्शांतो विषनाड्यां भवेद्यदि । कुहूयोग इति ख्यातो व्याधिमृत्युभयादिकृत् ।।" इति । अयमर्थः । यस्मिन्नक्षत्रे या विषनाड्य उक्तास्तस्मिन्काले यदि दर्शस्य समाप्तिर्दर्शचरमनाडी भवेत् तन्नक्षत्रं यस्य पुरुषस्य जन्मर्क्षं जन्मकाले कालांतरे वा स्यात्तस्य पुंसो व्याधिमृत्युभयकृत्कुहूः स्यात्षण्मासान्मृत्युमाप्नुयात् । " तत्र लग्नेऽथ जन्मांशे मृत्युर्मासत्रयाद्भवेत्" इति पूर्वोक्तकुहूयोगकाले यदि जन्मनवांशे चंद्रस्तदा षण्मासमध्ये मृत्युः यदि जन्मलग्ने तस्मिन्काले जन्मांशगश्चंद्रश्चेत्युभयसंभवे मासत्रयेण मृतिरिति भावः । अतएवोक्तं जगन्मोहने वसिष्ठेन–" यस्य जन्मर्क्षगश्चंद्रो विषनाड्यां कुहूर्भवेत । अभिचारेण किं तस्य स्वयमेव मरिष्यति ।।" इति । अतो विषघटिकातः पूर्वकालो दर्शशब्दवाच्य इति । एवमस्माभिः प्रकारत्रयेण सिनीवालीकुहूदर्शानां भेद उपपादितः । तत्र यथासंप्रदायं व्यवस्थेत्यलमति प्रसंगेन ।। ज्योतिःशास्त्रमहोदन्वदवगाहनिविष्टधीः । नीलकंठांशगोविंदहनुमान्केन गीर्यताम् ।। १ ।।

## सिनीवालीकुह्वोर्जन्मनि शान्तिः–

प्राक्प्रतिज्ञाता सिनीवालीकुहूशांतिस्तावदुच्यते ।। गार्ग्यः–" सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा । गवाश्वं महिषी चैव शक्रस्यापि श्रियं हरेत् ।। ये च संति द्विजाश्चान्ये स्वप्रसादोपजीविनः ।। वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् । द्विजाः पक्षिणः । कुहूप्रसूतिरत्यर्थं सर्वदोषकरी नृणाम् ।। यस्य प्रसूतिरत्र स्यात्तस्यायुर्धननाशनम् । सर्वगंडसमस्तत्र दोषस्तु प्रबलो भवेत् ।। नारीं विनावशेषाणां परित्यागो विधीयते ।। " गोमहिष्यादीनां सिनीवालीकुह्वोः जातानां त्यागो न तु नारीणामिति भावः । " परित्यागात्तत्र शांतिं कुर्याद्धीमान्विचक्षणः । तत्फलं तत्क्षणार्द्धेन पुनरेव विलीयते । न त्यजेत्पंडितो मोहादर्थादज्ञानतोपि वा।। तद्योगं नाशयेदाशु स्वयं वा नाशमृच्छति । कल्पोक्तशांतिः कर्तव्या दीर्घदोषापनुत्तये ।। रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् । कर्षमात्रसुवर्णेन तदर्द्धार्द्धेन वा पुनः ।। अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः ।

प्रतिमां कारयेच्छंभोश्चतुर्भुजसमन्विताम् ॥ त्रिशूलखड्गवरदाभयहस्तां यथाक्रमात् । श्वेतवर्णां श्वेतपुष्पां श्वेतांबरवृषस्थिताम् ॥ त्र्यंबकेण मंत्रेण पूजां कुर्याद्यथाविधि । इंद्रश्चतुर्भुजो वज्रांकुशचापसुसायकी ॥ रक्तवर्णो गजारूढो यत इंद्रेति मंत्रतः । पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः ॥ यष्ट्यक्षसूत्रकमंडलवभयानां च धारिणः । ये सत्या इति मंत्रेण पूजां कुर्यादनंतरम् ॥ आग्नेयीं दिशमारभ्य कुंभान्कोणेषु विन्यसेत् ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितम् ॥ तेष्वेवपंचगव्यादींस्तत्तन्मंत्रैश्च निक्षिपेत् । कल्पोक्तशांतिः कर्त्तव्या शीघ्रमेव प्रयत्नतः । गोदानं वस्त्रदानं च सुवर्णं चौर्णकं शुभम् । दश दानानि चोक्तानि क्षीरमाज्यं गुडं तथा ॥ आज्यावेक्षणमेतानि तत्तन्मंत्रैश्च कारयेत् । समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः ॥ अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः । अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद् द्विजः ॥ त्र्यंबकेण मंत्रेण तिलान्व्याहृतिभिः पुनः । चतुर्भिः कलशैर्युक्तं बृहत्कुंभसमन्वितम् । शांतिवत्कलशैः कार्यमभिषेकं च मन्त्रतः । पितृमातृशिशूनां च अभिषिंचेत्तु वारुणैः ॥ शंकरस्याभिषेकं च कुर्याद्ब्राह्मणभोजनम् । अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणम् ॥ यथाशक्ति तदा कार्यं द्विजवाचनकं तथा ॥ " इत्युत्तरगार्ग्योक्तसिनीवालीकुहूशांतिविधिः ॥

## दर्शजन्मशान्तिः-

दर्शशांतिरुच्यते ॥ नारदः-अथातो दर्शजातानां मातापित्रोर्दरिद्रता । तद्दोषपरिहारार्थं शांतिं वक्ष्यामि नारद ॥ पुण्याहं वाचयित्वादौ क्रतुसंकल्पपूर्वकम् ॥ कुंडं च मंडपं कुर्यात्तद्देशे स्थापयेद्घटम् ॥ तत्कुंभे निःक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम् । न्यग्रोधोदुंबराश्वत्थाः सचूता निंबकास्तथा ॥ एतेषां वृक्षमूलानां त्वगादीन्पल्लवांस्तथा । पंचरत्नानि निःक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आपोहिष्ठात्र्यृचेनाथ कयानश्चित्रइत्यृचा । यत्किंचेदमृचा चैव समुद्रज्येष्ठा इत्यृच॥।अभिमंत्र्योदकं पश्चादग्नेः पूर्वप्रदेशके ॥" उदकमभिमंत्र्य पश्चाद्दर्शदेवताः स्थापयेदित्यर्थः । मंडलं कुर्यादिति यदुक्तं-"हारिद्रं रक्तकं चैव कृष्णं श्वेतं च नीलकम् । एतेषां तंडुलैश्चैव सर्वतोभद्रमुद्धरेत् ॥ दर्शस्य देवतायाश्च सोमसूर्यस्वरूपकाः । प्रतिमाः स्वर्णजा नित्यं राजतीं ताम्रजां तथा ॥ " दर्शदेवतारूपां सोमसूर्यस्वरूपप्रतिमां स्थापयेदित्यभेदेनान्वयः । कुहूमपि-तत्रापीदम् ? । "सर्वतोभद्रमध्ये च स्थापयेद्दर्शदैवतम् । ग्रहवर्णं वस्त्रयुग्मं तद्वर्णं गंधपुष्पकम् । आप्यायस्वेतिमंत्रेण सविता पश्चात्तमेवच ॥ उपचारैः समाराध्य ततो होमं समाचरेत् ॥ कृत्वा वह्निं प्रतिष्ठाप्य क्रतुसंकल्पमीदृशम् । आयुरारोग्यसिद्धयर्थं सर्वारिष्टप्रशांतये । पुत्रस्य दर्शजननदोषनिर्हरणाय च । मातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये ॥ तेषामायुः श्रियं लब्धुं शांतिहोमं करोम्यहम् । समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्गृही ॥ हुनेत्सवितृमंत्रेण सोमो धेनुं च मंत्रतः । एतैर्मंत्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतम् ॥ दर्शस्य देवताहोममष्टाविंशतिसंख्यया । होममेव तु कृत्वाथ विप्याचाराभिषेचनम् ॥ श्रीसूक्तमायुष्यसूक्तं . समुद्रज्येष्ठषड्ऋचा । एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा ॥ ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् । हिरण्यं रजतं चैव कृष्णा धेनुश्च दक्षिणा ॥ अन्येभ्योपि यथाशक्ति दातव्या दक्षिणा तथा । ब्राह्मणान् भोजयेत्तत्र कारयेत्स्वस्तिवाचनम् ॥ " इति श्रीनारदोक्तो दर्शजननशांतिविधिः ॥

## कृष्णचतुर्दशीजन्मशांतिः—

कृष्णचतुर्दशीशांतिविधिरुच्यते ॥ "मन्दरस्थं सुखासीनं गर्गं मुनिवरं शुभम् । नमस्कृत्याऽथ पप्रच्छ शौनको मुनिपुंगवः ॥ शांतिकर्माणि सर्वाणि त्वत्तो जानाम्यहं पुरा । अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीम् ॥ दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद ॥ गर्ग उवाच । कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् । चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम् ॥ द्वितीये पितरं हंति तृतीये मातरं तथा । चतुर्थे मातुलं हन्ति पंचमे वंशनाशनम् ॥ षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् । तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः । आचार्यं वरयेद्धीमान्पुत्रदारसमन्वितम् । स्वकर्मनिरतं शांतं श्रोत्रियं वेदपारगम् ॥ सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतम् । ब्राह्मणानृत्विजश्चैव स्वस्तिवाचनपूर्वकम् ॥ रुद्रोधिदेवता तस्याः कर्षमात्रसुवर्णतः । तदर्द्धेन च वा कुर्याद्वित्तशाठ्येन वर्जितः ॥ प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुताम् । वृषभे च समासीनं वरदाभयपाणिकम् ॥ शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितम् । त्र्यंबकेण मंत्रेण पूजां कुर्याद्विधानतः ॥ स्थापयेच्चतुरः कुभांश्चतुर्दिक्षु यथाक्रमम् । पुण्यतीर्थजलोपेतान्धान्यस्योपरि विन्यसेत् ॥ शतौषधानि निःक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् । शुभानि चैव पुष्पाणि श्वेतानि परिवेदयेत् ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ आवाह्य वारुणैर्मंत्रैरनेन च विधानतः । इमं मे वरुणेत्यनया तत्त्वायामित्यृचा तथा ॥ त्वन्नो अग्ने इत्यनया सत्वन्न इति मंत्रतः । आग्नेयकुम्भमारभ्य पूजां कुर्याद्यथाक्रमम् ॥ आनोभद्राख्यसूक्तेन भद्रा अग्नेश्च सूक्तकम् । जप्त्वा पुरुषसूक्तं च रुद्रं तु क्रमाज्जपेत् ॥ ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् । पूजाकर्म सुनिर्वर्त्य होमं कुर्याद्विधानतः ॥ गेहस्येशानदिग्भागे कुण्डं कुर्याद्विधानतः । विस्तारायामखातं च अरत्निद्वयसंयुतम् । कुंडकंठं परित्यज्य समंतादंगुलिक्रमात् । मेखलोच्छ्रायविस्तारं चतुस्त्रिद्व्यंगुलक्रमात् ॥ पश्चिमे मध्यभागे तु योनिं कुर्याद्विधानतः । योनिं षडंगुलां तिर्यग्द्वादशांगुलदैर्घ्यकाम् ॥ अश्वत्थदलसंकाशां किंचिन्निम्नायतां शुभाम् । कुर्यादाधारपर्यंतं स्वगृह्योक्तविधानतः ॥ समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ अष्टोत्तरसहस्रं वा ह्यष्टोत्तरशतं तु वा । अष्टाविंशतिमेवैश्च होमं कुर्यात्पृथक्पृथक् ॥ त्र्यंबकेण मंत्रेण तिलान्व्याहृतिभिः क्रमात् । ग्रहा एवं च होतव्या अस्मदुक्तविधानतः ॥ एवं क्रमेण होतव्यं होमशेषं समापयेत् । सर्वालंकारयुक्तानां त्रयाणामभिषेचनम् ॥ चतुर्भिः कलशैरद्भिर्बृहत्कुंभसमन्वितम् । धौतांबराणि धृत्वाथ कुर्यादाज्यावलोकनम् ॥ पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः । तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ॥ सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीम् । प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥ अन्येषां चैव सर्वेषां कुर्याद्ब्राह्मणभोजनम् । तस्मादनेन विधिना वित्तशाठ्यविवर्जितः ॥ एवं यः कुरुते शांतिं सर्वपापैः प्रमुच्यते । सर्वान्कामानवाप्नोति चिरंजीवी सुखी भवेत् ॥ " इत्युत्तरगार्ग्योक्ता कृष्णचतुर्दशीजननशांतिः ॥

## एकनक्षत्रजन्मनि शान्तिः-

अथैकनक्षत्रजातानां शांतिविधिरुच्यते ॥ "एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः । प्रसूतिश्च तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥ तद्दोषनाशाय तदा प्रशस्तां शांतिं च कुर्याद्भिषेचनं च । संपूज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवानुरूपम् ॥ तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु । शुभर्क्षे शुभवारे च चन्द्रताराबलान्विते ॥ रिक्ताविष्टिविवर्ज्ये तु प्रारभेद्दिवसे सुधीः । आचार्यं वरयेत्पूर्वं चतुरोथ द्विजोत्तमान् ॥ पुण्याहं वाचयित्वा तु शांतिकर्म समाचरेत् । आग्नेयीशानदिग्भागे नक्षत्रप्रतिमां ततः ॥ तन्नक्षत्रोक्तमंत्रेण चार्चयेत्कलशोपरि । रक्तवस्त्रेण संच्छाद्य वस्त्रयुग्मेन वेष्टयेत् ॥ स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः । अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतम् ॥ प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तांतमेव च । अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः ॥ वस्त्रालंकारगोदानैराचार्यं पूजयेत्पुनः ॥ ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् ॥ देवताप्रतिमादानं धान्यवस्त्रादिभिः सह । यानशय्यासनादींश्च दद्यात्तद्दोषशांतये ॥ भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः ॥ " इति गार्ग्योक्तैकनक्षत्रजननशांतिविधिः ॥ अत्रैकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोरिति गर्गवाक्ये भ्रात्रोरितिपदे किं भ्राता च स्वसा च भ्रातरौ " भ्रातृपुत्रौ स्वसृदुहितृभ्याम् " इत्येकशेषः । उत भ्राता च भ्राता भ्रातरौ "सरूपाणामेकशेष एकविभक्तौ " इत्येकशेषः । तत्र प्रथमपक्ष सोदरयोर्भ्रातृभगिन्योरेवैकनक्षत्रजनननिषेधः स्यान्नतु पुंभ्रात्रोः । द्वितीयपक्षे तु सोदरयोः पुंभ्रात्रोरेव निषेधः स्यान्नतु भ्रातृभगिन्योः । इष्यते च द्वयोपरि भ्रात्रोर्निषेधः ॥ नच भ्रातरौ च भ्रातरौ चेति द्वंद्वे सत्येकशेषेण सिद्धमिति वाच्यम्, तथा सति तेषां चतुर्ण्णाद् भ्रातृणामिति पाठ्यं स्यात् । एवं पितृपुत्रयोरित्यत्रापि पिता च पुत्रश्चेति द्वंद्वे पितापुत्रयोरेकनक्षत्रजनननिषेधः स्यात् । तथा पुत्रश्च दुहिता च पुत्रौ 'भ्रातृपुत्रौ' इत्यादिनैकशेषः । पितरौ च पुत्रौ चेति द्वंद्वे मातापित्रोः पुत्रस्य कन्यायाश्चैकनक्षत्रजनननिषेधः स्यादिति वाच्यम् । यतः प्रथमपक्षे पितृपुत्राणामिति बहुवचनांत पदं पाठ्यं स्यात् । द्वितीयपक्षे तु स दोषोस्त्येव । परंतु यथासंख्यमपि लगति । यथा मातापुत्रयोरेव पितादुहित्रोरेव चैकनक्षत्रजनननिषेधः स्यात् नतु मातादुहित्रोः पितापुत्रयोश्च । इष्यते चानयोरपि निषेध इत्यतो नैतद्वचनं निर्णयपदवीमवगाहते । सत्यम्-गर्गवाक्यस्य त्वेतावानेवार्थः । परंतु वचनांतरानुरोधादिष्टाविषयोपि संगृहीतो भवति । यदाह वसिष्ठः-"पित्रोस्तु जन्मकर्मर्क्षे जातस्तु पितृमातृहा । जन्मर्क्षांशे च तल्लग्ने जातः सद्यो मृतिप्रदः ॥" इति । देवकीर्तिः-यद्येकस्मिन्धिष्ण्ये जायंते दुहितरोऽथवा पुत्राः॥ पितुरंतकरा ह्येते यद्यपरे प्रीतिरतुला स्यात् ॥" इति । अपरे अन्यनक्षत्रे "पूर्वादिभ्यो नवभ्यो वा " इति भिन्नभावपक्षे रूपम् ॥ गर्गसंहितायामपि-"यस्यैव जन्मऋक्षे जायते भ्राता सुतोपि वा । सजातीयः सजातीया सोस्य प्राणान्प्रसाधयेत् ॥" इति यस्येति पुंस्त्वमविवक्षितम् । तेन मातुरपि निषेधो वसिष्ठवाक्यस्वरसात् ॥

## उपरागे जन्मनि शान्तिः ।

मूलश्लोके दुष्टनिमित्तस्योपलक्षणत्वेन व्याख्यानात् सूर्यचंद्रग्रहणसमयजननशांतिविधिरु-

च्यते।शौनक उवाच—"ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते । व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् । इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः । व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥ शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया । यस्मिन्नृक्षे विशेषेण ग्रहणं संप्रजायते ॥ तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् । यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥ सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः ॥ चंद्रं चंद्रग्रहे धीमान्रजतेन विशेषतः ॥ राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः । नागेन सीसकेन ॥ शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥ तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनम् । त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् ॥ रक्ताक्षत रक्तगंधा रक्तपुष्पांबराणि च । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं च यत् ॥ श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादिभिः । चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकरं च यत् ॥ राहवे चैव दातव्यं कृष्णपुष्पांबराणि च । दद्यान्नक्षत्रनाथाय श्वेतगंधानुलेपनम् ॥ सूर्यं संपूजयद्धीमानाकृष्णेति च मंत्रतः । चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः ॥ दूर्वाभिर्जुहुयाद्धीमान्राहोः संप्रीणनाथ च । समिद्भिर्ब्रह्मवृक्षोत्थैर्भेशाय जुहुयाद्बुधः ॥ भेशाय नक्षत्राधिपतये । आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः ॥ पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः । जलैरौषधकल्कैश्च सहितैः कलशोदकैः ॥ औषधकल्कैः सर्वौषधिकल्कैः । अभिषेकं प्रकुर्वीत यजमाने प्रयत्नतः ॥ मंत्रैर्वारुणदैवत्यैरापोहिष्ठादिभिस्त्रिभिः । इमं मे गङ्गे पितरस्तत्वायामीति मंत्रकैः ॥ अभिषेके निवृत्ते तु यजमानः समाहितः । आचार्यं पूजयेत्पश्चात्सुशांतो विजितेंद्रियः ॥ तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयम् । दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः ॥ ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् । तेभ्योऽपि दक्षिणां दद्याद्यजमानः समाहितः ॥ अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः । अकालमृत्युं शोकं च व्याधिपीडां न चाप्नुयात् ॥ सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः । इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् ॥ कथितं भार्गवेणेदं शौनकाय महात्मने॥"इति श्रीशौनकविरचितसूर्यचन्द्रग्रहणसमयजननशांतिविधिः समाप्तः ॥

## त्र्युत्तरं विजातीयस्य जन्मनि शांतिः—

त्रीतरशांतिरप्युच्यते ॥ सा च शांतिसर्वस्वेभिहिता—"सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि । मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् ॥ ज्येष्ठनाशो धने हानिर्दुःखं वा सुमहद्भवेत् । तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥ जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरम् ॥ सह वा ग्रहयज्ञः स्याद्यथावित्तानुसारतः । ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः ॥ पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः । पञ्चमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया॥ रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः । द्विज एको जपेद्धोमकाले शुचिसमाहितः ॥ आचार्यो जुहुयात्तत्र समिदाज्यंतिलांश्चरुम् । अष्टोत्तरसहस्रं वा शतं वा विंशतिं तु वा ॥ देवताभ्यश्चतुर्वक्रादिभ्यो ग्रहपुरःसरम् । ब्रह्मादिमंत्रैरिंद्रस्य यत इन्द्रभयामहे॥ ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः । अभिषेकं कुटुंबस्य कृत्वाचार्यं प्रपूजयेत् ॥ हिरण्यं धेनुरेका च ऋत्विग्भ्यो दक्षिणा ततः । प्रतिमा गुरवे देया उपस्कारसमन्विता ॥ कांस्याज्यवीक्षणं कृत्वा शांतिपाठं तु कारयेत् । ब्राह्मणान्भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् ॥ एवं शांतिविधानेन सर्वारिष्टं प्रलीयते ॥"इति ॥ इति शान्तिसर्वस्वोक्ता त्रीतरशान्तिविधिः समा-

त्रः ॥ आलोक्यार्षान्पौरुषांश्च ग्रन्थान्मूलादिशांतयः ॥ नीलकंठतनूजेन गोविंदेनोदिताः क्रमात् ॥ १ ॥ ५६ ॥

इत्यरिष्टजन्मशान्तयः समाप्ताः ।

## अश्विन्यादीनां तारकासंख्यया स्वरूपम्-

त्रित्र्यंगपंचाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेंदुभूकृताः ॥
वेदाग्निरुद्राश्वियमाग्निवह्नयोऽब्धयः शतं द्विद्विरदाभतारकाः॥५७॥

नक्षत्रप्रसंगादेवाश्विन्यादिभानां तारकामानमुपजातिकयाह-त्रीति । अश्विन्यादीनां भानां तारकाः क्रमतो ज्ञेयाः । यथा अश्विन्यास्तारकास्तिस्रः ३ । भरण्यास्तिस्रः ३ । कृत्तिकायाः षट् ६ । रोहिण्याः पंच ५ । मृगस्य तिस्रः ३ । आर्द्राया एका १ । पुनर्वसोश्चतस्रः ४ । पुष्यस्य तिस्रः ३ । आश्लेषायाः पंच ५ । मघायाः पंच ५ । पूर्वाफल्गुन्या द्वे २ । उत्तराफल्गुन्या द्वे २ । हस्तस्य पंच ५। चित्राया एका १ । स्वात्या एका १ । विशाखायाश्चतस्रः ४ । अनुराधायाश्चतस्रः ५ । ज्येष्ठायातिस्रः ३ । मूलस्यैकादश ११ । पूर्वाषाढाया द्वे २ । उत्तराषाढाया द्वे २ । अभिजितस्तिस्रः ३ । श्रवणस्य तिस्रः ३ । धनिष्ठायाश्चतस्रः४।शततारकायाः शतम् १०० । पूर्वाभाद्रपदाया द्वे २। उत्तराभाद्रपदाया द्वे २ । रेवत्या द्वात्रिंशत्तारकाः ३२ । एतावतीभिस्तारकाभिरश्विन्यादीनां स्वरूपं ज्ञेयम् ॥ उक्तं च रत्नमालायां-"वह्नित्रिऋत्विषुगुणेंदुकृताग्निभूतबाणाश्विनेत्रशरभूकुयुगाब्धिरामाः । रुद्राब्धिरामगुणवेदशतद्वियुग्मं दंता बुधैर्निगदिताः क्रमशोऽभिताराः ॥" इति ॥ नन्वस्मिन् श्रीपतिवाक्ये सप्तविंशतिभानि प्रतीयन्ते । ग्रंथकृद्वाक्येऽष्टाविंशतिरिति विरोधः ! अत्र समाधिः । उत्तरार्द्धे रुद्राब्धीत्यत्र चतस्रस्ताराः पूर्वाषाढोत्तराषाढयोः । तत्र द्वे पूर्वाषाढायाः । द्वे उत्तराषाढाया इत्यर्थः । एवमष्टाविंशतिनक्षत्राणि । नारदेनापि द्वयोराषाढयोर्द्वितारकत्वमुक्तम् । रामाग्निऋतुबाणाग्निभूवेदाग्निशरेषवः । नेत्रबाहुशरर्द्वींदुयुगवेदाग्निशङ्कराः ॥ बाहुनेत्राश्व्यब्धिशतं बाहुनेत्ररदाः क्रमात् । भानां संख्या च विज्ञेया दस्रादीनां पृथक्पृथक् ॥ " इति । अवश्यं चैतदेवं विज्ञेयम् ॥ 'तुरगमुखसदृक्षम्' इत्यादिनाष्टाविंशतिनक्षत्राणामाकृतिकथनात्सप्तविंशतिनक्षत्राणां च तारागणत्वोक्तेरिति पूर्वापरविरोधः न शंक्यः ॥

## अश्विन्यादितारकासंख्याज्ञानफलम्-

तारकामानोक्तेः प्रयोजनं विवाहे नक्षत्रतारकातुल्यैर्वर्षैस्तु सदसत्फलमित्यादि । तदुक्तं वराहेण "नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत् । दिवसैर्ज्वरस्य नाशो व्याधिश्चान्यस्य वै वाच्यम् " इति । तद्यथा । शौनकेन विवाहे प्रत्येकं नक्षत्रफलान्यभिहितानि । तत्र

" प्राजापत्ये सुभगा भोगयुतातिप्रिया भर्तुः । पुत्रधनानि च लभते सा कन्या पंचवर्षेण ॥" इति । रोहिण्यामुद्वाहफलमुक्तं तद्रोहिण्यास्तारा: पंच तावद्वर्षैर्भवंति ॥ " अब्दात्प्राणवियोगं त्वाष्ट्रे प्राप्नोति भूतसंसर्गात् । त्यक्त्वा स्वज्ञातिकुलं कामपरा याति वेश्यात्वम् ॥ " इति । चित्राया असत्फलं तच्चित्रातारैका तर्हि एकेन वर्षेण भवति । एवं ज्वराद्युत्पत्तावपि तारकामानदिवसैर्ज्वरस्यान्यस्य व्याधे रोगस्य वा नाशो वाच्य इत्याद्यूह्यम् ॥ ननु नक्षत्रभेदेन पूर्वमपि ज्वरनाशका दिवसा: प्रोक्ता: । अत्र तु तारकामितसंख्या दिवसा उक्ता इति ग्रन्थविरोध इति चेन्न, चरणभेदान्न विरोध इति वयं ब्रूमः ॥ ५७ ॥

## अश्विन्यादीनामाकृतयः–

**अश्व्यादिरूपं तुरगास्ययोनिक्षुरोनएणास्यमणिर्गृहं च ॥**
**पृषत्कचक्रे भवनं च मंचः शय्याकरो मौक्तिकविद्रुमं च ॥५८॥**
**तोरणं बलिनिभं च कुण्डलं सिंहपुच्छगजदंतमंचकः ॥**
**त्र्यस्रि च त्रिचरणाभमर्दलो वृत्तमंचयमलाभमर्दलाः ॥ ५९ ॥**

अथाश्विन्यादीनामाकृतिमुपजात्या रथोद्धतया चाह–अश्व्यादिरूपमिति । अश्विन्यादीनां नक्षत्राणां रूपमाकृतिरुच्यते । ( १ )–तत्राश्विन्यास्तुरगास्यमश्वमुखसदृशं रूपम् ( २ )–भरण्या योनिर्भगस्तद्वद्रूपम् । ( ३ )–कृत्तिकाया नापितक्षुराकृतिः । ( ४ )–रोहिण्या अनः शकटरूपम् । ( ५ )–मृगस्य एणास्यं हरिणमुखसदृशम् । ( ६ )–आर्द्राया मणिसदृशम् । ( ७ )–पुनर्वसोर्गृहतुल्यम् । ( ८ )–पुष्यस्य पृषत्को बाणस्तत्सदृशम् । ( ९ )–आश्लेषयाश्चक्राकारम् । ( १० )–मघाया भवनं गृहसदृशम् । ( ११ )–पूर्वाफाल्गुन्या मंचः खट्वा तदाकारम् । ( १२ )–उत्तराफाल्गुन्याः शय्याकारम् । ( १३ )–हस्तस्य हस्ताकारम् । ( १४ )–चित्राया मौक्तिकाकारम् । ( १५ )–स्वात्याः प्रवालौपम्यम् । ( १६ )–विशाखायास्तोरणाकारम् । ( १७ )–अनुराधाया बलिर्भक्तपुंजस्तदाकारम् । ( १८ )–ज्येष्ठायाः कुंडलाकृति । ( १९ )–मूलस्य सिंहपुच्छाकारम् । ( २० )–पूर्वाषाढाया गजदंतसदृशम् । ( २१ )–उत्तराषाढाया मंचकसदृशम् । ( २२ )–अभिजितस्त्रिकोणाकारम् । ( २३ )–श्रवणस्य त्रिविक्रमस्त्रिचरणो वामनस्तत्स्वरूपम् । ( २४ )–धनिष्ठाया मर्दलसदृशम् । ( २५ )–शततारकाया वृत्तं वर्तुलम् । ( २६ )–पूर्वाभाद्रपदाया मंचसदृशम् । ( २७ )–उत्तराभाद्रपदाया यमलाभम् । ( २८ )–रेवत्या मर्दलाकारम् । एषामेवं स्वरूपमित्यर्थः । उक्तं च रत्नमालायाम्–" तुरगमुखसदृशं योनिरूपं क्षुराभं शकटसममथैणस्योत्तमांगेन तुल्यम् । मणिगृहशरचक्राभानि शालोपमाभं शयनसदृशमन्यच्चात्र पर्यंकतुल्यम् ॥ हस्ताकारमतश्च मौक्तिकसमं चान्यत्प्रवालोपमं धिष्ण्यं तोरणवत्स्थितं बलिनिभं सत्कुंडलाभं परम् । क्रुध्यत्केसरिणः क्रमेण सदृशं शय्यासमानं परं चान्यद्दंतिविषाणवत्स्थितमतः शृङ्गाटकव्यक्ति च ॥ त्रिविक्रमाभं च मृदंगरूपं वृत्तं ततोन्यद्यमलद्वयाभम् । पर्यंकरूपं मुरजानुकारि चेत्येवमश्व्यादिभचक्ररूपम् ॥ " इति ॥ ५८ ॥ ५९ ॥

## जलाशयाऽऽरामदेवप्रतिष्ठामुहूर्ताः-

**जलाशयारामसुरप्रतिष्ठा सौम्यायने जीवशशांकशुक्रे ॥
दृश्ये मृदुक्षिप्रचरध्रुवे स्यात्पक्षे सिते स्वर्क्षतिथिक्षणे वा ॥६०॥
रिक्तारवर्जे दिवसेऽतिशस्ता-**

अथ जलाशयारामदेवप्रतिष्ठामुहूर्त्तं सपादोपजातिकयाह-जलाशयेति । जलाशयोत्सर्गः आरामोत्सर्गश्च देवानां विष्णवादीनां प्रतिष्ठा वक्ष्यमाणप्रकारेणोच्यते । तत्र त्रयाणामपि सामान्यतो दिनशुद्धिरियं विचार्या । यथा सौम्यायने उत्तरायणे मकरादिषड्राशिस्थिते सूर्ये सति तथा जीवशशांकशुक्रेषु दृश्यमानेषु सत्सु तथा मृदुगणक्षिप्रगणचरगणध्रुवगणनक्षत्रेषु तथा सिते शुक्ले पक्षे स्वर्क्षतिथिक्षणे यस्य देवस्य प्रतिष्ठा कर्त्तुमिष्टा तस्य तत्स्वामिके नक्षत्रे तिथौ वा क्षणे मुहूर्ते वा । तथा रिक्तारवर्जे रिक्ताः पूर्वमुक्तास्तिथयः । आरो भौमः । एतान्वर्जयित्वान्यतिथिषु अन्यवारेषु च एवंविधेषु दिनेषु । जलाशयस्तडागादिः, आराम उपवनम्, सुरा देवास्तेषां प्रतिष्ठा क्रमेण कर्माईत्वोपभोगयोग्यत्वपूजायोग्यत्वरूपातिप्रशस्तातिहितास्ति ॥ अत्र दक्षिणायनगुर्वस्तशुक्रास्तचन्द्रास्तानां सामान्यतः शुभकार्येषु निषेधात् परिशेषतो गुरुशुक्रचन्द्रोदयोत्तरायणानि प्रशस्तानि । दक्षिणायननिषेधश्चौले वक्ष्यते ॥ तत्र जलप्रतिष्ठायां दीपिका-" मार्तंडेन्दुशुद्धौ सुरजिदशयने माघषट्कस्य शुक्रे मूलाषाढोत्तराश्विश्रवणगुरुकरे पौष्णशक्राजचांद्रे । मैत्रे ब्राह्मे च पूर्णामदनरवितिथौ सद्वितीयातृतीये कार्या तोयप्रतिष्ठा ज्ञगुरुसितदिने कालशुद्धे सुलग्ने ॥"
इति । सुरजिद्विष्णुस्तस्याशयनं शयनाभावः विष्णुशयनव्यतिरिक्ते काले इत्यर्थः । "देवतारामवाप्यादिप्रतिष्ठासुत्तरायणे । माघादिपंचमासेषु कृष्णेऽप्यापंचमीदिनम् ॥ दक्षिणे त्वयने कुर्वन्न तत्फलमवाप्नुयात् ॥ " इति । अत्र चोत्तरायणे जलं जलाशये स्थास्यतीत्येवं निश्चिते निषेधः । मत्स्यपुराणेपि-"चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवेपि वा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ॥ प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे ॥"देवानामित्युपलक्षणम् । तेन देवारामवाप्यादिप्रतिष्ठा शुभदेत्यर्थः । मकरसंक्रमणः उत्तरायणपदेनोपलक्ष्यते । अतो मकरसंक्रमोत्तरः कालः शुभ उच्यते अन्यथा माघादिपंचकं साक्षाद्विहितम्, उत्तरायणातिक्रमे हि दक्षिणायनसंग्रह इति तन्निषेधे उत्तरायणपदवैयर्थ्यानुपपत्त्या सर्वकालसंग्रहे वर्ज्याभावात्कालोपदेशानर्थक्यमापद्यते । उपलक्षणं च " भविष्यत्ययने पुण्यमतीते चोत्तरायणे" इत्यत्र दृश्यते । यदा तु दक्षिणायन एव जलस्थितिसंभवस्तदा न कालनियमः । 'तत्र प्रमाणं सलिलं यत्' इति भविष्यत्पुराणोक्तेः । तत्रापि कार्त्तिकमासे शुभफलदसंक्रांतौ वा शुभतिथौ मेषधनुः सिंहवर्जिते लग्ने वापीकूपतडागादिप्रतिष्ठेति ध्येयम् । उक्तं च भविष्यत्पुराणे-" तस्मिन् सलिलसंपूर्णे कार्त्तिके च विशेषतः । तडागस्य विधिः कार्यः स्थिरनक्षत्रयोगतः " इति ॥

## वापीकूपतडागारामप्रतिष्ठायां संक्रान्तिभेदेन फलानि-

अग्निपुराणे संक्रांतिभेदेन फलभेदोऽभ्यधायि " वापीकूप तडागानां तस्मिन्काले विधिः स्मृतः । सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता ॥ कर्कटे पुत्रलाभश्च सौख्यं तु मकर

भवेत् । मीने यशोर्थलाभश्च कुंभे च सुबहूदकम् ॥ वृषे च मिथुने वृद्धिर्वृश्चिके च जलं भवेत् । पितृतृप्तिश्च कन्यायां तुलायां शाश्वती गतिः ॥ सिंहे मेषे धनुर्लग्ने लक्ष्मीश्च द्विज गच्छति " ॥ इति ॥

## देवप्रतिष्ठायां विशेषः–

देवप्रतिष्ठायां तु विशेषः । तत्र वसिष्ठः–अथ प्रतिष्ठां कथयामि सम्यक्छिवस्य विष्णोस्तवथवा परेषाम् । सौम्यायने देवगुरौ च शुक्रे संदृश्यमाने परिचारकाणाम् ॥" इति । शिवविष्णुग्रहणं प्राधान्यख्यापनार्थम् ॥

## उग्रदेवानां दक्षिणायनेपि प्रतिष्ठा भवति–

अत्र सौम्यप्रकृतीनां देवानामुत्तरायणे स्थापनमुक्तम् । उग्रप्रकृतीनां तु दक्षिणायनेपि स्थापनं कार्यम् । तदुक्तं वैखानससंहितायां–" मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहंत्री च स्थाप्या वै दक्षिणायने ॥" इति ॥ शैवसिद्धांतशेखरे तु–" श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने मुक्तिमिच्छताम् । दक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोः ॥" इत्युक्तम् । अत्र दक्षिणे तु मुमुक्षूणामित्यपि मातृभैरवेत्यादिपरतया योज्यम् । अन्यथा प्रतिपदं मासगणना वसिष्ठादिषु न युज्येत । यदाह वसिष्ठः–" मासे तपस्ये तपसि प्रतिष्ठा धनायुरारोग्यकरी च कर्तुः । चैत्रे महारुक्प्रदा च शुक्रे समाधवे पुत्रधनाप्तये स्यात् ॥ " इति । नारदोपि "विचैत्रेष्वेव मासेषु माघादिषु च पंचसु " इति । वसिष्ठः–"आषाढमासादिचतुष्टयेपि कलत्रसंतानविनाशदा स्यात् । ऊर्जे च कर्तुर्निधनप्रदा च सौम्ये सपौषेऽखिलदुःखदा स्यात् ॥ वलक्षपक्षः शुभदः समस्तः सदैव तत्राद्यदिनं विहाय । अंत्यत्रिभागं परिहृत्य कृष्णपक्षोपि शस्तः खलु पक्षयोश्च ॥ रिक्तावमत्यक्तदिनेष्वनिंद्ययोगेषु वैनाशकवर्जितेषु । दिने महादोषविवर्जिते च शशांकताराबलसंयुते च " इति ॥

## वैनाशकनक्षत्राणि-सर्वत्र वर्ज्यानि–

वैनाशकनक्षत्राणि नारदेनोक्तानि–" जन्मभाद्दशमं कर्म सघातर्क्षं च षोडशम् । अष्टादशं सामुदायं त्रयोविंशं विनाशभम् ॥ मानसं पंचविंशर्क्षं नाचरेच्छुभमेषु तु" इति ॥

## प्रतिष्ठायां तिथयः–

तिथीनाह नारदः–"यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः । द्वितीयादिद्वयोः पंचम्यादितस्तिसृषु क्रमात् ॥ दशम्यादिचतसृषु पौर्णमास्यां विशेषतः ॥" इति । मुख्यतिथ्यसंभवे उक्ततिथौ स्थापनं कार्यमित्यर्थः ॥

## प्रतिष्ठायां वाराः सफलाः–

वारानाह नारदः–"कुजवर्जितवारेषु कर्तुः सूर्ये बलप्रदे । चंद्रताराबलोपेते पूर्वाह्णे शोभने दिने॥"इति॥ प्रत्येकं वारफलमाह वसिष्ठः–"कीर्तिप्रदं क्षेमकरं कृशानुभयप्रदं वृद्धिकरं दृढं च । लक्ष्मीकरं सुस्थिरदं दिनादिवारेषु संस्थापनमामनंति॥" इति ॥ तत्र विवेकः । तत्र जलप्रतिष्ठार्थं दीपिकायामुक्तानि नक्षत्राणि । अधुना आरामप्रतिष्ठार्थं नक्षत्राणि । देवप्रतिष्ठानक्षत्राणि–"हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु । स्यादुत्तराधातृशशांकभेषु

सर्वामरस्थापनमुत्तमं तत् ॥" इति । अथ षोडशभानि ध्रुवमृदुक्षिप्रलघुरूपाण्येवोक्तानि अत्र ग्रन्थकर्त्रा जलाशयारामसुरप्रतिष्ठानक्षत्राण्येव बहुधा तुल्यत्वादुक्तानि । द्वित्रीणि न भिन्नानि तान्युक्ताविशेषवचनेभ्योवसेयानीति । तत्र जलाशयारामयोर्निमित्यर्थं तन्मुहूर्त्तः प्रागुक्तः। देवताघटनमुहूर्त्तस्तु उच्यते मया । तत्र दीपिका-" ध्रुवलघुमृदुवर्गे वारुणे विष्णुदैवे मरुददितिधनिष्ठे शोभने वासरे च । त्रिदशमदनजन्मैकादशे ३ । १० । ७ । १ । ११ । शीतरश्मौ । विबुधसुकृतिरिष्टा नाडिनक्षत्रहीने ॥" इति । नाडिनक्षत्राणि वैनाशिकनक्षत्राणि ॥ ६० ॥

## देवताप्रतिष्ठायां लग्नविशेषलग्नशुद्धयः-

**शशांकपापैस्त्रिभवांगसंस्थैः । व्यष्टांत्यगैः सत्खचरैर्मृगेंद्रे सूर्यो घटे को युवतौ च विष्णुः ॥ ६१ ॥ शिवो नृयुग्मे द्वितनौ च देव्यः क्षुद्राश्चरे सर्व इमे स्थिरर्क्षे ॥ पुष्ये ग्रहा विघ्नपयक्षसर्पभूतादयोंत्ये श्रवणे जिनश्च ॥ ६२ ॥**

**इति दैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ नक्षत्रप्रकरणं समाप्तम् ॥ २ ॥**

अथ देवताप्रतिष्ठायां सामान्यतो लग्नशुद्धिं देवताविशेषाणां लग्नविशेषं च पादोनोपजातिकाभ्यामाह-शशांकेति । जलाशयप्रतिष्ठायामारामप्रतिष्ठायां च सुलग्नमात्रं विचार्यम् । देवप्रतिष्ठायां शशांकश्चंद्रः पापाः सूर्यभौमशनिराहुकेतवस्तैस्त्रिभवांगसंस्थैस्तृतीयषष्ठैकादशस्थानस्थितैरुपलक्षिते लग्ने तथा सत्खचरैः सोमबुधगुरुशुक्रैर्व्यष्टांत्यगैरष्टमद्वादशव्यतिरिक्ताखिलस्थानस्थैः सद्भिर्देवप्रतिष्ठातिशस्ता । तदुक्तं रत्नमालायां-"केंद्रत्रिकोणभवमूर्त्तिषु सद्ग्रहेषु चंद्रार्कभौमशनिषु त्रिषडायगेषु । सांनिध्यमेति नियतं प्रतिमासु देवः कर्त्तुः सुखार्थसुतसंपदरोगता च ॥ सौम्या लग्नाद्याश्रिता मूर्तिपूर्वा तावद्वीर्यैरुत्कटा वर्द्धयंती । षष्ठं हित्वा भावमेते हि तत्र शत्रुध्वस्तिं कर्त्तुरुत्पादयन्ति ॥"इति । शनिग्रहणं राहुकेत्वोरप्युपलक्षणम् । यदाह वसिष्ठः-"सूर्येंदुभौमार्क्यहिकेतवश्च लग्नस्थिता नैधनदाश्च भर्तुः । सौम्यग्रहा लग्नगतास्तदैव ह्यायुर्बलारोग्यकराश्च नूनम् ॥" इति । अन्यच्च तत्रैव-"सर्वे ग्रहा नैधनास्त्वजस्रं सौम्या असौम्याः खलु मृत्युसंस्थाः" इति ॥

## नवांशविचारस्तत्र-

प्रसंगान्नवांशविचारः । तत्र स्थिरद्विस्वभावनवांशा ग्राह्या न चरांशाः । तत्रापि तुलांशः साधीयान् । यदाह वसिष्ठः-"पंचेष्टके जीवशशांकसूर्यमुख्यग्रहैः सौम्यनवांशयुक्तैः । लग्ने स्थिरे चोभयराशियुक्ते नवांशके चोभयगे स्थिरे, वा ॥ उभयगे द्विस्वभावे । चरोदये लग्नगते न कार्यं संस्थापनं नैव चरांशकेपि । चरोपि मुख्यःसकलांशकश्च सदा मृदुत्वात्सुरसन्निवेशे॥" इति । मृदुत्वाच्छुभस्वामित्वात् । नारदोपि-"शुभलग्ने शुभांशे च कर्त्तुस्ते निधनोदये । राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः ॥" इति ।

## लग्नदोषापवादः–

लग्नदौष्टयेऽपवादो वसिष्ठेनोक्तः–"एकोपि जीवो बलवांस्तनुस्थः सितोपि सौम्योप्यथवा बली चेत्। दोषानशेषान्विनिहंति सद्यः स्कंदो यथा तारकदैत्यवर्गम्" इति। नारदः– "गुणाधिकतरे लग्ने दोषेऽत्यल्पतरे यदि सुराणां स्थापनं तत्र कर्त्तुरिष्टार्थसिद्धिदम्" इति ॥ ६१ ॥ मृगेन्द्र इति। सूर्यो मृगेंद्रे सिंहलग्ने स्थाप्यः। तथा को ब्रह्मा घटे कुंभलग्ने। विष्णुर्युवतौ कन्यालग्ने। शिवो महादेवो नृयुग्मे मिथुनलग्ने च पुनर्द्वितनौ मिथुनकन्याधनुर्मीनलग्नेषु देव्यो दुर्गादक्षिणामूर्त्यादयः चरे मेषकर्कतुलामकरलग्नेषु क्षुद्रा देव्यश्चतुःषष्टियोगिनीप्रभृतयः सर्वे इमे उक्ता अनुक्ताश्च देवा इत्यर्थः। उक्ता महादेवादयः अनुक्ता इन्द्रादयः ते स्थिरक्षे वृषसिंहवृश्चिककुंभलग्नेषु स्थाप्याः। यदाह श्रीपतिः–" सिंहोदये दिनकरो मिथुने महेशो नारायणश्च युवतौ घटभे विधाता। देव्यो द्विमूर्तिभवने च निवेशनीयाः क्षुद्राश्चरे स्थिरगृहे निखिलाश्च देवाः॥" इति। पुष्ये ग्रहा इति। ग्रहाश्चंद्रादयोष्टौ पुष्यनक्षत्रे स्थाप्या इत्यर्थः। उपलक्षणं चैतत्। तत्र सूर्यस्य हस्तनक्षत्रे स्थापनम्, महादेवब्रह्मणोः पुष्यश्रवणाभिजित्सु स्थापनम्, कुबेरस्कंदयोरनुराधायां दुर्गाप्रभृतीनां मूले स्थापनम्, सप्तर्षीणां स्वाधिष्ठितनक्षत्रे, लक्ष्मीव्यासवाल्मीक्यगस्त्यानामपि सप्तर्ष्यधिष्ठितनक्षत्रे स्थापनम्। उक्तं च रत्नमालायां–"पुष्यश्रुत्यभिजित्सुरेश्वरकयोर्वित्ताधिपस्कंदयोर्मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकानां शुभम्॥" को ब्रह्मा॥ तथा "सप्तर्षयो यत्र चरंति धिष्ण्ये कार्या प्रतिष्ठा खलु तत्र तेषाम्। श्रीव्यासवाल्मीकिघटोद्भवानां तथा स्मृता वाक्पतिभे ग्रहाणाम्॥" इति। सप्तर्षयस्तु–" कश्यपोत्रिर्भरद्वाजो विश्वामित्रोथ गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः" इति स्मृतेस्ते यस्मिन् नक्षत्रे संचरतो दृश्यंते तस्मिन्नक्षत्रे तेषां स्थापनम्। श्रीव्यासवाल्मीकिघटोद्भवानां तथा सप्तर्ष्यधिष्ठितनक्षत्रे। ग्रहाणां वाक्पतिभे पुष्ये। घटोद्भवोऽगस्त्यः। विघ्नपेति। विघ्नपो गणेशः। यक्षो देवयोनिः। सर्पा वासुक्यादयः। भूतो देवयोनिः॥ " विद्याधराप्सरोयक्षरक्षोगंधर्वकिन्नराः।पिशाचो गुह्यकः सिद्धो भूतोमी देवयोनयः॥"इत्यभिधानात्। आदिशब्देन राक्षसासुरमथनसरस्वतीप्रभृतयो गृह्यंते। ते रेवत्यां स्थाप्याः॥ तथा श्रवणे श्रवणनक्षत्रे जिनो बुद्धः स्थाप्यः। उपलक्षणं चैतत्। इंद्रकुबेरवर्जितानां लोकपालानां धनिष्ठायां स्थापनम्। इतोऽवशिष्टानां देवानां त्र्युत्तरारोहिणीषु स्थापनं स्यादित्यर्थः। एतदप्युक्तं रत्नमालायां–" गणपरिवृढरक्षोयक्षभूतासुराणां प्रमथफणिसरस्वत्यादिकानां च पौष्णे। श्रवसि सुगतनाम्नो वासवे लोकपानां निगदितमखिलानां स्थापनं हि स्थिरेषु॥ इति। परिवृढः स्वामी। " प्रभौ परिवृढः " इति साधुः। गणपरिवृढो गणेशः। प्रमथा महादेवस्य पारिषदाः। श्रवसि श्रवणनक्षत्रे। सुगतो बुद्धः। " सर्वज्ञः सुगतो बुद्धः " इत्यमरः। स्थिरेषु रोहिण्युत्तरास्वित्यर्थः॥ ६२ ॥ नक्षत्रप्रकरणं गद्येनोपसंहरति–इति श्रीदैवज्ञानंतेति। इदं पूर्ववद्व्याख्येयम्। ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्त्तचिन्तामणेः। गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने तिथिवारभप्रकरणं सम्पूर्णतामध्यगात्॥ १॥

इति श्रीविद्वद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्त्तचिन्तामणिटीकायां पीयूषधाराभिधायां तिथिवारनक्षत्रप्रकरणं समाप्तम्॥ २॥

# सङ्क्रांतिप्रकरणम् ३ ।

संक्रान्तिफलं नक्षत्रवारभेदेन-

**घोरार्कसंक्रमणमुग्ररवौ हि शूद्रान्ध्वांक्षी विशो लघुविधौ च चरर्क्षभौमे ॥ चौरान्महोदरयुता नृपतीन्ज्ञमैत्रे मंदाकिनी स्थिरगुरौ सुखयेच्च मंदा ॥ १ ॥ विप्रांश्च मिश्रभभृगौ तु पशूंश्च मिश्रातीक्ष्णार्कजेंत्यजसुखा खलु राक्षसी च ॥**

श्रीगणेशाय नमः ॥ गौरीनंदनमिष्टसिद्धिसदनं विघ्नावलीभेदनं नत्वा ज्योतिषिकाख्यरामरचिते मौहूर्त्तचिन्तामणौ । गोविंदो बुधनीलकंठविधिवित्सूनुः सतामग्रणीर्बह्वर्थं खलु संक्रमप्रकरणं व्याख्याति विद्वन्मुदे ॥ १ ॥

## रविसंक्रान्तिलक्षणं-मध्यमास्पष्टादितदवान्तरभेदाश्च-

संक्रांतिप्रकरणं व्याख्यायते । तत्र ग्रहाणां प्राग्राशितोऽपरराशौ संक्रमणं संक्रांतिरिति संक्रांतिलक्षणम् । सा च द्विविधा मध्यमा स्पष्टा च । षट् कर्मसंस्कृतो मध्यमग्रहो राश्यंतरं यदा संक्रामति सा मध्यमा संक्रांतिरुच्यते । यदा तु स्पष्टीकृतसंस्कारविशिष्टो ग्रहो राश्यंतरं गच्छेत्सा स्पष्टसंक्रांतिरुच्यते । तत्र मध्यममानस्य स्पष्टीकरणार्थत्वादेव तज्जनितसंस्कारानुपयोगादत्र तत्त्यागे स्पष्टसंक्रांतिरेव गृह्यते । सापि द्विविधा-सायनांशा निरयनांशा चेति । तत्र यदा सिद्धांतगणनागतायनांशसंस्कृताः ग्रहा राश्यन्तरगमनमुररीकुर्वते सायनांशा संक्रांतिरुच्यते, यदा त्वयनांशसंस्काररहिता ग्रहा राश्यंतरगास्तदा निरयनांशा संक्रांतिरुच्यते ॥

## चन्द्रादिसंक्रान्तयो न ग्राह्याः ।

तत्रान्यासां चंद्रादिसंक्रांतीनां तु " देवद्व्यंकर्तवोष्टाष्टौ नाड्योंका खनृपाः क्रमात् । वर्ज्याः संक्रमणेऽर्कादेः प्रायोर्कस्यातिनिंदिताः ॥ " इति वर्ज्यघटीत्वमेव विवाहप्रकरणे वक्ष्यति । न फलकथने आसां संक्रांतीनां कश्चिदुपयोगः । सूर्यसंक्रांतीनां तु नक्षत्रवारसमयभेदेन ववादिकरणभेदेन च शुभाशुभफलकथनयोग्यता पुण्यकालता संक्रांतिविशेषे वर्ज्यघटीन्यूनाधिकभावश्चास्तीत्यतो बहुवक्तव्यत्वात्स्वतंत्रमेव सूर्यसंक्रांतिप्रकरणमारिप्सुर्नक्षत्रवारभेदेन फलं तावत्सार्धवसंततिलकयाह-घोरेति । अर्कस्य सूर्यस्यसंक्रमणं निरयनांशा संक्रांतिरुग्ररवावुग्रसंज्ञकनक्षत्रे रविवारे स्यात्तदा घोरेति नाम्नी सा शूद्रान्सुखयेत्सुखमुत्पादयेत्तेषाम् । अत्रार्कसंक्रमणमिति पदोपादानसामर्थ्यात्सूर्यसंक्रांतिष्वेवायं विचारो नाखिलग्रहसंक्रांतिष्विति फलितोऽर्थः ॥ ननूग्ररवावित्यत्र सप्तम्यंते द्वंद्वसमासोऽस्ति । स किमितरेतरयोगद्वंद्वो वा समाहारद्वंद्वो वा । नाद्यः, इतरेतरयोगद्वंद्वस्योद्भूतावयवभेदवत्त्वाद्द्विवचनांतता स्यात् । तथा सत्युग्र-

व्योरिति भवितव्यम्। उग्रनक्षत्राणां बहुत्वादुग्ररविष्विति बहुवचनांतता च स्यादिति केचि-दाहुः। उभयथापि पाठे छन्दोभंगदोषः प्राप्नोति। न द्वितीयः। समाहारद्वंद्वस्य 'सर्वो द्वंद्वो विभाषैकवद्भवति' इत्येकवद्भावविधानात्। "स नपुंसकम्" इति नपुंसकलिंगतायां सत्यां समा-हारस्यैकत्वादेकवचनं ङिस्तस्मिन्परतः "इकोचि विभक्तौ" इति नुमागमे उग्ररविणीलि स्यात्। तादृशपाठेपि छन्दोभंगो दूषणम्। अत्र समाधिः—इतरेतरयोगद्वंद्वोत्र न कार्यः, किंतु समाहा-रद्वंद्वः कार्यः। तथाहि "स्तोःश्चुना श्चुः" इत्यत्र सूत्रे स्तोरिति ज्ञापकादागमशासनस्यानि-त्यत्वावगतेर्नुमभावे "अच्च घेः"इत्यौत्वे अत्त्वे च सिद्धमुग्ररवाविति। अथवोग्रैः सहितो रवि-रुग्ररविरिति शाकपार्थिवादेराकृतिगणत्वान्मध्यमपदलोपी तत्पुरुषः समासः। ततः सप्तम्येक-वचने पूर्ववत्सिद्धमिष्टम्। अतश्छंदोभङ्गाभावोपि सिद्धः। एवं लघुविधावित्यादावपि समाधे-यम्। अनेनैवाशयेन 'मर्यादाभिविधौ च यः, इति काशिकाप्रयोगोपपत्तिरित्यलमतिप्रसंगेन॥ लघुनक्षत्रे विधौ चन्द्रवारे वा सूर्यसंक्रांतिर्ध्वांक्षीनाम्नी विशो वैश्यान्सुखयेत्। चरर्क्षे चरन-क्षत्रे भौमे मंगलवारे वा संक्रांतिर्महोदरयुता महोदर्यानाम्नी चोरान्सुखयेत्। ज्ञे मैत्रे बुधे मैत्रसंज्ञकनक्षत्रे वा संक्रांतिर्मंदाकिनीनाम्नी नृपतीन् राज्ञः सुखयेत्। स्थिर-नक्षत्रे गुरुवारे वा संक्रांतिर्मन्दानाम्नी विप्रान्सुखयेत्। मिश्रनक्षत्रे भृगुवारे वा संक्रां-तिर्मिश्रानाम्नी पशून् सुखयेत्। तीक्ष्णनक्षत्रे अर्कजे शनिवारे वा संक्रांतिः खलु निश्चयेन राक्षसीनाम्नी अंत्यजांश्चांडालान् सुखयतीत्यंत्यजसुखा स्यादित्यर्थः। यदाह कश्यपः—"घोरा ध्वांक्षी महोदर्या मन्दा मन्दाकिनी तथा। मिश्रा राक्षसिका सूर्यसंक्रांतिष्वर्कवासरात्॥" वसिष्ठः—"घोरोग्रर्क्षे ध्वांक्षी लघुभे चरभे महोदर्या मृदुभे मंदा-किनी चरर्क्षे मंदा मिश्रे च राक्षसी तीक्ष्णे॥" अत्र छंदोभंगस्त्वार्षः। देवीपुराणे—"मंदा ध्रुवेषु विज्ञेया मृदौ मंदाकिनी तथा। क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्तिता॥ चरैर्म-होदर्या ज्ञेया क्रूरैरुग्रैस्तु राक्षसी। मिश्रिता चैव विज्ञेया मिश्रैर्ऋक्षैस्तु संक्रमे॥" इति। रत्नमालायाम्—"उग्रक्षिप्रचरैर्मैत्रध्रुवमिश्राख्यदारुणैः। ऋक्षैः संक्रांतिरर्कस्य घोराद्या क्रमशो भवेत्॥" नारदकश्यपौ—"शूद्रतस्करवैश्यक्ष्मादेवभूपगवां क्रमात्। अनुक्तानां च सर्वेषां घोराद्याः सुखदाः स्मृताः॥" क्ष्मादेवाः ब्राह्मणाः। अनुक्तानां चांडालादीनाम्॥ ननूक्तं वक्ष्यमाणं वा शुभाशुभफलं सायनांशसंक्रांतितः कुतो न विचार्यत इति चेत् उच्यते, सायनां-शसंक्रांतेः स्नानदानजपादावेव कार्यं न सर्वत्र। यदाह पुलस्त्यः—"स्नानदानजपश्राद्धव्रतहो-मादिकर्मसु। सुकृतं चलसंक्रांतावक्षयं पुरुषोऽश्नुते॥" इति। चलसंक्रमः सायनांशसंक्रांतिः। अतश्चलसंक्रांतेः परिगणितस्नानादिकविषयत्वादेव कृत्यांतरेषु विवाहादिशुभकर्मसु संक्रांति-मासांगीकारे शुभाशुभफलकथने च नास्या उपयोग इति युक्तमुत्पश्यामः। इदं चाग्रे सम्य-क्तया निर्णेष्यते॥ १॥

संक्रान्त्यशुभफलदक्षिणायनोत्तरायणसंज्ञाः—

**त्र्यंशे दिनस्य नृपतीन्प्रथमे निहंति मध्ये द्विजानपि विशोपरके च शूद्रान्॥ २॥ अस्ते निशाप्रहरकेषु**

पिशाचकादीन्नक्तंचरानपि नटान्पशुपालकांश्च ॥ सूर्योदये सकललिंगिजनं च सौम्ययाम्यायनं मकरकर्कटयोर्निरुक्तम् ॥ ३ ॥

अथ दिनरात्रिविभागेन संक्रांत्यशुभफलमुत्तरायणदक्षिणायनसंज्ञां च सार्द्धवसंततिलकयाह–त्र्यंशे इति । अत्रार्कसंक्रमणमित्यनुवर्त्तते । दिनप्रमाणं त्रिभिर्भक्तं घट्यात्मकस्तृतीयांशो भवति। तत्र दिनस्य प्रथमत्र्यंशेऽर्कसंक्रमणं नृपतीन् हंति,मध्ये द्वितीयत्र्यंशे द्विजान् ब्राह्मणान् हंति, अपरके तृतीयत्र्यंशे वैश्यान् हंत्येवं सर्वत्र व्याख्येयम् ॥ अस्ते सूर्यास्तसमयेऽर्कसंक्रमणं शूद्रान् ॥ अथ रात्रिसंक्रांतिफलम् । तत्र रात्रिप्रथमप्रहरे पिशाचकादीन्, आदिशब्देन भूतादीन्, द्वितीयप्रहरे नक्तंचरान् राक्षसान् । तृतीयप्रहरे नटान् नर्त्तकान्, चतुर्थप्रहरे पशुपालकान् आभीरान् सूर्योदयसमयेऽर्कसंक्रमणं सकललिंगिजनं पाखंडादिकं हन्तीत्यर्थः। "पाखंडाः सर्वलिंगिनः" इत्यभिधानात् । यदाहतुर्नारदकश्यपौ–"पूर्वाह्णे नृपतीन्हंति विप्रान्मध्यदिने विशः । अपराह्णेस्तगे शूद्रान्प्रदोषे च पिशाचकान् ॥ निशि रात्रिचरान्नाट्यकारानपररात्रके । गोचारिणश्च संध्यायां लिंगिनं रविसंक्रमे ॥" इति ॥

## सङ्क्रान्तफलं क्रूरसौम्यवारभेदेन–

संक्रांतेः क्रूरसौम्यवारपरत्वेन फलविशेषमाह वसिष्ठः–"रविरविजभौमवारे संक्रांतौ दिनकरस्य तन्मासे । पित्तकफानिलजामयनरपतिकलहं त्ववृष्टिश्च ॥ बुधगुरुसितचंद्राह्ने सति संक्रांतावनामयं नृणाम् । क्षितिपतिनिकरक्षेमं सस्यविवृद्धिर्विधर्मिणां पीडा ॥" इति ॥

## मेषसंक्रांतिफलं नक्षत्रभेदेन–

अत्र मेषसंक्रांतौ विशेषमाह–कश्यपः–"यदा मेषगतः सूर्यो भरण्यादिचतुष्टगे । सस्यवृद्धिर्भवेत्तस्य वृद्धिरार्द्राचतुष्टये ॥ मघादिदशके हानिः क्षेमं चानुक्तभेषु च ॥" अस्यार्थः–यस्मिन्दिने मेषसंक्रमस्तद्दिने चंद्रो यदि भरण्यादिनक्षत्रचतुष्टये स्यात्तदा सस्यवृद्धिः । एवमग्रेपि व्याख्येयम् ॥

## जन्मनक्षत्रे संक्रान्तिफलम्–

जन्मनक्षत्रे संक्रांतिफलं दीपिकायाम्–"यस्य जन्मर्क्षमासाद्य रविसंक्रमणं भवेत् । तन्मासाभ्यंतरे तस्य रोगः क्लेशो धनक्षयः ॥" इति ॥

## तत्र शान्तिः–

तत्र शांतिकमपि दीपिकायामुक्तम्–"तगरसरोरुहपत्रै रजनीसिद्धार्थलोध्रसंयुक्तैः । स्नानं जन्मन्यृक्षे रविसंक्रांतौ नृणां शुभदम् ॥" इति ॥

## संक्रान्तिषु वृष्टौ फलम्–

संक्रातिषु वृष्टौ जातायां फलमुक्तं वसिष्ठेन–" अजकन्याझषकर्किणि संक्रांतौ यदि भवे-

दुर्षम् । अतुलं क्षेम सुभिक्षं नृपसज्जनगोकुलक्षेमम्। घटचापसिंहमिथुनसंक्रांतौ यदि भवेद्दुर्षम्। आमयडामरभूभृद्युद्धमनर्थं त्ववृष्टिश्च ॥ वृषवृश्चिकतुलमकरे वृष्टिः स्यात्संक्रमे समये । विस्फोटामयतस्करपीडा वृष्टिः कृशानुभयम्।" इति ॥ सौम्येति ॥ मकरकर्कटयोः संक्रांतिश्चेत्तदा क्रमेण सौम्ययाम्यायनं निरुक्तं कथितम् । मकरे उत्तरायणं कर्कटे याम्यायनं स्यादित्यर्थः यदाह नारदः-"सौम्ययाम्यायने नूनं भवतो मृगकर्किणी ॥" इति ॥ २ ॥ ३ ॥

**वारनक्षत्रवशेन संक्रांतिनामानि.**

| वाराः | नक्षत्राणि | नामानि | फलम् |
|---|---|---|---|
| रविः | पू. फा.पू.षा.पू.भा.भ.म. | घोरा | शूद्रान्सुखयेत् |
| चन्द्रः | अश्वि. पुष्य. अभि. ह. | ध्वांक्षी | वैश्यान् सुखयेत् |
| भौमः | स्वा. पुन. श्र. ध. श. | महोदरी | चौरान् सुखयेत् |
| बुधः | मृ. चि. अनु. रे. | मंदाकिनी | नृपतीन् सुखयेत् |
| गुरुः | उ. फा.उ.षा.उ.भा.रो. | मंदा | विप्रान् सुखयेत् |
| शुक्रः | विशा. कृत्ति. | मिश्रा | पशून् सुखयेत् |
| शनिः | आर्द्रा.आश्ले. ज्ये. मू. | राक्षसी | अंत्यजान् सुखयेत् |
| कालविभागेनफलम् । अह्नः | प्रथमभागे | | नृपतीन् हंति |
| | द्वितीयभागे | | द्विजान्हंति |
| | तृतीयभागे | | वैश्यान्हंति |
| रात्रेः | प्रथमयामे | | पिशाचान्हंति |
| | द्वितीययामे | | राक्षसान्हंति |
| | तृतीययामे | | नटान् हंति |
| | चतुर्थयामे | | पशुपालकान्हंति |
| | अस्तकाले प्रवेशे | | शूद्रान्हंति |
| | उदयकाले संक्रमणप्रवेशे | | पाखंडादीन्हंति |

षडशीतिविषुवविष्णुपदसंज्ञाः तासु-

**षडशीत्याननं चापनृयुक्कन्या झषे भवेत् ॥**
**तुलाजौ विषुवं विष्णुपदं सिंहालिगोघटे ॥ ४ ॥**

अथावशिष्टद्वादशसंक्रांतीनां षडशीतिमुखाः संज्ञा अनुष्टुभाह-षडशीत्येति । धनुर्मिथुनकन्यामीनेषु संक्रांतिश्चेत्तदा षडशीतिमुखानाम्नी संक्रांतिः । तुलामेषयोः संक्रांतिर्विषुवनाम्नी । सिंहवृश्चिकवृषकुम्भेषु संक्रांतिर्विष्णुपदाख्या । उक्तं च नारदेन-"स्थिरभेष्वर्कसंक्रांतिर्ज्ञेया विष्णुपदाह्वया । षडशीतिमुखं ज्ञेयं द्विस्वभावेषु राशिषु । तुलाधराजयोर्ज्ञेयं विषुवं सूर्यसंक्रमः ॥"

तासां संज्ञानां फलानि-तत्र स्नानदानादि च-

संज्ञाप्रयोजनं च-"याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः । षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः॥"इति ग्रंथकृदग्रे वक्ष्यति । अत्र मनुः-"संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः। तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि॥"इति ।"रविसंक्रमणे पुण्ये न स्नायाद्यदि मानवः । सप्तजन्मसु रोगी स्याद्दुःखभागी हि जायते ॥" इति शातातपोक्तेः । स्नानदानश्राद्धादिकृत्यस्य संक्रांतिकालेऽवश्यकर्त्तव्यता प्रतीयते । तत्र श्राद्धादेरनेकक्षणसाध्यत्वादनुष्ठानलक्षणमप्रामाण्यमापद्येत । संक्रांतिकालस्यातिसूक्ष्मत्वात् । तदुक्तं देवीपुराणे-"सुस्थे नरो सुखासीने यावत्स्पंदति लोचनम् । तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥ तस्माच्छततमो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्रभागो यः स कालो रविसंक्रमे ॥' इति ॥ देवलोपि-"संक्रांतिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ॥"इति । पिशितेक्षणैः मनुष्यैः। मुख्यकालानुपलब्धौ गौणकालेपि कार्यम् । वचनप्रामाण्यात् ॥ ४ ॥

तत्र गौणाः पुण्यकालाः-

**संक्रांतिकालादुभयत्र नाडिकाः पुण्या मताः**
**षोडश षोडशोष्णगोः ॥ निशीथतोर्वागपरत्र**
**संक्रमे पूर्वापराह्नांतिमपूर्वभागयोः ॥ ५ ॥**

स च गौणकालः प्रतिनिधिरित्यतो गौणकालमुपजातिकाछंदःपूर्वार्द्धेनाह-संक्रांतीति । गणितमार्गेण यः उष्णगोः सूर्यस्य संक्रांतिकाल आगतस्तत उभयत्र पूर्वतः परतश्च षोडश नाड्यः पुण्यसंपादकत्वात्पुण्या मताः संमताः । सूर्यसंक्रांतिसमयात् पूर्वं षोडश पश्चाच्च षोडश घटिकाः पुण्यकाल इति द्वात्रिंशद्घटिका भवंतीत्यर्थः। तदाह वसिष्ठः-"दिनपतिसंक्रमणात्प्राक्षोडशनाड्यश्च पुण्यकालः सः । परतः षोडशनाड्यः सर्वत्र स्नानदानकार्येषु" ब्रह्मसिद्धान्ते-"संक्रांतिः प्राक्परस्ताच्च सार्द्धाः षोडशनाडिकाः । त्रयस्त्रिंशत्संक्रमस्य पुण्याः सर्वस्य नाडिकाः ॥" अनेन-" संक्रांतेः पुण्यकालस्तु षोडशोभयतः कलाः " इति वाक्ये यैः पूर्वतः परतश्चाष्टावष्टौ घटिकाः पुण्यकालः इत्येवं षोडशेति व्याख्या-

तं तदपाकृतं भवति ॥ किंचायमर्थो वासनासिद्धःसूर्यसिद्धांतेऽभिहितः—"अर्कमानकलाःषष्ट्या गुणिता भुक्तिभाजिताः। तदर्द्धनाड्यः संक्रांतेरर्वाक्पुण्यं तथापरे ॥" सिद्धांतशिरोमणावपि-'षष्टिघ्नबिंबं ग्रहभुक्तिभक्तं संक्रांतिनाड्योऽखिलधर्मकृत्ये। रवेस्तु ताः पुण्यतमा ग्रहः स्वसंक्रांतिगो मिश्रफलं विधत्ते॥" इति। वासना चेयं—"यदि ग्रहस्पष्टगतितुल्यकलाभिरहोरात्रमानरूपाः षष्टिघटिका लभ्यंते तदा ग्रहबिंबकलाभिः किम्" इति। त्रैराशिकेन ग्रहे बिंबकलानां षष्टिर्गुणको ग्रहभुक्तिर्भाजको निष्पन्न इत्यर्थः। एवं सर्वग्रहाणामपि संक्रांतिः स्यात्। तदुक्तं सिद्धांत एव। अत्र तु विस्तरभयादनुपयुक्तत्वाच्च नास्माभिरलेखि॥ अत एवं त्रिंशदेकत्रिंशत्सार्द्धद्वात्रिंशत्त्रयस्त्रिंशदादिभेदेन स्मृतिषु पुण्यघटिकाभिधानं स्पष्टीकृत्याभेदसंभवाद्भिन्नम्। तदेवं सामान्यतः संक्रांतिषु द्वात्रिंशद्घटिकारूपः पुण्यकालो निर्णीतः। देवीपुराणे मन्दादिसंज्ञाभेदात्पुण्यकालविशेष एवोक्तः—"द्विचतुष्पंच सप्ताष्ट नव द्वादश चैव हि। क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥" इति। अस्यार्थः—मंदायामंतरालवर्त्तिघटिकाद्वयं,मंदाकिन्यां चतस्रो घटिकाः, ध्वांक्ष्यां पंच, घोरायां सप्त, महोदर्यामष्टौ, राक्षस्यां नव मिश्रायां दश। प्रागभिहितदेवीपुराणोक्तमंदादिसंज्ञावाक्याच्च नक्षत्रजनितसंज्ञासु मंदादिष्वयं विचारो न वारप्रयुक्तासु। अवचनात् ॥ एवं संक्रांतिषु पुण्यकालमभिधाय इदानीं रात्रिसंक्रांतौ विशेषमुपजात्युत्तरार्द्धेनाह—निशीथत इति। निशीथमर्धरात्रं तस्मादर्वाक्पूर्वत्र अपरत्र पश्चाच्च संक्रमे संक्रांतिकाले सति पूर्वापरयोरह्नोः क्रमेणांतिमपूर्वभागौ पुण्यौ स्याताम्। भागकाविति स्वार्थे कः। यद्यर्द्धरात्रात्प्राक् संक्रांतिस्तदा पूर्वदिनस्योत्तरार्द्धं पुण्यम्। यद्यर्द्धरात्रादुपरि संक्रांतिस्तदोत्तरदिनस्य पूर्वार्द्धमेव पुण्यमित्यर्थः। उक्तं च ब्रह्मसिद्धांते—"भवनांतं बिंबमध्यं रात्र्यर्द्धात्प्रागुदेति चेत्। स्नानदानादिमध्याह्नात्कुर्यादूर्ध्वं गते दिने॥ रात्र्यर्द्धादुपरि क्षेत्रं याति चेदन्यथार्यमा। अन्यगामिनि मध्याह्नात्पूर्वं स्नानादिपुण्यदम्॥"भवनराशिः बिंबमध्यं रवेः क्षेत्रं राशिः। वृद्धवसिष्ठोपि—"अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम्। रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः॥ अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥" इति। ननु रात्रौ दिनसंक्रांतौ रात्रावपि पुण्यकालसत्त्वात्तदा स्नानादि कुतो न क्रियते। यदर्थमयमुद्यते आरंभः। उच्यते "रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः" इति सुमंतुवाक्याद्रात्रौ स्नानाद्यधिकारासत्त्वात्। यत्तु नैमित्तिकं ग्रहणादिप्रयुक्तं—तद्भवत्येव। "नैमित्तिकं च कुर्वीत स्नानं दानं च रात्रिषु"इति सुमंतुवाक्यशेषात् ॥५॥

निशीथे संक्रमे पुण्यकालाः—

**पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदयास्तात् ॥**
**पूर्वं परस्ताद्यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये ॥ ६ ॥**

अर्द्धरात्रसमये संक्रमणे मकरकर्कटयोश्च विशेषमुपजातिकयाह—पूर्णे इति। "अर्द्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ" इत्यभिधानादर्द्धरात्रं निशीथशब्दवाच्यम्। तस्मिन्निशीथे पूर्णे रात्रिद्वितीयप्रहरांतिमपलावच्छिन्ने यदि संक्रमः स्यात्तदा प्रागपरादिनद्वयं पुण्यमुक्तम् ॥ उक्तं च वृद्धवसिष्ठेन—"पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा

मकरकर्कटौ" इति । ब्रह्मसिद्धांतेपि—"यद्यर्द्धरात्र एव स्यात्संपूर्णे संक्रमो रवेः । तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु ॥ "

## निशीथे अन्यदा वा मकरकर्कटयोर्विशेषः-

"मुक्त्वा मकरकर्कटौ" इत्युक्तं, तत्र मकरकर्कटयोस्तु कथमित्यत आह ॥ अथानन्तरमुदयास्तात्सूर्योदयास्ताच्च पूर्वं परस्ताच्च यदि याम्ये सौम्यायने कर्कमकरसंक्रांती भवतस्तदा पूर्वपरदिने पुण्ये स्याताम् । यदि सूर्योदयात्पूर्वं कर्कसंक्रमणं स्यात्तदा पूर्वदिन एव पुण्यकालो न परदिने । तदाह वृद्धगार्ग्यः—"यदास्तमयवेलायां मकरे याति भास्करः। प्रदोषे चार्द्धरात्रे वा स्नानं दानं परेहनि ॥ अर्द्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥" अस्तमयवेलाया इति पंचम्यंतं पदम् । वाशब्द इवार्थे । भविष्योत्तरपुराणेपि—"कार्मुकं तु परित्यज्य मृगं संक्रमते रविः । प्रदोषे चार्द्धरात्रे वा कुर्याद्दहनि पूर्वतः ॥" इति । प्रदोषलक्षणं स्कंदपुराणे—"त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तंगते सति" इति ॥ ६ ॥

## अर्धोदयास्तादितिवचनापवादः-संध्यालक्षणं तत्फलं च-

**संध्या त्रिनाडी प्रमितार्कबिंबादर्द्धोदितास्तादध ऊर्ध्वमत्र ॥**
**चेद्याम्यसौम्ये अयने क्रमात्स्युः पुण्यौ तदानीं परपूर्वघस्रौ॥७॥**

अथार्द्धोदयास्तादिति वचनस्याप्यपवादमिंद्रवज्राछंदसाह--सन्ध्येति । अर्द्धोदितादर्द्धास्ताच्चाध ऊर्ध्वं च क्रमात् त्रिघटिकास्ताभिः प्रमिता संध्या संध्याकालः स्यात् । अर्द्धोदितार्कबिंबात्पूर्वं त्रिघटी प्रमिता प्रातःसंध्या, तथार्द्धास्तादर्कबिंबादुपरि त्रिनाडीप्रमिता सायंसंध्येत्यर्थः । तदाह वराहः—" अर्द्धास्तमितानुदितात्सूर्यादस्पष्टभं नभो यावत् । तावान्संध्याकालश्चिह्नैरेतैः फलं ब्रूयात् ॥" इति ॥

## संध्ययोर्लक्षणान्तरे-

तत्प्रमाणमाह नारदः—"अर्द्धास्तमनसंध्या हि घटिकात्रयसम्मिता । तथैवार्द्धोदयात्प्रातर्घटिकात्रयसम्मितः ॥" इति । स्कंदपुराणेपि—"उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते । सायंसंध्या त्रिघटिका ह्यस्तादुपरि भास्वतः ॥ " इति । अत्र संध्यालक्षणे अर्द्धास्तमितानुदितवाक्यस्य स्कंदपुराणीयवाक्यस्य च व्रीहियववद्विकल्पः ॥

## संध्ययोरयने पुण्यकालाः-

संध्यालक्षणप्रयोजनमाह—अत्रेति । अत्र संध्यायां प्रातःसंध्यायां सायंसंध्यायां च क्रमाच्चेद्याम्यसौम्ये अयने दक्षिणोत्तरायणे तदानीं परपूर्वौ घस्रौ दिवसौ पुण्यौ । याम्यसौम्येअयने इत्यत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यत्वात् " प्लुतप्रगृह्या अचि" इति प्रकृतिभावः।यदि प्रातःसंध्यायां दक्षिणायनप्रवृत्तिस्तदा सूर्योदयानंतरं संपूर्णमहः पुण्यम् ।तथा यदि सायंसंध्यायामुत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं संपूर्णमहः पुण्यं स्यादित्यर्थः । यदाह नारदः- "सूर्यस्योदयसंध्यायां यदि याम्यायनं भवेत् । तदोदयादहः पुण्यं पूर्वाह्नः पूर्वतो यदि॥सूर्यास्तमनसंध्यायां यदि सौम्यायनं भवेत् । तदाहः पुण्यकालः स्यात्परतश्चोत्तरेहनि ॥" इति ॥

## कर्कसंक्रमे उदयसन्ध्यातः प्राङ्, मकरसंक्रमे सायंसन्ध्योत्तरं जाते-पुण्यकालाः-

अत्र यद्युदयसंध्यातः प्राक्कर्कसंक्रमस्तदा प्राग्दिन एव पुण्यकालो नोत्तरदिने । तथा यद्यस्तसंध्यामतिक्रम्य मकरसंक्रातिस्तदोत्तरदिन एव पुण्यकालो न तु प्राग्दिने इति निष्कृष्टोऽर्थः। अतो वृद्धगार्ग्यादिवाक्यनारदवाक्ययोः प्रदोषसंध्यापदोपादाने सामान्यविशेषभावोवगन्तव्यः ॥ यत्तु हेमाद्रौ स्कंदपुराणीयं वाक्यं-" धनुर्मीनावतिक्रम्य कन्यां च मिथुनं ततः । पूर्वापरविभागेन रात्रौ संक्रमते यदा ॥ दिनांते पंचनाड्यस्तु तदा पुण्यतमाः स्मृताः । उदये च तथा पंच दैवे पित्र्ये च कर्मणि ॥ "इति-तदपि संध्याविषयकमेवेत्याहुराभियुक्ताः॥ विषुवे तु यथाश्रुतमेवेति (?) ॥ अन्यदपि संध्यालक्षणप्रयोजनं ' प्राक्संध्यागार्जित ' इत्यादिषु वक्ष्यति ॥ ननु नायमयनपुण्यकालोक्त्युद्यमः सफलः, शास्त्रांतरविरुद्धत्वात् । तथाहि-" अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् । रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः ॥ अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरिक्रिया । ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥ " इति । वृद्धवसिष्ठेनायनव्यतिरिक्तेषु दशसु संक्रमेषु रात्रिगतेषु-"या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः " इति कश्यपोक्तसामान्यवाक्याद्रात्रावेवानुष्ठानं प्रसक्तम्-'अहः संक्रम' इत्यादिनाप्येतदेवानुष्ठानं विहितं-तस्यापि पर्युदासः क्रियते "मुक्त्वा मकरकर्कटौ" इति । तस्मान्मकरकर्कटयोः संक्रमणे रात्रावेवानुष्ठानं कर्त्तव्यमित्युक्तं भवति । अत एवाह याज्ञवल्क्यः-"राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च ॥" इति । वसिष्ठोपि-"सुतजनने संक्रांतावुपरागे चन्द्रसूर्ययोर्नियतम् । रात्रावपि कर्त्तव्यं स्नानं दानं विशेषतो नृणाम् ॥ " इति । सुमन्तुश्च-"ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च । श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते ॥" इति । एषु वाक्येषु सामान्यवाचिनोपि संक्रांतिपदस्य मकरकर्कटसंक्रांतिपरत्वमवसीयते । यत्तु-" रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः" इति निषेधः-स संक्रांत्यंतरे व्यवतिष्ठते । अतएवोक्तं कश्यपेन-" स्नानं दानं ग्रहणवत्सौम्ययाम्यायनद्वये " इति । तस्मादयनसंक्रमे रात्रौ सति तत्रैव स्नानदानाद्यनुष्ठातव्यमिति । अत्राहुः । शास्त्रद्वयेन तुल्यबलत्वाद्विकल्पसिद्धौ तत्तद्देशप्रसिद्धसपष्टाचारेण व्यवस्था द्रष्टव्या । तत्र गुर्जरास्तु कश्यपादिवाक्यमभ्युपेत्य रात्रावयनसंभवे सति रात्रावेव स्नानदानादिकं कुर्वतीत्यर्थः। दाक्षिणात्यास्तु वृद्धगार्ग्यादिवाक्यमंगीकृत्य दिवस एव स्नानदानादि कुर्वतीत्यलमतिप्रसंगेन ॥ यदातु दिने कर्कमकरसंक्रमस्तदा क्रमेण पूर्वोत्तरघटिकानियममाह वृद्धवसिष्ठः-"अतीतानागते पुण्ये द्वे तूदग्दाक्षिणायने । त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः ॥" इति । उत्तरायणमतीतं सत्पुण्यं कर्कटायनमागामि पुण्यम् । तत्र कर्कटसंक्रांतेः प्राक् त्रिंशद्घटिकाः पुण्याः, मकरे तूत्तरविंशतिघटिकाः पुण्या इत्यर्थः । अत्र वाक्ये यद्यपि दिनपदानुपादानम्, तथापि यदास्तमयवेलायामिति रात्रिपरविशेषवाक्यालोचनादिदं दिनपरं प्रतिभाति ॥ तथा सति केनापि हेतुना समीपघटीषु श्राद्धा-

द्यनुष्ठानासंभवे परमावधित्वेन त्रिंशदादयो घटिका अत्रानुज्ञायंते ॥ यदा तु प्रतिबंधस्तद " यायाः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः " इति कश्यपोक्तेः समीपघटिकास्वेव श्राद्धादि विधेयम् । ' सन्निहितपरित्यागे कारणाभावात् ' इतिन्यायाच्च ॥ ७ ॥

### विष्णुपदादिषु विशेषः पुण्यकाले-

## याम्यायने विष्णुपदे चाद्या मध्या तुलाजयोः ॥
## षडशीत्यानने सौम्ये परा नाड्योऽतिपुण्यदाः ॥ ८ ॥

पूर्वापराः षोडश घटिकाः पुण्या इति पूर्वं सामान्येनोक्तम् । इदानीं विष्णुपदादिषु संक्रमेषु विशेषमनुष्टुभाह-याम्येति । याम्यायने कर्कसंक्रांतौ तथा विष्णुपदे वृषसिंहवृश्चि-कर्कुंभसंक्रांतिषु सक्रांतिकालादाद्याः नाड्यः प्रथमाः षोडश घटिकाः अतिपुण्यदाः स्नानदा-नादावनंतफलदा ज्ञेयाः अग्रिमास्तु न तथेति निष्कृष्टोर्थः । तुलाजयोस्तुलामेषयोः मध्या उभयतः षोडश षोडश घटिकाः पुण्याः । अथवा षोडशैव घटिकाः पुण्याः ॥ षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रांतिषु तथा सौम्ये मकरसंक्रांतौ सक्रांतिकालात्परा अग्रिमाः षोडश घटिकाः अतिपुण्यदाः प्रथमास्तु न तथेति निष्कृष्टोर्थः ॥ यदाह श्रीपतिः-" याम्यायने विष्णुपदे तथादौ दानाद्यनंतं विषुवे च मध्ये । वदंत्यतीते षडशीतिवक्त्रे महर्षयः खल्वयने च सौम्ये ॥ " तत्र कर्के प्रागेव मकरसंक्रांतौ पश्चादेव पुण्यकाल इति तु प्राङ्निरणायि । विष्णु-पदे तु अग्रिमादिमघटीनां पुण्यकाले तरतमभावः । पुण्यायां विष्णुपद्यां च ' प्राक्पश्चादपि षोडश' इति वृद्धवसिष्ठोक्तेः । विषुवे तु सामान्यनिर्णय एवेति केचित्।दीपिकाटीकाकारस्त्वे-वमाह-" मेषे तुलायां च संक्रांतिकालात्पूर्वमष्टौ घटिकाःपरतश्चाष्टौ घटिकाःपुण्यकालाः"इति॥ युक्तं चैतत् । विषुवे च मध्यपदोपादानान्मध्ये षोडशघटिकाः पुण्याः इत्युच्यते । कस्मात्का-लान्मध्य इत्यपेक्षायां संक्रांतिकालादेवेत्यतः पूर्वमष्टौ पश्चाच्चाष्टौ घटिकाः पुण्या इत्यर्थः । यदुक्तं बृहस्पतिना-"वर्तमाने तुलामेषे नाड्यस्तूभयतो दश" इति । तुलामेषसंक्रांतिकाला-त्प्राक् पश्चाच्च पंचपंचघट्यः पुण्या इति ॥ यदप्युक्तमाद्यंतसापेक्षत्वान्मध्यशब्दस्य गणिता-गतपुण्यकालघटिकानां मध्ये त्रिभागः स्थूलदृशा दशघटिकात्मको भवतीति । ' या याः सन्निहिता नाड्यः' इति कश्यपोक्तेः ॥ षडशीतिमुखेप्याद्याग्रिमघटीनां पुण्यकाले तरतम-भावः । यदपि " षडशीत्यां व्यतीतायां षष्टिस्तुल्यास्तु नाडिकाः " इति वृद्धवसिष्ठवाक्यम् तदपि प्राग्घटीषु प्रतिबंधवशात् श्राद्धादेरसंभवे सत्यंतिमघटीषु श्राद्धादिक्रियाभ्यनुज्ञायाः परमावधिकालेयत्तार्थम् ॥ इदं सर्वं दिनसंक्रांतिविषयं वेदितव्यम् । " अह्नि संक्रमणे पुण्य-महः कृत्स्नं प्रकीर्तितम् " इति सामान्यवाक्यस्य सौम्यायने विष्णुपदे उक्तस्य च विशेष-विषयता ॥ अतएव "रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः " इति रात्रिपराविशेषस्य सत्त्वाच्च ॥ एवं निर्णीते पुण्यकालो स्नानदानाद्यवश्यं विधेयमिति फलितोऽर्थः॥

## उक्तपुण्यकाले स्नानदानाद्यकरणे दोषः–

तत्र स्नानदानाद्यकुर्वतश्च प्रत्यवायमाह वसिष्ठः–" इति संचिंत्य विनिर्णयमादेष्टव्यं सदैव दैवज्ञैः । विषुवत्ययने ग्रहणे संक्रांतौ पुण्यदिवसेपि ॥ पितृतृप्तिं न करोति हि दत्त्वा शापं व्रजति तस्य पिता । आगतगतसमयेपि च करोति यद्दानजपहोमाद्यम् ॥ ऊषरवापित-बीजं यद्वत्तद्वच्च निष्फलं भवति ॥" अयने अयनप्रवृत्त्याख्ये चलसंक्रमणस्य आगमसमये निर्णीते पुण्यकालातिक्रमसमये स्नानादि निष्फलमित्यर्थः ॥

## संक्रान्तिषु स्नानदानादेः फलम्–

संक्रांतिषु स्नानदानादेः फलमाह भारद्वाजः–" षडशीत्यां तु यद्दानं विषुवद्वितये तथा । दृश्यते सागरस्यांतस्तस्यांतो नैव दृश्यते ॥" वृद्धवसिष्ठोपि–" अयने कोटिपुण्यं च सहस्रं विषुवे फलम् । षडशीत्यां सहस्रं तु फलं विष्णुपदेषु च ॥" इत्यलमतिप्रसंगेन ॥ इति सूर्य-संक्रांतिपुण्यकालादिनिर्णयः ॥

## चन्द्रादिसंक्रमे पुण्यकालनिर्णयः–

नायं केवलं सूर्यसंक्रमण एव पुण्यकालः किंतु चंद्रादीनां ग्रहाणां नक्षत्रसंक्रमे राशिसंक्रमे च पुण्यकालो भवति ॥ सोपि सोपपत्तिकः प्रसंगतः प्रोच्यते अस्माभिः । यदाह जैमिनिः– "नक्षत्रराश्यो रविसंक्रमे स्युर्वाक्परत्रापि रसेंदुनाड्यः । पुण्यस्तथेंदोस्त्रिधरापलैर्युग्युगैकनाडी मुनिभिः शुभोक्ता ॥ १ ॥ नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि । अब्ध्यब्धिनाड्यः पलसप्तयुक्ता गुरौ च शुक्रे सपलाश्चतस्रः ॥ २ ॥ द्विनागनाड्यः पलस-प्रयुक्ताः शनैश्चरस्याभिहिताः सुपुण्याः । आद्यंतमध्ये जपदानहोमं कुर्वन्नवाप्नोति सुरेंद्र-धाम ॥ ३ ॥" अस्यार्थः ॥ सूर्यस्य नक्षत्रसंक्रमे राशिसंक्रमे च प्राक् परतश्च षोडशघटिकाः पुण्याः । एवं चंद्रस्यैकघटी त्रयोदश पलानि । भौमस्य चतस्रो घटिका एकं पलम् । बुधस्य तिस्रो घटिकाश्चतुर्दश पलानि । गुरोश्चतुश्चत्वारिंशद्घटिकाः सप्त पलानि । शुक्रस्य च-तस्रो घटिकाः पलमेकम् । शनेर्द्व्यशीतिघटिकाः सप्त पलानि चोभयतः पुण्यकाल इति । अत्रोपपत्तिः–"भानोर्गतिः स्वदशभागयुताद्धि तावद्बिंबं विधोस्त्रिगुणिता युगशैलभक्ता ७४ । तिथ्यद्रि ७१५ हीनशशिभुक्तिरिषुद्वि २५ भक्ता नंदाक्षि २९ युग्भवति वा विधुबिंबमेवम् ॥" इति सिद्धांतशिरोमण्युक्तप्रकारेण रविचंद्रयोर्मानकला आनेयाः ॥ "व्यंग्नीषवः सचरणा ऋतवस्त्रिभागयुक्ताद्रयो नव च सत्रिलवेषवश्च । स्युर्मध्यमास्तनुकलाः क्षितिजादिकानां त्रिज्या-शुकर्णविवरेण पृथग्विनिघ्नाः॥" इति तत्रैवोक्ताः भौमादीनां मानकलाः। तत्र क्रमेण मानकलाः "षष्टिघ्नबिंबं ग्रहभुक्तिभक्तं संक्रांतिनाड्योऽखिलधर्मकृत्ये । रवेस्तु ताः पुण्यतमा ग्रहः स्वसं-क्रांतिगो मिश्रफलं विधत्ते ॥ " इति भास्करोक्तदिशा संस्कृताः संक्रांतिनाड्यः स्युः ॥

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ग्रहाः |
|---|---|---|---|---|---|---|---|
| १६ | १ | ४ | ३ | ४४ | ४ | ८२ | घट्य उभयतः |
| ० | १३ | १ | १४ | ७ | १ | ७ | पलान्युभयतः |

## ग्रहभुक्तिकलाः–

तत्र ग्रहभुक्तयस्तेनैवोक्ताः–"नंदाक्षा भुजगा रवेः शशिगतिः स्वांकाद्रयोक्षाग्नयस्तुंगस्यां-

गकलाः कुवेदविकलाः पातस्य रामाभवाः । माहेयस्य महीगुणा रसकराङ्गस्येषु सिद्धा रदा पंचेज्यस्य सितस्य षण्णवमिता अष्टौ शनेर्द्वे कले ॥" इति । बुधशुक्रयोस्तु संक्रांतिघटिकानयने सूर्यगतिरेव हारः कल्प्यः । तद्गतितुल्यत्वात्तयोः । वासनाभाष्ये हि-"बुधशुक्रौ तु रवेरासन्नावेव कदाचिदग्रतः कदाचित्पृष्ठतस्तस्यानुचराविव सदा व्रजंतौ दृश्येते ॥ ततस्तयोरपि रविभगणतुल्या एव भगणा इत्युपपन्नम् " इति भास्करेणाभिहितत्वात् पठ्यमानानुगतिस्तच्छीघ्रयोः शीघ्रफलानयनार्थं वासनासिद्धजीर्णैः कल्पिता ॥ तदेवं ग्रहगतितः इमाल्लिप्रकारेण साधिताः पुण्यकालघटिकाः । सूर्यस्य यथा त्रिंशद्घटिका एवं चंद्रस्य द्वे घटिके षड्विंशतिपलानि भौमस्य नवघटिकाश्चत्वारिंशत् पलानि बुधस्य षट् घटिका विंशतिः पलानि गुरोरष्टाशीतिर्घटिका एवं शुक्रस्य नव घटिका अष्टौ पलानि शनेः षष्ट्यधिकं शतं घटिकाः पूर्वापरकालौ मिलित्वा पुण्यकाल इत्यर्थः । यथा अत्र वासना प्रागुक्ता । एता अर्द्धा नाड्यः प्राक्परतश्च पुण्याः । अत्र गणितागतघटीपलेषु लिखितजैमिनिवाक्ये च क्वचित्किंचित्पलभेदो घटिकाभेदश्च संगतिस्पष्टकृतिवशतः ॥ युक्तं चैतत् । आकाशे हि वेधादिना स्पष्टा एव खगा दृश्यंते न मध्यमाः । " दिनद्वयस्पष्टखगांतरालकालः स्फुटस्तु स्फुटभुक्तिबिंबैः " इति स्पष्टगत्यैव बिंबसंक्रांतिघट्यानयनमुचितम् । उक्तं च वार्केण-कुजादिकानामपि बिम्बलिप्ताः षष्ट्या गुणाः स्वस्वजवेन भक्ताः । नाड्यादिकः संक्रमणांतरालकालः स्फुटस्तु स्फुटभुक्तिबिम्बैः ॥" इति । अपिशब्दात्सूर्याचन्द्रमसोर्ग्रहणम् ॥ तथा सति मध्यमापेक्षया स्पष्टगतिबिंबयोरुपचयापचयाभ्यां साम्यैस्तत्तद्घटिकानामप्युपचयापचयाः

| सू. | च. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| ‍अ | अ | ४ | ६ | ७ | ८ | ५ |
| ३१ | १ | ५ | ८ | २० | २० | २० |

| सू. | चं. | मं. | बु. | गु. | शु | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| ५८ | १८० | ३१ | ५८ | ५ | ५८ | २ | हा. |
| ८ | ३५ | ३६ | ८ | ० | ० | ८ | कला. |

| र. | चं. | मं. | बु. | गु. | शु. | श. | र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | १ | ८ | ३ | ४४ | ४ | ८० | ३३ | २ | ८ | ६ | ८८ | ८ | १६ |
| ३० | १३ | ३२ | १० | २४ | ३४ | ० | ११ | २६ | ४ | २० | ७ | ८ | ० |

साम्यातिक्रमेणापतंति । तेषां चानियतत्वात्पद्ये उपनिबंधायोगात् जीर्णैर्नियतमध्यगत्या सूर्यादीनां ग्रहाणां पुण्यकालघटीरानीयोपनिबंधः कृतः ।

## सर्वग्रहसंक्रान्तिषु पुण्यकालनिर्णयसंग्रहः-मतान्तरखण्डनं च -

अत्र मत्कृतं पद्यं-"नाड्यो रामगुणा ३३ रवेरथ विधोः पद्वो: पलैर्युग्मद्वयं २६ भौमस्याब्धिपलैर्युता नव४९विदो युक्ता पलैः खाश्विभिः२०। षण्नाड्योऽष्टगजा ८८गुरोरथ भृगोर्नंदाः ९ पलैरष्टभिः पुण्याः स्युः खनृपाः शने१६०रुभयतो राश्यृक्षतः संक्रमे । " अतो यो जैमिनिवाक्ये-'सार्धाश्चतस्रः पलसप्तयुक्ता गुरोः ' इति पाठो माधवादिभिरपाठि, तथा हेमाद्रिणापि 'द्विनागनाड्यः' इति पदे नागा अष्टौ द्विरावृत्ता नागा द्विनागाः षोडशनाडिकाः शनैश्चरसंक्रांतौ पुण्यकाल इति यत् व्याख्यातं-तदुभयमपाकृतं भवति । तथा च रामचंद्राचार्या

अपि कालनिर्णयदीपिकायां हेमाद्र्यादिमूलकममुमर्थं स्वपद्येनोपानिबध्नंति । अतश्चित्योक्तयो ज्ञेयाः ॥ तस्मात्सर्वग्रहाणां राशिनक्षत्रयोः संक्रांतिषु पुण्यकालोऽप्यस्ति ॥ भास्करोपि-'रवेस्तु ताः पुण्यतमा' इति वदंश्चंद्रादिसंक्रांतिषु नाड्यः पुण्या इत्यसूचयत् । "अतिशायने तमबिष्ठनौ" इति पाणिनिवचनात् । ग्रहः स्वसंक्रांतिफलं विधत्ते इति ( ३ ) सूर्यादिसंक्रांतिसाधारणम् । तत्र सकलसंक्रांतिषु दिनरात्रिविष्णुपदादिभेदेन सूर्यसंक्रमवन्निर्णयो ध्येयः । एतत्संक्रांतिमान्यता हि गुर्जरदेशेऽस्तीत्यलं प्रसक्तानुप्रसक्तेन ॥ इति सकलग्रहसंक्रांतिपुण्यकालनिर्णयः ॥ ८ ॥

## रविसाधनांशसंक्रान्तिषु पुण्यकालाः-

**तथायनांशाः खरसाहताश्च स्पष्टार्कगत्या विहृता दिनाद्यैः ॥**
**मेषादितः प्राक्चलसंक्रमाः स्युर्दाने जपादौ बहुपुण्यदास्ते ॥९॥**

अथ रविनिरयनांशसंक्रांतिकालमभिधायेदानीं सायनांशसंक्रांतिषु पुण्यकालमुपजातिकयाह-तथायनांशा इति ॥ यथा राशिसंक्रमाः बहुपुण्यदास्तथा चलसंक्रमा अपीति व्यवहितस्तथाशब्दः अयनांशाः षष्ट्या गुण्याः स्पष्टसूर्यगत्या विहृता लब्धैः दिनाद्यैः दिनघटीपलैः मेषादिद्वादशराशिसंक्रांतिकालात्प्राक् चलसंक्रमाः स्युः । ते चलसंक्रमा दाने ब्राह्मणेभ्यो दक्षिणादाने जपादौ जपश्राद्धहोमादौ बहुपुण्यदा भवन्ति । तदुक्तं वसिष्ठसिद्धांते-"चलसंस्कृततिग्मांशोः संक्रमो यः सुसंक्रमः । अजागलस्तन इव राशिसंक्रांतिरुच्यते ॥" इति ॥ पुलस्त्यः-"अयनांशयु ( संस्कृ ) तो भानुर्गोले चरति सर्वदा । अमुख्या राशिसंक्रांतिस्तुल्यकालविधिस्तयोः॥स्नानदानजपश्राद्धव्रतहोमादिकर्मभिः । सुकृतं चलसंक्रांतावक्षयं पुरुषोऽश्नुते॥"इति ॥ जाबालिरपि-"संक्रांतिषु यथाकालस्तदीयेप्ययने तथा । अयने विंशतिः पूर्वा मकरे विंशतिः परा ॥"इति अयने चलसंक्रमे।अत्र चलसंक्रमाख्ये मकरायणे पूर्वा विंशतिघटिकाः पुण्यकालः मकरसंक्रांतौ तु परा विंशतिघटिकाः पुण्यकालः । मकरव्यतिरिक्तैकादशचलसंक्रमेषु तत्तसंक्रमवत्पुण्यकालो ज्ञेय इत्यर्थ इति माधवो व्याख्यत् ॥ अयनांशानयनं तु सूर्यसिद्धांते-"त्रिंशत्कृत्वो युगे भानां चक्रं प्राक्परिलम्बते । तद्गुणाद्भूदिनैर्भक्ताद्द्युगुणाद्यदवाप्यते ॥ तद्दोस्त्रिघ्ना दशाप्तांशा विज्ञेया अयनेऽभिधा । तत्संस्कृताद्ग्रहात्क्रांतिच्छायाचलदलादिकम् ॥ स्फुटं तत्तुल्यतां गच्छेदयने विषुवद्वये । प्राक्चक्रं चलितं हीने छायार्कात्करणागते ॥ अंतरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके ॥" इति च । सांप्रतं सार्धषोडशायनांशा धनं गताः संति । छायार्कात्करणगतस्य सूर्यस्याल्पत्वात् । अतएव प्रागित्युक्तं ग्रन्थकर्त्रा ॥ अत्र प्रागित्युपलक्षणम् । कदाचित्संक्रांतिकालात्परतोऽप्ययनांशवशेन च संक्रमसंभवात् । तथा च 'पश्चाच्छेषैस्तथाधिक' इत्युक्तम् । वेदांगज्योतिषेपि-"प्रपद्येते श्रविष्ठादौ सूर्याचन्द्रमसावुदक् । सार्पार्द्धे दक्षिणार्कस्तु माघश्रावणयोःसदा ॥"इति ॥ तत्र मेषादिसंक्रांतिकालस्य सौरैः सावनघटिकात्मकस्य अयनांशानां च सौम्यायनतुल्यजातीयत्वाद्योगवियोगौ न स्तः इत्ययनांशादीनां करणायानुपातः ॥ यदि सूर्यस्पष्टगतिकलाभिः षष्टिघटिकात्मकं दिनं लभ्यते-तदायनांशैः किमिति । तत्रायनांशानां षाष्टिर्गुणकः सूर्यस्पष्टगतिर्भाजक इति उपपन्नम् । लब्धानि सौरसावनदिनानि घटीपलानि । अतस्तुल्यजात्योर्योगो वियोगो वा कार्यः ॥

## चलराशिसंक्रमव्यवस्था–

ननु चैकस्यैव सूर्यस्यैकास्मिन्नेव राशौ चलसंक्रमणं राशिसंक्रमणं च कथं भवति। कुतः। स्वकक्षास्थितांशभागस्य द्वादशधा विभक्तस्य राशिरिति संज्ञा। तत्र रविमंडलस्य तत्तद्राश्यादिप्रदेशस्य स्पर्शो राशिसंक्रमणमित्युच्यते ॥ तस्मिन्नेव राशौ चलसंक्रमस्तु कीदृश इति चेत्। शृणु। ईश्वरेच्छालोकादृष्टवशतस्तद्राश्यादिभागस्य सूर्यतेजःसम्पर्कश्चलसंक्रमो मण्डलमध्यसंपर्कश्च राशिसंक्रम इति विवेकः ॥ तद्यथा रथ्यां प्राक्पश्चाच्चानीयमानस्य दीपस्याग्रे दीपप्रभा यस्मिन् प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणांतरे दीपोपि गच्छति एवं सर्वेषामपि ग्रहाणां चलसंक्रमा द्रष्टव्याः ॥ एवं चलसंक्रमस्य मुख्यत्वमुक्तं शिरोमणिसिद्धांते–" दिनरात्रिप्रमाणानां निर्णयो नभसंक्रमात्। यतः सकलकर्माणि पुण्यतश्चलसंक्रमः ॥"

## सायनसंक्रमस्य सर्वत्र नोपयोगः–

नन्वेवमयनसंक्रमस्य मुख्यत्वे तेन मानेन पञ्चांगगणना स्यात्। चन्द्रादीनामप्ययनचलनदर्शनात् ॥ न च सायनांशाभ्यां निरयणांशाभ्यां वा सूर्यचन्द्रमोभ्यां तिथेस्तुल्यत्वादस्तु पंचांगगणनेति वाच्यम् ॥ अश्विन्यादिभानां विष्कंभादियोगानां च विसंवादात् ॥ किं च सायनसंक्रमरहितस्य चांद्रमासस्याधिमासत्वव्यवहारप्रसंगः। तथा तादृक्संक्रांतिद्वययुतस्य क्षयमासत्वव्यवहारप्रसंगः। विवाहादौ च सौरमासगणनाप्यनेनापि मानेन स्यादिति चेत् ॥ उच्यते ॥ सायनसंक्रमस्तु पुण्यकालार्थमेवोपयुज्यते न सर्वत्र ॥ स्नानदानजपश्राद्ध इति परिगणितविषयकपुलस्त्यवाक्यालोचनात्। तेन पंचांगगणना न्यूनाधिमाससौरमासादिकमप्यनेन मानेन भवति। तथा सति यात्रादिमुहूर्तेषु भरणीव्यतीपातादिदुष्टयोगानां गुरुपुष्यादिशुभयोगानां च व्यवहारो निरयणेनैवोपपद्यते न सायनेन। सायनगणनया सर्वथा ग्रहणविसंवादः। तद्यथा षोडशोत्तरपंचदश १५१६ मिते शालिवाहनशककाले वैशाखशुक्लपूर्णिमायां पंचत्रिंशन्नाडीमितायामिंदूपराग उपलब्धः। तत्र चन्द्रः ६। २६। २८। राहुः ११। ५८। अत्र निरयणगणनया शरांगुलानि १२ मानैक्यखंडं २० ग्रासांगुलानि ८। यद्यत्रायनांशाश्चन्द्रे योजयित्वा शर आनीयेत तदा शरांगुलादि ३० अस्य मानैक्यखण्डाधिक्याद्ग्रहणं नायातीति सर्वजनप्रत्यक्षविसंवादः। सायनगणनयात्वयोग्येपि काले ग्रहणोपलंभः स्यात्। अन्यच्च स्पष्टीकरणेन साधितो भौमादिर्ग्रहो यन्नक्षत्रे गणितेनागतस्तन्नक्षत्रे समीप एवोपलभ्यते प्रत्यक्षतः। सायनत्वे हि ग्रहः कदाचिदेकनक्षत्रे द्वयांतरे वा प्रलीयते। सूर्यचन्द्रयोस्तु तेजोबाहुल्यान्नक्षत्रतेजःपरिभवात्तन्नक्षत्रसन्निधौ उपलंभाभावो यद्यपि। तथापि कदाचित्क्षीणचन्द्रस्याप्युपलंभो दृश्यते। एवं संहितासु मीनशनैश्चरादिविषयकदुष्टफलानि चैकराश्यवस्थितग्रहयोगफलानि च निरयणेनैव। तथा वृद्धवसिष्ठसंहितायां–"षट्पौष्णभाद्रादशरौद्रधिष्ण्यासुराधिसद्मानि नवक्रमेण। पूर्वार्धमध्यापरभात्तदूर्ध्वं भुंक्तेखिलव्योमचरास्तथैव ॥" इति ॥ ग्रहाणां पूर्वार्द्धमध्यापरभागयोग्यत्वमपि निरयणेनैवोपलभ्यते ॥ तस्मान्निरयणगणनयैव सर्वोपि व्यवहारो युक्तः॥ ननु सायनगणना दत्ततिलांजलिरिति चेत् ॥ उच्यते॥ सायनगणना हि नियतविषया। उक्तं च–" अयनांशाः प्रदातव्या लग्ने क्रांतौ चरागमे। सत्रिभे वित्रिभे पाते तथा दृक्कर्मपातयोः ॥ इति सूर्यसिद्धान्तेपि–" तत्संस्कृताद्ग्रहात्क्रांतिच्छायाचरदलादिकम्। स्फुटं तत्तुल्यतां गच्छेदयने विषुवद्वये ॥ इति ॥ आदिशब्देन

लग्नम् । अतोयनांशानां वासनासिद्धानियतविषयत्वात् द्वयोरपि मानयोरसंकीर्णो व्यवहार इति सर्वमनाकुलम् ॥

## उभयविधसंक्रमेपि पुण्यकालः–

पुण्यकालस्तूभयविधसंक्रमेपि ज्ञेयः । पूर्वलिखितवसिष्ठादिवाक्यस्वरसात् ॥ यत्तु वसिष्ठसिद्धांते–"पुण्यदां राशिसंक्रांतिं केचिदाहुर्मनीषिणः । नैतन्मम मतं यस्मान्न स्फुटोत्क्रांतिकक्षया ॥" इति । तदयनसंक्रमपुण्यकालातिस्तुतिपरं न तु राशिसंक्रांतिपुण्यकालनिराकरणार्थम् । अन्यथा–"दिनपतिसंक्रमणात्प्राक्षोडश नाड्यश्च पुण्यकालः सः । परतः षोडशनाड्यः सर्वत्र स्नानदानकार्येषु ॥" इति स्वसंहितोक्तराशिसंक्रमणपुण्यकालप्रतिपादकवचनस्यानेन सह विरोधो दुष्परिहरः स्यादित्यलमतिप्रसंगेन ॥ ९ ॥

## जघन्यबृहत्समसंज्ञाः–नक्षत्राणाम्–

**समं मृदुक्षिप्रवसुश्रवोग्निमघात्रिपूर्वास्रपमं बृहत्स्यात् ॥**
**ध्रुवद्विदैवादितिभं जघन्यं सार्पांबुपार्द्रानिलशाक्रयाम्यम् ॥१०॥**

अथ संक्रांत्युपयोगित्वाज्जघन्यबृहत्समनक्षत्राण्युपजातिकयाह–सममिति ॥ मृदूनि मृगरेवत्यनुराधाचित्राः । क्षिप्राणि अश्विनीपुष्यहस्ताः । वसुर्धनिष्ठा । श्रवः श्रवणम् । अग्निः कृत्तिका । मघा प्रसिद्धा । त्रिपूर्वाः पूर्वाफाल्गुनीपूर्वाषाढापूर्वाभाद्रपदाः । अस्रपो राक्षसः । " राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः । " इत्यमरः । तस्य भं मूलम् ॥ अत्र समाहारद्वंद्वः ॥ एतानि पंचदशभानि–समसंज्ञानि ॥ ध्रुवाणि रोहिणी त्र्युत्तरा । द्विदैवं विशाखा । अदितिभं पुनर्वसुः । एतानि षड्भानि–बृहत्संज्ञानि ॥ सार्पमाश्लेषा । अंबुपः शततारका । आर्द्रा प्रसिद्धा । अनिलः स्वाती । शाक्रं ज्येष्ठा । याम्यं भरणी । एतानि षड्भानि जघन्यसंज्ञानि ॥ उक्तं च नारदेन–"तारा जघन्याः सार्पेंद्रा वातार्द्रांतकतोयपाः । ध्रुवादितिद्विदैवत्यं बृहत्ताराः पराः समाः ॥" इति ॥ वसिष्ठेनापि–"जघन्यधिष्ण्यानि जलेशसर्प्परौद्रेंद्रयाम्यानिलदैवतानि । अध्यर्द्धधिष्ण्यान्यदितिद्विदैवं स्थिराणि शेषर्क्षसमाह्वयानि ॥" इति ॥ १० ॥

## समबृहज्जघन्यसंज्ञानां महर्घसमर्घसाम्यफलानि–

**जघन्यभे संक्रमणे मुहूर्ताः शरेंदवो १५ बाणकृता ४५ बृहत्सु ॥**
**खराम ३० संख्याः समभे महर्घं समर्घसाम्यं विधुदर्शनेपि ॥ ११ ॥**

अथ संज्ञाप्रयोजनमुपेंद्रवज्रयाह–जघन्यभ इति ॥ जघन्यनक्षत्रे यदि संक्रमणं तदा शरेंदवः पंचदश मुहूर्ता ज्ञेयाः । बृहन्नक्षत्रे संक्रमणे सति बाणकृताः पंचचत्वारिंशन्मुहूर्त्ता ज्ञेयाः । समनक्षत्रे संक्रमणे सति खरामसंख्यास्त्रिंशन्मुहूर्त्ता ज्ञेयाः । उक्तं च नारदेन–"तासां प्रमाणं घटिकास्त्रिंशन्नवतिषष्टयः " इति ॥ अतएव त्रिंशद्घटिकाः पंचदश मुहूर्त्ता नवतिघटिकाः पंचचत्वारिंशन्मुहूर्त्ताः षष्टिघटिकास्त्रिंशन्मुहूर्त्ताः स्युरित्यर्थः । अस्य फलमुच्यते ॥ महर्घं समर्घसाम्यमिति ॥ यदा पंचदशमुहूर्त्ता संक्रांतिस्तदा सर्वमन्नं महर्घं दुर्लभं भवति । यदा पंचचत्वारिंशन्मुहूर्त्ता संक्रांतिस्तदा समर्घं सुलभमन्नम् ॥ यदा तु त्रिंशन्मुहूर्त्ता संक्रांतिस्तदा साम्यं न महर्घं समर्घमपि न किंतु

यथास्थितमित्यर्थः ॥ इदं तु मुहूर्त्तानां न्यूनाधिकसमभावाज्जायते ॥ उक्तं च संवित्प्रकाशे-" मुहूर्त्ताः पंचभूतुल्या जघन्यानां पराभिधाः । बृहतां पंचवेदास्ते समानां ते खवह्नयः ॥ पंचेन्दुषु मुहूर्त्तेषु दुर्भिक्षं रविसंक्रमे । पंचाब्धिषु समर्घं स्यात्त्रिंशत्सु समता मता ॥ " इति । विधुदर्शनेपीति । चंद्रदर्शनेप्येवमेव फलं वाच्यम् ॥ अयमर्थः ॥ यदि जघन्यनक्षत्रे चंद्रोदयस्तदा महर्घम् । बृहन्नक्षत्रे चंद्रोदयस्तदा समर्घम् । समनक्षत्रे चंद्रोदयस्तदा साम्यसन्नस्य ॥ उक्तं च रत्नमालायां-" बृहत्सु धान्यं कुरुते समर्घं जघन्यधिष्ण्याभ्युदितो महर्घम् । समेषु धिष्ण्येषु समं हिमांशुर्वदंत्यसंदिग्धमिदं महांतः ॥ " वसिष्ठोपि-" ज्ञात्वैवमेवं मणिजीवधातुमूलोर्णकर्पूररसादिकानाम् । अर्घं वदेज्ज्यौतिषिकः प्रजानां समर्घवस्तूत्तमसंग्रहार्थम् ॥ " इति ॥ ११ ॥

### कर्कसङ्क्रान्तावब्दाविंशोपकाः-

**अर्कादिवारे संक्रांतौ कर्कस्याब्दविंशोपकाः ॥**
**दिशो नखा गजाः सूर्या धृत्योष्टादशसायकाः ॥ १२ ॥**

अथ प्रसंगात्कर्कसंक्रांतावब्दविंशोपकाननुष्टुभाह-अर्कादिवारे इति । कर्कसंक्रांतौ सूर्यादिवारे सत्यामेते वक्ष्यमाणा अब्दविंशोपका ज्ञेयाः । तद्यथा रविवारे दश, सोमवारे विंशतिः, भौमेष्टौ, बुधे द्वादश, गुरौ धृत्योष्टादश, शुक्रेप्यष्टादश, शनिवारे कर्कसंक्रांतौ सत्यामब्दविंशोपकाः सायकाः पंचेत्यर्थः ॥ १२ ॥

### अवस्थाविशेषेण रविसंक्रान्तिषु फलानि-

**स्यात्तैतिले नागचतुष्पदे रविःसुप्तो निविष्टस्तु गरादिपंचके ॥**
**किंस्तुघ्न ऊर्ध्वः शकुनौ सकौलवेऽनिष्टः समः श्रेष्ठ इहार्घवर्षणे १३**

अथ कीदृशस्य रवेः संक्रमो जातस्तत्फलमिंद्रवज्रयाह-स्यादिति । करणानि व्याख्याने मयोक्तानि । तत्र रविः तैतिलनागचतुष्पदाख्यकरणेषु सुप्तः सन् संक्रमितः स्यात् । गरादिपंचके गरवणिजभद्राबवबालवाख्यकरणेषु निविष्टः उपविष्टः सन् संक्रमितः स्यात् । किंस्तुघ्नशकुनिकौलवाख्यकरणेषु ऊर्ध्वमूर्ध्वस्थितः सन् संक्रमितः स्यात् । इह करणाधिकरणसंक्रांतौ रविः अर्घवर्षणे अर्घे मूल्ये वर्षणे वृष्टौ अनयोरुपलक्षत्वाद्धान्येपि क्रमादनिष्टः समः श्रेष्ठश्च स्यात् । अयमर्थः-सुप्तरविसंक्रमोर्घवर्षणधान्येष्वनिष्टः महर्घवृष्ट्यभावाद्धान्याभावकारको भवति । एवं निविष्टरविसंक्रमोऽर्घवर्षणधान्येष्वनिष्टः समो न शुभो नाप्यशुभः । तथोर्ध्वरविसंक्रमोर्घवर्षणधान्येषु श्रेष्ठः ॥ समर्घवृष्टिबाहुल्यधान्यबाहुल्यकारक इति ॥ उक्तं च नारदेन-"निविष्टो वणिजे विष्टयां बालवे च बवे गरे । कौलवे शकुनौ भानुः किंस्तुघ्ने चोर्ध्वसंस्थितः ॥ चतुष्पात्तैतिले नागे सुप्तः क्रांतिं करोति सः । धान्यार्घवृष्टिषु समं श्रेष्ठं हीनं भवेत्क्रमात् ॥ " ॥ क्रांतिं संक्रांतिम् । रत्नमालायामपि-"चतुष्पदे तैतिलनागयोश्च सुप्ते रविः संक्रमणं करोति । विष्टयां बवाख्ये च गराह्वये च सबालवाख्ये वणिजे निविष्टः ॥ किंस्तुघ्ननाम्नि शकुनावपि कौलवाख्ये चोर्ध्वस्थितस्य खलु संक्रमणं रवेः स्यात् । धान्यार्घवृष्टिषु भवेत्क्रमशस्त्वनिष्टमध्येष्टतेति मुनयः प्रवदंति पूर्वे ॥ " इति ॥ अस्यान्यदपि फलमग्रे वक्ष्यति ॥ १३ ॥

संक्रान्तेः वाहनवस्त्रायुधभक्ष्यलेपनजातिपुष्पाणि करणपरत्वेन-

सिंहव्याघ्रवराहरासभगजावाहद्विषद्घोटकाः श्वाजो गौश्चरणायुधश्च बवतो वाहा रवेः संक्रमे ॥ वस्त्रं श्वेतसुपीतहारितकपांड्वारक्तकालासितं चित्रं कम्बलदिग्घनाभमथशस्त्रं स्याद्भुशुंडी गदा ॥ १४ ॥ खड्गो दंडशरासतोमरमथो कुंतश्च पाशोंकुशोस्त्रं बाणस्त्वथ भक्ष्यमन्नपरमान्नं भैक्षपक्कान्नकम् ॥ दुग्धं दध्यपि चित्रितान्नगुडमध्वाज्यं तथा शर्कराऽथो लेपो मृगनाभिकुंकुममथो पाटीरमृद्रोचनम् ॥ १५ ॥ यावश्चोतुमदो निशांजनमथो कालागुरुश्चंद्रको जातिर्दैवतभूतसर्पविहगाःपश्वेणविप्रास्ततः ॥ क्षत्ता वैश्यकशूद्रसंकरभवाःपुष्पं च पुंनागकं जातीवाकुलकेतकानि च तथा बिल्वार्कदूर्वांबुजम् ॥ १६ ॥ स्यान्मल्लिका पाटलिका जपा च संक्रांतिवस्त्राशनवाहनादेः॥ नाशश्च तद्वृत्त्युपजीविनां च स्थितोपविष्टस्वपतां च नाशः ॥ १७ ॥

रविसंक्रांतेः करणपरत्वेन वाहनवस्त्रायुधभक्ष्यलेपनजातिपुष्पाणि सफलानि शार्दूलविक्रीडितत्रयेणोपजातिकया चाह-सिंहेति । बवतो ल्यब्लोपे पंचमी।बवमारभ्य सप्त चरकरणानि। स्थिराणि चत्वारि शकुन्यादीनि। एतेष्वेकादशसु करणेषु क्रमेण वाहनानि वस्त्राणि तथाऽऽयुधानि भक्ष्याणि लेपनानि जातयः पुष्पाणि च ज्ञेयानीत्यर्थः ।

## वाहनानि ।

तत्र वाहनानि-सिंहव्याघ्रौ प्रसिद्धौ । वराहः सूकरः । रासभो गर्दभः । गजो हस्ती । वाहद्विषत् । महिषः "लुलायो महिषो वाहद्विषत्कासरसैरिभाः" इत्यमरः । घोटकोऽश्वः । श्वा कुक्कुरः । अजो मेषः । गौः वृषः । चरणायुधः कुक्कुटः। एतान्येकादशकरणेषु वाहनानि । एवं वस्त्रादीन्यपि व्याख्येयानि । तदाह कश्यपः-"सिंहशार्दूलवाराहकुंजरा महिषस्तथा ॥ तुरगश्वाजवृषभकुक्कुटाश्च बवादिषु ॥ तिथ्यर्धजेषु संक्रांतिवाहनानि यथाक्रमात् ॥" तिथ्यर्धकरणे-नारदेन तु विशेषोभिहितः-" खशबाह्लीकवंगेषु संक्रांतेर्धिष्ण्यवाहनम् । अन्यदेशेषु तिथ्यर्द्धवाहनं स्युर्बवादयः ॥" इति ॥ यदि संक्रांतिराश्विन्यां तदाऽश्विन्या योनिरश्वस्तद्वाहनं स्यात् खशबाह्लीकवंगदेशेषु । एवं सर्वनक्षत्रेषु ध्येयम् । अमुमर्थं स्पष्टमाह कश्यपः-"भयोनिवाहनं वंगबाह्लीकविषये खशे" इति । अतोन्यदेशेषु करणैरेव वाहननिर्णय इत्यर्थः ॥

## वस्त्रम्-

वस्त्रमुच्यते । श्वेतं सुपीतं प्रसिद्धं हारीतकं नीलवर्णं पांडुरम् अरुणवर्णम् आरक्तमलक्तकवर्णं कालं श्यामवर्णम् असितं कज्जलवर्णं चित्रमनेकवर्णं कंबलः प्रसिद्धः । दिग्वस्त्राभावो नग्नत्वमित्यर्थः । घनाभं घनवर्णम् । " स्वेतपीतहरितपांडुरक्तश्यामवर्णमसितं बहुवर्णम् ॥ कंबलो विवसनांबुधवर्णान्यंशुकानि च रवेः करणेषु ॥"

## शस्त्रम्-

शस्त्रमुच्यते ॥ तत्र भुशुंडयादीन्येकादशायुधानि प्रसिद्धानि । शरासो धनुः । यदाहतुर्नारदकश्यपौ-"भुशुंडीभिंदिपालासिदंडकोदंडतोमरान् । कुंतपाशांकुशास्त्रेषून्बिभर्ति करणेष्विनः" भिन्दिपालं गदा । इषुर्बाणः ॥

## भक्ष्यम्-

भक्ष्यमुच्यते । तत्रान्नं मोदकादि परमान्नं पायसं भैक्षं भिक्षाणां समूहो भैक्षम् ।"भिक्षादिभ्योऽण्" इत्यण् । संन्यासिवद्गृहे गृहे गत्वा यत्किंचिदन्नं प्राप्यते तद्भैक्षमुच्यते । पक्कान्नकम् अपूपादि । दुग्धं दधि च प्रसिद्धमेव । चित्रितान्नं बहुभिस्तंडुलमुद्गमसूरिकाहरिद्रादिभिः पक्कमन्नम् । गुडमध्वाज्यशर्कराः प्रसिद्धाः । उक्तं च नारदेन-"अन्नं च पायसं भैक्षमपूपं च पयो दधि । चित्रान्नगुडमध्वाज्यशर्करा च बवाद्रविः" ॥

## लेपः-

लेपो विलेपनमुच्यते । तत्र मृगनाभिः कस्तूरी कुंकुमं प्रसिद्धं पाटीरं रक्तचंदनं मृत्प्रसिद्धा रोचनं गोरोचनं यावोऽलक्तकः ओतुमदो मार्जारघर्मः दक्षिणदेशभाषया जव्वादीत्युच्यते । निशा हरिद्रा अंजनं स्रोतोंजनं सुरमेति भाषायाम् । कालागुरु अगरुविशेषः । चन्द्रकः कर्पूरः । उक्तं च-"कस्तूरिकाकुंकुमचंदनं मृद्गोरोचनं यावक ओतुघर्म्मः । निशांजनं चागुरुरिंदुरेभिर्विलेपनं संक्रमणे बवात्स्यात् ॥

## जातिः-

जातिरुच्यते ॥ दैवतादयो दश प्रसिद्धाः संकरभवाः अनुलोमजाः प्रतिलोमजाश्च । उक्तं च-"देवभूताहिविहगाः पशवो मृग एव च । ब्राह्मणक्षत्रियौ वैश्याः शूद्रा मिश्रा बवादिषु ॥ तज्जातीया विनश्यंति षण्मासाभ्यंतरे ध्रुवम् ॥" इति ॥

## पुष्पाणि-वयश्चः-

पुष्पाण्युच्यंते । पुन्नागकं नागकेसरवृक्षस्य पुष्पं जात्यादीन्यंबुजांतानि प्रसिद्धानि मल्लिकावलिः पाटलिका पाडलिः जपा ओंडपुष्पम् । उक्तं च-"पुन्नागजातिर्बहुला सुकेतकी बिल्वार्कदूर्वाशतपत्रमल्लिकाः । ततो भवेत्पाटलिका जपा ततः पुष्पाणि सूर्यस्य बवादिषु क्रमात् ॥" शतपत्रं कमलम् । कचिद्वयोप्युक्तं-" शिशुः कुमारश्च गतालका युवा प्रौढा प्रगल्भा च ततश्च वृद्धा । वंध्यातिवंध्या च सुतार्थिनी च प्रव्राजिका चेति बवादिकानाम् ॥ यद्यद्वयोनुरूपं स्यात्तस्य तस्य महद्भयम्" इति ॥

## अवस्थाः-

कचिदवस्था अप्युक्ताः "पंथाश्च भोगो रतिहास्यदुर्मुखी ज्वरान्विता भुक्तसुकंपिता मता । ध्यानस्थिता कर्कशवृद्धरूपा बवाद्यवस्था कथिता मुनींद्रैः" ॥

## संक्रान्तेरुक्तद्रव्यनाशः-

एवं च संक्रमकाले यानि वस्त्राशनवाहनादीन्यभिहितानि ॥ आदिशब्देनायुधलेपनजातिपुष्पाणि तेषां नाशो भवेत् । च पुनस्तद्वृत्त्युपजीविनां नाशो भवेत् स्थितोपविष्टस्वपतां च स्यात्तैतिले इत्यादिना सुप्तत्वादीन्युक्तानि यानि तद्गुणविशिष्टानां नाशः स्यादित्यर्थः । उक्तं च नारदेन-" आयुधं वाहनाहारा यज्जातीया धनं च यत् । सुप्तोपविष्टतिष्ठंतस्ते लोकाः क्षयमाप्नुयुः ॥" इति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

## अथ संक्रांतिचक्रम् ।

| | शुक्लपक्षतिथयः | | कृष्णपक्षतिथयः | | करणानि. | स्थितिः | वाहनं. | वर्णं. | आयुधं. | भक्ष्यं | लेपनं | जातिः | पुष्पं | वयः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | पूर्वदलं. | परदलं. | पूर्वदलं | परदलं. | | | | | | | | | | |
| इमानिचरकरणानि. | ५ १२ | १८ १५ | ४ ११ | ७ ० | बव. | उपविष्टः | सिंहः | श्वेतं. | भुशुंडी. | अन्नं | कस्तूरी | दैवतं | पुन्नागः | बाला |
| | २ ९ | ५ १२ | १ ८ | ४ ११ | बालव. | उपविष्टः | व्याघ्रः | पीतं. | गदा. | पायस | कुंकुमं | भूत. | जाती | कुमारी |
| | ६ १३ | २ ९ | ५ १२ | १ ८ | कौवल. | ऊर्ध्वः | वराहः | नीलवस्त्रं | खड्गः | भैक्षं | रक्तचंदनं | सर्प. | बकुलं | गतालका |
| | ३ १० | ६ १३ | २ ९ | ५ १२ | तैतिल. | सुप्तः | गर्दभः | अरुणं | दंडः | पक्वान्नं | मृत्तिका | पक्षी. | केतकं | युवा |
| | ७ २४ | ३ १० | ६ १३ | २ ९ | गर. | उपवि. | गजः | आरक्तं. | धनुः | दुग्धं | गोरोचनं | पशु. | बिल्वः | प्रौढा |
| | ४ ११ | ७ १४ | ३ १० | ६ १३ | वणिज. | उपवि. | महिषः | श्यामवर्णं. | तोमरः | दधि | अलक्तकः | मृग. | अर्कपुष्पं | प्रगल्भा |
| | ८ १५ | ४ ११ | ७ १४ | ३ १० | भद्रा. | उपवि. | अश्वः | कृष्णवर्णं. | कुंतः | चित्रितान्नं | ओतुर्मदः | विप्र | दूर्वा | वृद्धा |
| इमानिस्थिरकरणानि. | ० | ० | ० | १४ | शकुनि. | ऊर्ध्वः | श्वा | चित्रवर्णं | पाशः | गुडः | हरिद्रा | क्षत्रिय. | कमलं | वंध्या |
| | ० | ० | ३० | ० | चतुष्पद. | सुप्तः | मेषः | कंबलं | अंकुशः | मधुः | अंजनं | वैश्य. | मल्लिका | अतिवंध्या |
| | ० | ० | ० | ३० | नाग | सुप्तः | वृषः | नग्ना | अस्त्रं. | आज्यं | अगरुः | शूद्र. | पाटलिका | सुतार्थिनी |
| | १ | ० | ० | ० | किंस्तुघ्न | उर्ध्वः | कुक्कुटः | श्यामवर्णं | बाणः | शर्करा | कर्पूरः | संकर. | जपापुष्पं | प्रव्राजिका |

### प्रतिव्यक्तिसंक्रांतिफलम्-

**संक्रातिधिष्ण्याधरधिष्ण्यतस्त्रिभे स्वभे निरुक्तं गमनं ततोऽगभे ॥ सुखं त्रिभे पीडनमंगभेंऽशुकं त्रिभेऽर्थहानी रसभे धनागमः ॥ १८ ॥**

अथ संक्रांतिवशेन प्रतिमनुष्यं शुभाशुभफलमुपजात्याह संक्रांतीति । संक्रान्तिर्यस्मिन्धिष्ण्ये नक्षत्रे स्यात्ततोधरधिष्ण्यं पूर्वनक्षत्रं तस्मात्स्वजन्मनक्षत्रं गण्यं तच्चेत्प्रथमे त्रिभे भवति तदा गमनं यात्रा स्यात् । ततः प्रथमत्रिकादनंतरमंगभेषु षण्नक्षत्रेषु यदि स्वभं तदा सुखं स्यात् । ततस्त्रिभे स्वभे पीडनं शरीरपीडा । पुनरंगभे स्वभे अंशुकं वस्त्रादिप्राप्तिः स्यात् । ततस्त्रिभे स्वभेर्थहानिः द्रव्यनाशः । ततो रसभे षण्नक्षत्रेषु स्वभे धनागमो द्रव्यप्राप्तिः स्यादित्यर्थः । उक्तं च नारदेन-"संक्रांतौ ग्रहणर्क्षे वा जन्मन्युभयपार्श्वयोः । ऋक्षत्रयं षट् शुभदं पर्यायाच्च पुनःपुनः ॥ हानिर्वृद्धिः स्थानहानिस्तथा प्राप्तिरितिक्रमात्" ॥ संक्रांतर्यन्नक्षत्रं ग्रहणनक्षत्रं वा यदि जन्मभं भवेदथवा ताभ्यामुभयपार्श्वगतं जन्मभं भवेत्तदा अनिष्टमेव नक्षत्रद्वयं निषिद्धम् । ततो नक्षत्रषट्कं शुभं ततस्त्रिकेर्थहानिस्ततः षट्के वृद्धिः ततस्त्रिके स्थानहानिःततः षट्सु वृद्धिः स्थानप्राप्तिरिति । अतएव पठंति दाक्षिणात्याः-"संक्रान्त्यधरनक्षत्राद्गणयेज्जन्मभावधि । त्रिकं षट्कं त्रिकंषट्कं त्रिकं षट्कमिति क्रमात् ॥ पंथा भोगो व्यथा वस्त्रं हानिश्च विपुलं धनम् ॥ " इति ॥ त्रिकं शुभं षट्कमशुभमिति फलितार्थः ॥

### अशुभदसंक्रान्तौ दानम्-

अत्राशुभफलदायां संक्रांतौ सत्यां दानमाह नारदः-"तिलोपरि लिखेच्चक्रं त्रिशूलं च त्रिकोणकम् । तत्र हेम विनिःक्षिप्य दद्याद्दोषापनुत्तये" इति ॥ अत्र चक्राकृतिरियम् । एवं संक्रान्तिसंबंधिफलमभिहितम् ॥ १८ ॥

### कार्यविशेषे बलं संक्रांतिमानाद्ग्रहबलं च-

**नृपेक्षणं सर्वकृतिश्च संगरः शास्त्रं विवाहो गमदीक्षणे रवेः ॥ वीर्येथ ताराबलतः शुभो विधुर्विधोर्बलेकौकबले कुजादयः १९**

अथ कार्यविशेषे बलं सामान्यतः संक्रमप्रमाणग्रहबलं चोपजात्याह-नृपेक्षणमिति ॥ रवेरिति ल्यब्लोपे पंचमी । रविमारभ्येत्यर्थः । रवेः सूर्यस्य वीर्ये बले सति सूर्यवारे वा नृपेक्षणं राजदर्शनं विधेयम् । एवं चन्द्रादावपि व्याख्येयम् । ततश्चंद्रे सर्वकृत्यानि, भौमे संगरो युद्धं, बुध शास्त्रमध्येतव्यमध्याप्यं वा, गुरौ विवाहः शुक्रे गमो गमनं, शनौ दीक्षणं यागादिदीक्षा विधेयेत्यर्थः । उक्तं च श्रीपतिना-"रविर्नृपविलोकने सुरगुरुर्विवाहोत्सवे रणे धरणिनंदनो भृगुसुतः प्रयाणे बली । शनिश्च मखदीक्षणे सकलशास्त्रबोधे बुधः शशी सकलकर्मसु ध्रुवमुदाहृतः सूरिभिः"वसिष्ठेनापि-"राजालोकनसमये रविरार्यः करतलग्रहे सुबली । रणसमये धरणिसुतः प्रयाणसमये सितोतिबली॥ दीक्षणसमयेऽर्कसुतः शशितनयो ज्ञानशिल्पविधौ । निखिलेष्वपि कार्येषु च चन्द्रबलं मुख्यमखिलनृणाम्"इति ॥ एतान्यपि कार्याणि सबलग्रहवारे क्रियमाणानि सिध्यंतीत्याह वसिष्ठः"बलप्रदस्य ग्रहवासरे यद्यच्चोपदिष्टं समुपैति सिद्धिम् । सुदुर्बलस्य ग्रहवासरे तत्प्रयत्नपूर्वं त्वपि नैव साध्यम्" इति॥ग्रहेतिलुप्तषष्ठीकं

पृथक्पदं ग्रहस्येत्यर्थः । बलप्रदत्वदुर्बलत्वे गोचरप्रकरणोक्तयुक्तस्थानवशेन ज्ञेये । तदाह श्रीपतिः—वारे ग्रहस्योपचयावहस्य कार्यं यथोद्दिष्टमुपैति सिद्धिम् । भवेत्तदेवापचयावहस्य प्रयत्नतो निर्मितमप्यसाध्यम् ॥ " इति ॥ अथेति ॥ ताराबलतो विधुः शुभो ज्ञेयः । यदा चन्द्रसंक्रमणं स्यात्तत्र ताराबलं चेत्स्यात्तदा सपाददिनद्वयं चन्द्रोऽशुभोपि शुभः । तारादौष्ट्ये तु शुभोपि अशुभ इत्यर्थः ॥ एवं विधोर्बलाद्रविः संक्रमणेऽशुभोऽपि मासपर्यंतं शुभः सुतरां समीचीन एव । चंद्रदौष्ट्ये तु शुभोप्यशुभ इत्यर्थः ॥ पर भौमादयः संक्रांतिचिकीर्षवस्तत्तद्बलतः सूर्यफलादशुभा अपि शुभा ज्ञेयाः । स्वराशिभोगकालावधि रविदौष्ट्ये तु शुभा अप्यशुभा इत्यर्थः ॥ यदाह कश्यपः—"ताराबलेन शीतांशुर्बलवांस्तद्वशाद्रविः ॥ बली संक्रममाणस्य वशात्खेटा बलाधिकाः ॥ यादृशेनेंदुना भानोः संक्रांतिस्तादृशं फलम् । नरः प्राप्नोति तद्राशेः शीतांशोः साध्वसाधुतः ॥ " इति । संक्रममाणस्य रवेरित्यध्याहारः ॥ यत्तु दीपिकायां—"यादृशेन शशांकेन ग्रहः संचरते नृणाम् । तादृशं फलमाप्नोति शुभं वा यदिवाऽशुभम् ॥ " इति चंद्रवशेनैवाखिलग्रहसंबंधिशुभाशुभत्वमुक्तम् ॥ तत्र ग्रह इत्येकवचननिर्देशाल्लिखितकश्यपवाक्यस्वरसाच्च सूर्य एव ग्राह्यो नान्य इति तद्दीपिकाकारो व्याख्यत् । अन्यथा 'सचंरेयुर्ग्रहा नृणाम्' इत्यवक्ष्यत् ॥ १९ ॥

### मलमासनिर्णयः—

**स्पष्टार्कसंक्रांतिविहीन उक्तो मासोधिमासः क्षयमासकस्तु ॥**
**द्विसंक्रमस्तत्र विभागयोस्तस्तिथेर्हि मासौ प्रथमांत्यसंज्ञौ॥२०॥**

**इति श्रीदैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ संक्रांतिप्रकरणं समाप्तम् ॥ ३ ॥**

अथाधिमासक्षयमासयोः संक्रात्यधीनत्वात्तयोर्निर्णयः प्रस्तूयते । तत्र तल्लक्षणमुपजात्याह—स्पष्टार्केति ॥ शुक्लपक्षप्रतिपदादिदर्शांतश्चांद्रो मासः । स चेत्स्पष्टसूर्यसंक्रांत्या विहीनो भवेत्तदाधिकमास उक्तः।उक्तं च ब्रह्मसिद्धांते—"चांद्रो मासो ह्यसंक्रांतो मलमासः प्रकीर्तितः" इति ॥ तुर्विशेषे कदाचिच्छब्दापरपर्याये । कदाचित्स चांद्रो मासो द्विसंक्रमः द्वौ संक्रमौ सूर्यसंक्रमौ यस्मिन्नसौ द्विसंक्रमः स्पष्टसूर्यसंक्रांतिद्वययुतः क्षयमास उक्तः ॥ यदाह वसिष्ठः—"यस्मिन्दर्शस्यान्तादर्वागेवापरं दर्शम् । उल्लंघ्य भवति भानोः संक्रांतिः सोधिमासः स्यात् । आद्यंतदर्शयोर्मध्ये भानोरेव तयोर्यदि । संक्रांतिद्वितयं स्याच्चेन्न्यूनमासः स उच्यते ॥ " एतौ चाधिमासक्षयमासौ स्पष्टमानेनैव ज्ञेयौ । तदाह कश्यपः -"यस्मिन्मासेर्कसंक्रांतिर्दर्शनात्प्राक्पुरःसरम् । दर्शमुल्लंघ्य भवति स संसर्पोधिमासकः ॥ आरभ्य शुक्लप्रातिपत्प्रवेशात्संक्रमद्वयम् ॥ आगामींदुक्षयस्यांतात्प्राङ्न्यूनाख्यस्त्वहर्पतिः ॥ स्फुटार्कसंक्रमाद्विद्यान्न्यूनमासाधिमासकौ । मासौ न्यूनाधिकौ तौ तु सर्वकर्मबहिष्कृतौ ॥" इति ॥ सिद्धांतशिरोमणावपि-"असंक्रांति-

मासोधिमासः स्फुटः स्याद्द्विसंक्रांतिमासः क्षयाख्यः कदाचित्'' इति ॥ स्फुटः स्फुटेंदुमासः ॥ स्फुटत्वमपि तत्रैव--"स्पष्टोऽधिमासः पतितोऽप्यलब्धो यदायदा वा पतितोप्यलब्धः । सैकैर्निरेकैः क्रमशोधिमासस्तदा दिनौघः सुधिया प्रसाध्यः ॥ " इति ॥ इदमग्रे स्पष्टं व्याख्यास्यते ॥ अत्राधिमासक्षयमासलक्षणप्रयोजनं नोक्तम् ॥ आद्यप्रकरणे-"वृद्धत्वास्तशिशुत्व इज्यसितयोर्न्यूनाधिमासे तथा " इत्यादिनोक्तत्वात् ॥

## पक्षद्वयभेदेन संज्ञाद्वयस्य फलानि क्षयमासे-

क्षयमासपरः कश्चिद्विशेषो वक्तव्योस्ति, सोत्रैवाभिधातुमुचित इत्याह-तत्रेति ॥ तत्र क्षये मासे मासद्वयसंज्ञाशुक्लकृष्णपक्षभेदेन । तस्याः सप्रयोजनविषयकल्पनोच्यते-विभागयोरिति ॥ तत्र क्षयमासे जातानां वर्द्धापने मृतानां श्राद्धे च तिथेर्विभागयोः पूर्वोत्तरदलयोः संबंधेन प्रथमांत्यसंज्ञौ मासौ स्तः स्याताम् । तिथिपूर्वार्धजातानां मृतानां च पूर्वमासे वर्द्धापनं श्राद्धं च विधेयम् । तिथेरुत्तरार्द्धे जातानां मृतानां चोत्तरमासे वर्द्धापनं श्राद्धं च विधेयम् । तदुक्तं-" तिथ्यर्द्धे प्रथमे पूर्वोऽपरस्मिन्नपरस्तथा । मासाविति बुधैश्चिंत्यौ क्षयमासस्य मध्यगौ ॥ " ॥ इति ॥ एवं यथाश्रुतोऽर्थो व्याख्यातः ॥ अस्य विशेषविवेकस्तु इह ग्रन्थगौरवभयात् प्रस्तुतविचारानर्हत्वाच्च नास्माभिरुक्त इति शिवम् ॥ २० ॥ संक्रांतिप्रकरणं गद्येनोपसंहरति-इति श्रीदैवज्ञानंतेति ॥ स्पष्टार्थम् ॥ ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः । गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने खलु संक्रमणप्रकरणं संपूर्णतामध्यगात् ॥ १ ॥

इति श्रीविद्वद्दैवज्ञमुकुटालंकारज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायां संक्रांतिप्रकरणं समाप्तम् ॥ ३ ॥

# अथ गोचरप्रकरणम् ४.

ग्रहाणां गोचरफलानि-

सूर्यो रसांत्ये खयुगेऽग्निनंदे शिवाक्षयोर्भौमशनी तमश्च ॥
रसांकयोर्लाभशरे गुणांत्ये चंद्रोंबराब्धौ गुणनंदयोश्च ॥ १ ॥
लाभाष्टमे चाद्यशरे रसांत्ये नगद्वयेज्ञो द्विशरेऽब्धिरामे ॥
रसांकयोर्नागविधौ खनागे लाभव्यये देवगुरुः शराब्धौ ॥ २ ॥
द्व्यंत्ये नवाऽऽशेद्रिगुणे शिवाहौ शुक्रःकुनागे द्विनगेऽग्निरूपे ॥
वेदांबरे पंचनिधौ गजेषौ नंदेशयोर्भानुरसे शिवाग्नौ ॥ ३ ॥
क्रमाच्छुभो विद्ध इति ग्रहः स्यात्पितुः सुतस्यात्र न वेधमाहुः॥
दुष्टोऽपि खेटो विपरीतवेधाच्छुभो द्विकोणे शुभदः सितेऽब्जे ४

श्रीगणेशाय नमः । विघ्नराजमभिवंद्य सिद्धिदं नीलकण्ठतनयेन धीमता । शिष्यमाहेविनिवृत्तिकारणं गोचरप्रकरणं विविच्यते ।। १ ।। गोचरप्रकरणं व्याख्यायते ।। तत्र जन्मराशितः प्रोक्तनिषिद्धस्थानस्थितेदानींतनग्रहवशेन शुभाशुभनिरूपणं गोचर इत्युच्यते ।। तत्र ग्रहाणां गोचरफलं शुभाशुभरूपमुपजातिकाद्वयेनेंद्रवज्रयोपजातिकापूर्वार्द्धेन चाह-सूर्य इति ।। सूर्यो रसांत्ये इत्यादौ 'सर्वो द्वंद्वो विभाषैकवद्भवति' इति समाहारद्वंद्वे एकवचनांतः ।। शिवाक्षयोरित्यादावितरेतरयोगद्वंद्वः ।। अंबराब्धावित्यादिषु त्वनित्यमागमशासनमिति नुमभावो ज्ञेयः ।। एवं सर्वत्र व्याख्येयम् ।। अस्य चतुर्थश्लोकेनान्वयः ।। स्वजन्मराशेरिति पंचमश्लोकस्थपदमत्राध्याहार्यम् ।। ( १ )-तत्र सूर्यो ग्रहः स्वजन्मराशेः रसांत्ये क्रमाच्छुभो विद्धश्च स्यात् । सूर्यः स्वजन्मराशेः सकाशाद्यदि षष्ठस्थाने तदा शुभः । अतः जन्मराशेर्द्वादशस्थानस्थिताश्चेदन्ये ग्रहाः स्युस्तदा विद्धः शुभोप्यशुभफलदाता ।।

## रविशन्योर्न परस्परं वेधः-

अत्र शनैश्चरस्य सूर्यपुत्रत्वात्तद्वेधो नांगीकार्यः । यतः पितुर्जनकस्य सुतसम्बन्धिनं वेधं नाहुः । सुतस्यापि पितृसम्बन्धिनं वेधं नाहुः । तथा खयुगे जन्मराशेर्दशमे सूर्यः शुभश्चतुर्थस्थानस्थिताश्चेदन्ये ग्रहाः शनिवर्जिताश्च स्युः तदा विद्ध इत्येवं श्लोकत्रयं सम्यग्व्याख्येयम् । तथा अग्निनन्दे तृतीयनवमयोः शिवाक्षयोरेकादशपंचमयोः सूर्यः क्रमाच्छुभो विद्धश्च ज्ञेयः । उक्तं च नारदेन ' शुभोर्को जन्मतस्त्र्यायदशषष्ठस्तु विद्यते । जन्मतो नवपंचांबुव्ययगैर्व्यार्कि-

भिस्तदा ॥ ( ३-७ ) भौमेति ॥ भौमशनी तमो राहुश्च ते ग्रहाः रसांकयोः षण्णवस्थानयोः क्रमाच्छुभा विद्धाश्चेत्यर्थः ॥ परन्तु शनेः सूर्यवेधो नास्तीत्युक्तमेवेति । यदाह वसिष्ठः-"त्रिषडेकादशसहितो धरासुतो रिःफधर्मसुतसंस्थैः । दिनकरतनयोपि शुभो न विध्यते खेचरैर्विनोष्णकरम् ॥ " इति ॥ ( ८-९ ) शनिवद्राहुर्ज्ञेय इति वचनाद्राहोरप्येवमेवैष विचारः ॥ राहोरुपलक्षणत्वात्केतोरपि ॥ उक्तं च शार्ङ्गधरेण-"राहुकेतुफलं सर्वं मंदवत्कथितं बुधैः । वेधोपि तद्वद्वेद्योह्यो वामवेधस्तथैव च ॥ " ( २ ) चंद्र इति ॥ जन्मराशितः अंबराब्धौ दशमचतुर्थयोः गुणनन्दयोस्तृतीयनवमयोः आद्यशरे प्रथमपंचमयोः रसांत्ये षष्ठद्वादशस्थानयोः नागद्वये सप्तमद्वितीययोः स्थानयोश्चन्द्रः क्रमाद्विद्धोऽविद्धश्च ज्ञेयः ॥

## बुधचन्द्रयोः परस्परं वेधो न-

चन्द्रस्य बुधवेधो नास्ति उक्तं च नारदेन-"विद्यते जन्मतो नेंदुर्ज्ञेनाद्यायारिखत्रिषु । स्वेष्वष्टांत्यांबुधर्मस्थैर्विबुधैर्जन्मतः शुभः ॥ " इति ॥ ( ४ ) ज्ञ इति ॥ जन्मराशेः द्विशरे द्विपञ्चमयोः अब्धिरामे चतुर्थतृतीययोः रसांकयोः षष्ठनवमयोः नागविधौ अष्टमप्रथमयोः खनागे दशमाष्टमयोः लाभव्यये एकादशद्वादशयोः स्थानयोर्ज्ञो बुधः क्रमाच्छुभो विद्धश्च ज्ञेयः । परंत्वत्र चन्द्रवेधो नास्ति । यदाह नारदः-"ज्ञः स्वाब्ध्यर्यष्टखायेषु जन्मतश्चेन्न विध्यते । सुतत्र्यंकाद्यष्टमांत्यसंस्थितैरिंदुजः शुभः ॥ " इति ॥ ( ५ )-देवगुरुरिति ॥ जन्मराशितः शराब्धौ पंचमचतुर्थयोः द्व्यंत्ये द्वितीयद्वादशस्थानयोः नवाऽऽशे नवमदशमयोः स्थानयोः अद्रिगुणे सप्तमतृतीययोः शिवाष्टौ एकादशाष्टमयोः देवगुरुर्बृहस्पतिः क्रमाच्छुभो विद्धश्च ज्ञेयः । उक्तं च नारदेन-"जन्मतः स्वायगोक्षाद्रिष्वंत्याष्टखजलत्रिगैः । जन्मराशेर्गुरुः श्रेष्ठो ग्रहैर्यदि न विध्यते ॥ " इति ॥ ( ६ )-शुक्र इति ॥ जन्मराशेः कुनागे प्रथमाष्टमयोः द्विनगे द्विसप्तमयोः अग्निरूपे तृतीयप्रथमयोः वेदांबरे चतुर्थदशमयोः पंचनिधौ पंचमनवमयोः गजेषौ अष्टमपंचमयोः नन्दाशयोर्नवमदशमयोः भानुरसे द्वादशषष्ठयोः शिवाग्नौ एकादशतृतीययोः स्थानयोः शुक्रः क्रमाच्छुभो विद्धश्च ज्ञेयः । यदाह नारदः-"जन्मभादासुताष्टांकांत्यायेष्विष्टो न विध्यते । भार्गवो मृत्युसप्ताद्याशांकेष्वीशारिरामगैः ॥" इति ॥ आसुतेत्यभिविधावाङ् । सह तेनाभिविधिरिति । तेन प्रथमद्वितीयपंचमानां ग्रहाणामित्यर्थः, इदमत्राकूतम् ॥ 'सूर्यो रसांत्य' इत्यादौ प्राक्पाठितेषु विद्यमानः स ग्रहः शुभदः । शुभस्थानव्यतिरिक्ताखिलस्थानेषु विद्यमानः स स ग्रहोऽशुभफलदाता ॥ अत एवाह श्रीपतिः-"सर्वे लाभगृहस्थिताश्च खरिपुष्वर्कः कुजार्की त्रिषट्प्राप्तौ खाद्यखमन्मथारिषु शशी खास्तारिवर्ज्ये भृगुः । धीधर्मास्तधनेषु वाक्पतिरिति स्वाष्टांबुखस्थो बुधः श्रेष्ठो जन्मग्रहाद्विगोचरविधौ विद्धो न चेत्स्याद्ग्रहैः ॥" इति ॥ अर्थादेवानुक्तस्थानेष्वशुभः स स ग्रहः ॥

## ग्रहाणां सर्वस्थानेषु फलानि-

अत्र ग्रहाणां विहितनिषिद्धस्थानफलानि विधिरत्ने-"स्थानं जन्मनि नाशयेद्दिनकरः

कुर्याद्द्वितीये भयं दुश्चिक्ये श्रियमातनोति हिबुके मानक्षयं यच्छति । दैन्यं पंचभगः करोति रिपुहा षष्ठोर्थहा सप्तमे पीडामष्टमगः करोति पुरुषे कांतिक्षयं धर्मगः ॥ कर्मसिद्धिजनकस्तु कर्मगो वित्तलाभकृदथायसंस्थितः । द्रव्यनाशजनितां महापदं यच्छति व्ययगतो दिवाकरः॥" ( इति रविः ) ॥ " जन्मन्यन्नं दिशति हिमगुर्वित्तनाशं द्वितीये दद्याद्द्रव्यं सहजभवने कुक्षिरोगं चतुर्थे । कार्ये नाशं तनयगृहगो वित्तलाभं च षष्ठे द्यूने द्रव्यं युवतिसहितं मृत्युसंस्थोऽपमृत्युम् ॥ नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत्सुखम् । विविधमायगतः कुरुते धनं व्ययगतस्तु रुजं धनसंक्षयम् ॥ " ( इति चंद्रः ) ॥ "प्रथमगृहगतः क्षोणीसूनुः करोत्यरिजं भयं क्षपयति धनं वित्तस्थाने तृतीयगतोर्थदः ॥ अरिभयमतः पातालेर्थान्क्षिणोति हि पंचमो रिपुगृहगतः कुर्याद्वित्तं रुजं मदनस्थितः ॥ जनयति निधनस्थः शत्रुबाधां धराजो दिशति नवमसंस्थः कायपीडामतीव । शुभमपि दशदस्थो लाभगो भूरिलाभं व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशान् ॥ " ( इति भौमः ) ॥ " बुधः प्रथमगो भयं दिशति बंधमर्थे धने धनं रिपुभयान्वितं सहजगश्चतुर्थेर्थदः । अनिर्वृतिकरो भवेत्तनयगोरिगः स्थानदः करोति मदनस्थितो बहुविधां शरीरव्यथाम् ॥ अष्टमे शशिसुते धनवृद्धिं धर्मगस्तु महतीं तनुपीडाम् । कर्मगः सुखमथायगतोर्थं द्वादशे भवति वित्तविनाशः " ॥ ( इति बुधः ) ॥ भयं जन्मन्यार्यो जनयति धनस्थोर्थमतुलं तृतीयेंगक्लेशं दिशति च चतुर्थेऽर्थविलयम् । सुखं पुत्रस्थाने रुजमपि च कुर्यादरिगृहे गुरुद्यूने पूजां धननिचयनाशं च निधने ॥ धर्मगतो धनवृद्धिकरः स्यात्पतिहरो दशमेमरपूज्यः । स्थानधनानि ददाति स चाये द्वादशगस्तनुमानसपीडाम् ॥ " ॥ (इति गुरुः) ॥ "जन्मन्यरिक्षयकरो भृगुजोऽर्थदोर्थे दुश्चिक्यगः सुखकरो धनदश्चतुर्थः । स्यात्पुत्रगस्तनयगोरिगतोरिवार्द्धे शोकप्रदो मदनगो निधनेऽर्थदाता ॥ जनयति विविधांबराणि धर्मे न सुखकरो दशमस्थितस्तु शुक्रः ॥ धननिचयकरः स लाभसंस्थो व्ययभवनेपि धनागमं करोति ॥"॥ (इति शुक्रः)॥ " वित्तभ्रंशं रुगार्तिं दिनकरतनये जन्मराशिं प्रपन्ने वित्तक्लेशं द्वितीये धनहरणकृतिं वित्तलाभं तृतीये ॥ पाताले शत्रुवृद्धिं सुतभवनगतः पुत्रभृत्यार्थनाशं षष्ठे स्थानेर्थलाभं जनयति मदने दोषसंघातमार्किः ॥ शरीरपीडां निधने न धर्मे धनक्षयं कर्मणि दौर्मनस्यम् । उपांत्यगो वित्तमनर्थमन्त्ये शनिर्ददातीत्यवदद्वसिष्ठः ॥ " ( इति शनिः ) ॥ " राहुर्जन्मगतो भयं च कलहं सौभाग्यमानक्षयं वित्तभ्रंशमहासुखं नृपभयं चार्यक्षयं यच्छति ! संतापं कलहं च वित्तमधिकं शीघ्रं विनाशं नृणां केतोस्तत्फलमेव राशिषु ददेच्छंसंति गर्गादयः ॥ " ॥ ( इति राहुकेतू ) ॥

## ऋक्षराशिधिष्ण्यस्था वक्रिणश्च क्रमेणैष्यप्राग्राशिफलदाः-

एतच्च शुभाशुभफलं ग्रहा ऋक्षसंधिगतास्तथा राशिसंधिगता एष्यराशेः फलं ददति, वक्रिणस्तु प्राग्राशेरित्याह कमलासनः-"ऋक्षसंधिगताः खेटा राशिसंधिगता ग्रहाः । एष्यराशेः फलं दद्युर्वक्री तद्विपरीतकम् ॥ " इति ॥ राशिग्रहणं नक्षत्रस्याप्युपलक्षणम् । वसिष्ठोपि-"भवनांत्यगताःस्वधिष्ण्यं यदंतगताश्च गगनचराः । दद्युः परभवनफलं प्राग्भवनफलं च वक्रिताश्च ( ? ) इति ॥ अस्यार्थः ॥ ऋक्षं नक्षत्रं तस्य संधिः । एकस्मान्निर्गत्यापरत्र संक्रमणं संधिः । एवं राशिसंधिश्च । तत्र संधिज्ञानं-"देवद्वयर्कर्तवोऽष्टाष्टौ नाड्योंकाः

खनृपाः क्रमात् । वर्ज्याः संक्रमणेऽर्कादेः प्रायोर्कस्यातिनिंदिताः ॥" इति विवाहप्रकरणे वक्ष्यति ग्रंथकृत् । संक्रमणकाल एव संधिकालः सर्वेषां ग्रहाणाम् ॥ ' षष्टिबिंबं ग्रहभुक्तिभक्तम्' इत्यादिना भास्करेणोक्तत्वात् । तदेतदस्माभिः संक्रांतिप्रकरणे सप्रपंचं निरूपितं तत एवाव-धार्यम् । तत्र सूर्यादिग्रहाः' देवद्वयंके ' इति पद्योक्तार्द्धघटिकोपलक्षिते नक्षत्रांते राश्यंते वा स्थिता जिगमिषितस्य नक्षत्रस्य राशेर्वा फलं प्रयच्छंति । वक्रिणस्तु पूर्वोक्तलक्षणोपलक्षिते नक्षत्रादौ राश्यादौ वा स्थिता भुक्तस्य नक्षत्रस्य राशेर्वा फलं ददाति ।

## वक्रातिचारयोः फलदानदिनसंख्या-

तत्र भौमाद्याः ग्रहाः वक्रातिचारयोः प्राग्राशिफलं कियंति दिनानि प्रयच्छंतीत्याह वसिष्ठः-दशदिवसं पंचदिनं त्रिपक्षमतिचारवक्रयोर्दद्युः । भौमाद्याः पंचदिनं प्राग्राशिफलं च पंचमासांश्च ॥ " इति ॥ भौमाद्याः स्वगत्या यावता कालेन राशिं जहति न ततोऽल्पे न्यूनाधिकभावेन स चारः । यदा चारसमये राशिं जहति सोऽतिचारः । वक्रं प्रसिद्धमेव ॥

## वेधविचारः-

वामवेधं शुक्लपक्षे चंद्रबलं चोपजात्युत्तरार्द्धेनाह-दुष्टोपीति ॥ स्वजन्मराशेः सका-शादनिष्टस्थानस्थितोपि खेटो विपरीतवेधात् वामवेधाच्छुभः शुभफलदाता ॥ अयमर्थः ॥ ( १ )-तेषु षष्ठदशमतृतीयैकादशेषु स्थितः सूर्यः शुभफलदाता । तद्भिन्नान्यष्टौ स्थानान्य-शुभान्येव । तत्र द्वादशचतुर्थनवमपंचमाख्येष्वनिष्टस्थानेषु स्थितः सूर्यस्तथैवानिष्टफलदः स्यात् । यदा प्राक्पठितैः क्रमेण षष्ठादिस्थानस्थितैः शनिवर्जितैर्ग्रहैर्न विद्धः । यदा तु विद्ध-स्तदा शुभफलदोपि षष्ठादिस्थाने शुभदो नैव स्यात् । अन्येषु स्थानेषु प्रथमद्वितीयसप्तमाष्ट-मेषु स्थितः सूर्यो निष्फलदो नैव ॥ ( २-४ ) एवं चंद्रबुधयोः षडेव विरुद्धस्थानानीति क्रम-वेधवामवेधौ स्याताम् ॥ ( ३ )-भौमस्य तु त्रीण्येव तृतीयदशमैकादशस्थानानि शुभत-राणि ॥ अन्यान्यशुभान्येव । तत्र नवमपंचमद्वादशस्थानास्थितभौमस्याशुभस्य क्रमेण षष्ठैका-दशतृतीयस्थानस्थैर्ग्रहैर्वामवेधेन शुभत्वमेव । अन्येष्वशुभस्थानस्थितेष्वशुभ एव भौमः ( ७-८-९ )-एवं शनिराहुकेतवो ध्येयाः ॥ ( ५ )-गुरोरप्येवमेव । तत्र तु प्रथमषष्ठस्थानस्थौ गुरुः शुभ एव ॥ ( ६ )-शुक्रस्य तु नवस्थानानां शुभत्वात्तद्व्यतिरिक्तानि त्रीणि षष्ठसप्तमद-शमस्थानान्यशुभानि । तेषामेव क्रमेण द्वादशद्वितीयचतुर्थस्थानस्थग्रहजनितवामवेधेन शुभत्व-मेव । अन्येषां तूत्तरपठितस्थानानां शुभत्वादेव न वामवेधविचारार्हत्वमिति परिच्छिन्नार्थः । यदाह कश्यपः-"अपविद्धो ग्रहः कश्चिन्न ददाति शुभं फलम् । वामवेधविधानेन त्वशुभोपि शुभप्रदः॥अतस्तद् द्विविधं मूलं विचार्यैव फलं वदेत् ॥ "इति ॥वसिष्ठोपि-"वेधसमन्वितख-चराणां प्रदिशंत्यसत्फलं किंचित् । व्यत्ययं वेधविधानादपि शुभदास्तेऽशुभप्रदाः सततम् ॥" इति ॥ व्यत्ययवेधो वामवेधः । द्विकोण इति॥ सिते शुक्लपक्षेऽब्जश्चंद्रो द्विकोणे द्वितीयनव-मपंचमस्थानेषु स्थितः शुभदः । अत्रापि क्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्बुधवर्जितैर्ग्रहैर्यदि न विद्धः इत्यपि ध्येयम् ॥ उक्तं च नारदेन-"शुक्लपक्षे शुभश्चंद्रो द्वितीयनवपंचगः । रिपुमृत्यं-बुसंस्थैर्न विद्धो हि गगनेचरैः ॥ " इति । यदि विध्यते तदाशुभफलद एव ॥ १॥ २॥३॥४॥

वेधकोष्ठकानि।

| | रविः | | | | चन्द्रः | | | | | | भौ.श.रा.के. | | | बुधः | | | | | | गुरुः | | | | | शुक्रः | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शु. | ३ | ११ | १० | ६ | ७ | १ | ११ | ६ | १० | ३ | ३ | ६ | ११ | २ | ४ | ६ | ८ | १० | ११ | २ | ११ | ९ | ५ | ७ | १ | २ | ३ | ४ | ५ | ८ | ९ | १२ | ११ |
| वे. | ९ | ५ | ४ | १२ | २ | ५ | ८ | १२ | ४ | ९ | १२ | ९ | ५ | ५ | ३ | ९ | १ | ८ | १२ | १२ | ८ | १० | ४ | ३ | ८ | ७ | १ | १० | ९ | ५ | ११ | ६ | ३ |

| शुक्लपक्षे चन्द्रस्य विशेषः | | | |
|---|---|---|---|
| शुभः | २ | ३ | ५ |
| वेधितः | ६ | ८ | ४ |

### जन्मराशित एव-अधिष्ठितराशित एव वेधफलमिति मतद्वयम्-

**स्वजन्मराशेरिह वेधमाहुरन्ये ग्रहाधिष्ठितराशितः सः ॥ हिमाद्रिविंध्यांतर एव वेधो न सर्वदेशेष्विति काश्यपोक्तिः ॥ ९ ॥**

अथ द्विविधवेधे मतद्वयमुपजात्याह–स्वजन्मेति ॥ इह द्विविधवेधविधावन्ये नारदादयः स्वजन्मराशेः सकाशाद् द्विविधं वेधं क्रमिकं वेधं वामवेधं चाहुः॥ तथा चोभयत्रापि नारदेन 'जन्मत' इत्युक्तम् ॥ अथ कश्यपादिमतमुच्यते–स पुनर्द्विविधोऽपि वेधो ग्रहाधिष्ठितराशितो ज्ञेयः । यथा सूर्यो जन्मराशेः सकाशात्षष्ठस्थितः शुभः । स सूर्यः स्वाक्रांतराशितो द्वादशस्थानस्थितैः शनिवर्जितैर्ग्रहैर्न विद्धःतथा सूर्यो जन्मराशिद्वादशस्थोऽपि नेष्टः। सूर्यसंक्रांतराशितः षष्ठस्थितैः शनिवर्जितैर्ग्रहैर्विद्धश्चेत्तदा शुभफलद इत्यर्थः ॥

### हिमाद्रिविंध्यांतर एव द्वावपि वेधौ-( कश्यपमते )

एतस्यैव द्विविधवेधस्य देशविशेषविषयत्वमुच्यते । हिमाद्रिविंध्यनामानौ पर्वतौ प्रदेशविशेषावस्थितया प्रसिद्धौ । तयोरंतरालवर्तिन्येव देशे स द्विविधोऽपि वेधो ज्ञेयः न सर्वदेशेषु ॥ हिमाद्रिविंध्यांतरालबहिर्भूतसर्वदेशेषु द्विविधोऽपि वेधदोषो नास्तीति कश्यपस्य मुनेरुक्तिर्वचनमस्ति । यदाह कश्यपः–"ज्ञातव्यं जन्मराशेस्तु निखिलं यद्बलाबलम् ॥ हिमाद्रिविन्ध्ययोर्मध्ये वेधज्ञं तद्ग्रहालयात् ॥" इति ॥ वयं तु 'सूर्यो रसान्त्य' इति क्रमिको वेधो जन्मराशित एव ज्ञेयः । वामवेधस्तु अधिष्ठितराशित इति ब्रूमः । तदाह गुरुः–"जन्मतः क्रमवेधस्याद्वामवेधो ग्रहालयात्" ॥ इदमपि हिमाद्रिविन्ध्यान्तरविषयमेव । एतज्ज्ञानं दुर्घटमित्याहतुर्नारदकश्यपौ–"अज्ञात्वा द्विविधं वेधं यो ग्रहज्ञो बलं वदेत् । स मृषावचनाभाषी हास्यं याति जनैः सदा ॥ इति ॥

## राज्ञा ग्रहदौष्ट्ये यात्रादिकं न कार्यम्-

एवंप्रकारेण गोचरबलं ज्ञात्वा ग्रहदौष्ट्ये यात्रादिकं न कार्यम् । तदुक्तं श्रीपतिना- "अकालचर्यां मृगयां च साहसं सुदूरयानं गजवाजिवाहनम् । गृहे परेषां गमनं विवर्जयेद्ग्रहेषु राज्ञा विषमस्थितेषु ॥ "

## ग्रहदौष्ट्ये शांतिः कार्यैव-

अतएव तत्र ग्रहशांतिर्विधेया । यदाह नारदः-"ग्रहेषु विषमस्थेषु शांतिं यत्नात्समाचरेत् । हानिवृद्धी ग्रहाधीने तस्मात्पूज्यतमा ग्रहाः ॥ " इति ॥ विपर्यये चानिष्टमित्याह वसिष्ठः-"ग्रहेषु विषमस्थेषु यः शांतिं न करोति सः । अर्थहानिं च मरणं चाश्नुते सर्वसंकटम् ॥ " इति ॥

## शान्तिप्रकारः-तत्कालश्च-

सा च शांतिर्वसिष्ठसंहितोक्तप्रकारेण मत्स्यपुराणोक्तप्रकारेण वाऽनुष्ठेया । तत्र शांतिकालमाह वसिष्ठः-" मासे मास्ययने चैव चन्द्रसूर्यग्रहेपि वा । विषुवत्रिकसंक्रांतौ व्यतीपाते दिनक्षये ॥ " इति ॥ " सौम्येक्षितेऽनिष्टफलः शुभदः पापवीक्षितः । निष्फलौ तौ ग्रहौ स्वेन शत्रुणा चावलोकितः ॥ नीचराशिगतः स्वस्य शत्रुक्षेत्रगतोपि वा ॥ शुभाशुभफलं नैव दद्यादस्तंगतोपि वा ॥ " इत्येतादृशस्थले दुष्टत्वाभावादेव शान्त्यभाव इति फलितं भवति ॥

## ग्रहणे नक्षत्रराहुफलं-तद्दर्शननिषेधतद्दर्शनाशुभप्रतीकाराः-

**जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षितिः श्रीर्व्यथाचिंता सौख्यकलत्रदौष्ट्यमृतयः स्युर्माननाशः सुखम् ॥ लाभोपाय इति क्रमादत्तशुभध्वस्त्यै जपः स्वर्णगोदानं शांतिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे ॥ ६ ॥**

अथ गोचरप्रस्तावात् ग्रहणनक्षत्रफलं ग्रहणीयराहुगोचरफलं ग्रहणाशुभप्रतीकारं च दुष्टग्रहणदर्शननिषेधं च शार्दूलविक्रीडितेनाह-जन्मर्क्षे इति ॥ जन्मनक्षत्रे ग्रहे ग्रहणे सति निधनं मृतिः स्यात् । यदाह वसिष्ठः-यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ । तज्जातानां भवेत्पीडा ये नराः शांतिवर्जिताः ॥ भार्गवीये विशेषोपि-" यस्य राज्यस्य नक्षत्रे स्वर्भानुरुपरज्यते । राज्यभंगं सुहृन्नाशं मरणं चात्र निर्दिशेत् ॥" इति । राज्यस्य नक्षत्रे अभिषेकनक्षत्रे यदा कदाचिद्राहुभुज्यमाननक्षत्रोपरागे नक्षत्रमेकमेव तदाऽसंदिग्धफलनिर्देशः ॥ यदा तु नक्षत्रभेदस्तदोपरज्यमाननक्षत्रेष्वेव फलनिर्देशः । एवं राशिभेदेपूपरज्यमानराशितः । अस्य मते राहोर्दिग्देशकालावरणादिभेदाद्ग्रहणत्वमेव नास्ति । तदुक्तं सिद्धांतशिरोमणौ-"दिग्देशकालावरणादिभेदेन वेधको राहुरिति ब्रुवंति " एतदुपपत्तिभास्करेण निरूपिता ॥ पितृचरणैश्च टोडरानंदे राहुचारविलासे प्रपंचेनाभ्यधायि ॥ परंतु राहुसाहित्यं विना ग्रहणानयनस्य शरसंस्कृतिमानकखण्डाद्यानयनविशिष्टस्यासुकरत्वादिति साहित्यविवक्षयैव राहोरुपरक्तत्वमुच्यते । अतएवोक्तं वराहेण-"तस्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहुः । याम्योत्तरा शशिगतिर्गणिते ह्युपचर्यते तेन ॥ " इति ॥

## सूर्यचन्द्रोपरागयोः फलानि-जन्मराश्यादितः-

राशिफलमुच्यते। जनिभत इति। पंचम्यास्तासिल्। जन्मराशेरारभ्य द्वादशसु राशिषु ग्रहणे सति क्रमादनुक्रमेण घातादिफलं भवति। यथा जन्मराशौ ग्रहणे सति घातः शरीरपीडा, द्वितीयराशौ क्षतिः द्रव्यनाशः, तृतीयराशौ श्रीः लक्ष्मीः चतुर्थराशौ शरीरपीडा, पंचमराशौ चिंता पुत्रादीनां, षष्ठराशौ सौख्यम्, सप्तमराशौ कलत्रदौस्थ्यं स्त्रीमरणम्, अष्टमराशौ मृत्युर्मरणं, नवमराशौ माननाशः। दशमराशौ सुखम्। एकादशराशौ लाभः, द्वादशराशौ मृत्युः। आत्मन इति केचित्। द्रव्यस्येत्यपरे। इदं च फलं षण्मासपर्यंतमनुक्तमपि ज्ञेयम्। तदुत्तरं हि ग्रहणांतरसंभवात्। उक्तं दैवज्ञमनोहरे-" घातं हानिमथ श्रियं जन्मभाद्ध्वस्तिं च चिंतां क्रमात्सौख्यं दारवियोजनं च कुरुते व्याधिं च मानक्षयम्। सिद्धिं लाभमपायमर्कशशिनोः षण्मासमध्ये ग्रहः॥" इति॥ कचित्तु स्थानांत्य एव शुभमध्यमाधमा इत्युक्तमपि दैवज्ञमनोहरे एतदुक्तं-" ग्रासात्तृतीयाष्टमगश्चतुर्थस्तथायसंस्थः शुभदः स्वराशिः। नवांशधीसप्तमगश्च मध्ये तज्यो द्विषट्को दशनाद्यसंस्थः॥" इति॥ अत्र वाक्ये ग्रासराशेर्गणनोक्ता। कचित् स्वराशेरपि। तद्वाक्यं-" त्रिषड्दशायोपगते नराणां शुभप्रदं स्याद्ग्रहणं रवीन्द्वोः। द्विसप्तनंदेषु च मध्यमं स्याच्छेषेष्वनिष्टं मुनयो वदंति" इति॥ अत्रावध्यपेक्षायां स्वजन्मराशेरित्यध्याहार्यमेव। अत्र ग्रहणीयराशेर्देशविशेषेण शुभफलानि वराहसंहितायामभिहितानि। तथा च फलं कूर्मोपदेशाद्वदेति वराहोक्तग्रहणीयनक्षत्रशुभफलानि गर्गसंहितायामभिहितानि तानि सर्वाण्यपि पितृचरणकृतटोडरानंदे राहुचारविलासतोऽवधार्याणि नात्राप्रस्तुतं लिख्यतेऽस्माभिः॥

## सूर्यचन्द्रोपरागयोररिष्टनिवृत्तये दानम्-

अशुभसूचकग्रहणप्रतीकारमाह-तदशुभमिति। तत्र सूर्यचन्द्रयोर्ग्रहणस्य संबंधि यदशुभं दुष्टफलं तस्य ध्वस्त्यै नाशाय जपः स्वर्णं गोदानं जपो गायत्र्यादीनां मंत्राणाम्। स्वर्णं प्रसिद्धं, गौः प्रसिद्धा भूमिर्वा। उपलक्षणत्वादन्येषां रूप्यादीनां यथाशक्ति दानं कार्यमिति शेषः। उक्तं च दैवज्ञमनोहरे-" इंदोःसूर्ये यदि विधिवशात्सैंहिकेयावमर्दस्तद्राश्यानां भवति नियतं ग्रामपुंसां विनाशः। तस्माच्छांतिं मुनिभिरुदितां तत्तदालोकपूर्वां कुर्याद्दानादिभिरिह नृणां नाशमायात्यरिष्टम्॥" इति। दानमपि तत्रैव-" सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम्। सदक्षिणं सवस्त्रं च श्रोत्रियाय निवेदयेत्॥ सौवर्णं राजतं वापि बिंबं कृत्वा स्वशक्तितः। उपरागोद्भवक्लेशच्छिदे विप्राय कल्पयेत्॥" दानमंत्रश्च-"तमोमय महाभीम सोमसूर्यविमर्दन। हेमनागप्रदानेन मम शांतिप्रदो भव॥" स्कंदपुराणे-" गोदानं भूमिदानं च स्वर्णदानं विशेषतः। ग्रहणे क्लेशनाशाय दैवज्ञाय निवेदयेत्॥" इति॥ किं चात्र देशविशेषः पात्रविशेषो द्रव्यविशेषश्च नापेक्षित इत्याह व्यासः-"सर्वं गंगासमं तोयं सर्वे ब्रह्मसमा द्विजाः॥ सर्वभूमिः कुरुक्षेत्रं ग्रहणे चन्द्रसूर्ययोः॥" इति॥ तत्र स्नानदानादिकं कस्मिन्काले कर्तव्यमित्याह-"ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते। मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते॥" इति। तस्मिन्काले जपादिकमपि विधेयम्॥ " सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम् "इति शिवरहस्योक्तेः। आदिशब्दात्सुरार्चनमपि॥

## जन्मर्क्षराश्योरेव सूर्यचन्द्रोपरागयोरनिष्टवारणाय शांतिरपि-

अत्र जन्मनक्षत्रजन्मराश्योर्ग्रहणे शांतिमाह वासिष्ठः-" यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ। तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः ॥ द्रव्यमंत्रविधानेन तस्य दोषापनुत्तये। उपरागस्नानविधिं सम्यग्वक्ष्ये समासतः ॥ मंडलं चतुरस्रं तु गोमयेन विलेपयेत्। गृहस्येशानदिग्भागे वर्णकैः समलंकृते ॥ स्थापयेच्चतुरः कुंभांस्तत्र तान्सामरात्मकान् ॥ सर्ववेदात्मकान् स्मृत्वा सर्वतीर्थात्मकाञ्छुभान् ॥ पल्लवोशीरसायुज्यशतौषधिसमन्वितान्। मृत्तिकाहेमरत्नेन दंतगुग्गुलुचन्दनैः। पंचगव्यामृतभ्राजत्स्फटिकैः सर्षपांबरैः। शंखकुंकुमतीर्थाम्बुरोचनैः पद्मकैर्युतान् ॥ चत्वारः प्राङ्मुखा विप्राः प्रार्थयेयुः पृथक् पृथक् ॥ अब्लिंगैर्वारुणैः सूक्तैः स्वस्तिवाचनपूर्वकैः ॥ तिलहोमं व्याहृतिभिः सहस्रं चाष्टसंयुतम्। एवं कृत्वा प्रयत्नेन स्नानकर्म समाचरेत् ॥ आमंत्र्य नवभिर्मंत्रैः कुंभान्संकल्पपूर्वकान्। एतानेव ततो मंत्रान्स्वर्णपट्टे च संलिखेत् ॥ कर्तुः शिरसि तं बद्ध्वा चाब्लिंगैर्वेदमंत्रकैः। सुमंत्रितैः कुम्भजलैः स्नाप्य नीराजयेत्ततः ॥ दध्याज्यं प्रददेद्देभ्यः शुक्लमाल्यांबरः शुचिः। ऋत्विग्भ्यो दक्षिणां दद्याच्छिष्टेभ्यश्च स्वशक्तितः ॥ योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः। सहस्रनयनश्चंद्रग्रहपीडां व्यपोहतु ॥ मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः। चन्द्रोपरागसंभूतामाग्निः पीडां व्यपोहतु ॥ यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः ॥ यमश्चंद्रोपरागस्य ग्रहपीडां व्यपोहतु ॥ रक्षोगणाधिपः साक्षात्प्रलयानलसंनिभः ॥ खड्गव्यग्रोऽसिकायश्च रक्षःपीडां व्यपोहतु। नागपाशधरो देवः सदा च नरवाहनः ॥ वरुणोंबुपतिश्चंद्रग्रहपीडां व्यपोहतु। प्राणरूपो हि लोकानां वायुः कृष्णमृगप्रियः ॥ वायुश्चंद्रोपरागस्य पीडामत्र व्यपोहतु । योसौ निधिपतिर्देवः खड्गशूलगदाधरः। चन्द्रोपरागकलुषां पीडां चापि व्यपोहतु ॥ योसाविंदुधरो रुद्रः पिनाकी वृषवाहनः ॥ चन्द्रोपरागपापानि नाशयत्वथ शंकरः। त्रैलोक्ये यानि भूतानि चराणि स्थावराणि च ॥ ब्रह्मविष्ण्वर्कयुक्तानि तानि पापं दहंतु मे। आमंत्रणे लेखने चाप्येते पूजनमंत्रकाः अर्चयित्वा पितॄन्देवान् गोभूस्वर्णवरादिभिः। अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् ॥ न तस्य ग्रहपीडा स्याद्यानबन्धुधनक्षयः। परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥ सूर्यग्रहेऽप्येवमेव सूर्यनाम्ना विधीयते ॥" इति वृद्धवसिष्ठप्रोक्ता ग्रहणशांतिः समाप्ता ॥ अत्र यद्यपि जन्मराशौ धनक्षय इत्युक्तम् । तत्र च दोषाल्पताप्रतिपादनेन शांत्यकर्तव्यता प्रतीयते । तथापि प्राग्विलिखितबहुवचस्सु विरुद्धफलाभिधानादेवास्य जन्मशशिन्यपि ग्रहणे शांतिर्विधेया। उभयानुवादेन शांत्यभिधानात्। उक्तं च मत्स्यपुराणे-"यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः । तस्य शांतिं प्रवक्ष्यामि मंत्रौषधिविधानतः ॥ " इति ॥ अतो जन्मनक्षत्रजन्मराशिव्यतिरिक्ते विरुद्ध ग्रहणे शांतिर्न विधेया। वचनाभावात्। किंतु स्वविभवानुरूपं दानादि विधेयमिति तात्पर्यार्थः। सूर्यग्रहेऽप्येवमेवेति ॥ " योसौ वज्रधरो देव आदित्यानां प्रभुर्मतः। सहस्रकिरणः सूर्यो ग्रहपीडां व्यपोहतु" इत्युक्तदिशा चंद्रपदस्थाने सूर्यपदं पूर्वमंत्रश्लोकेषु प्रयोज्यमित्यर्थः ॥

## दृष्ट एव सूर्यस्य चन्द्रस्य चोपरागोऽरिष्टजनकः इति शङ्का-

अथेदं ग्रहणं स्थानविशेषेणानिष्टजनकमित्युक्तम्। तत्र किं ग्रहणं दृष्टमदृष्टमित्याह-अथो-

इति। उक्तं च "जन्मसप्ताष्टरिःफांकदशमस्थे निशाकरे। दुष्टोनिष्टप्रदो राहुर्जन्मर्क्षे निधनेपि च॥" इति। जन्मर्क्षे जन्मनक्षत्रे। निधनं वधतारा सप्तमी।अत्र दुष्ट इति पदश्रवणाद्दुष्टस्थानावस्थितो राहुः पुंसां दोषजनकः। यदा तु मेघाद्यावरणेन गृहमध्यावस्थितस्याचक्षुष्मतोपि पुंसो राहुदर्शनाभावे सत्यप्यरिष्टेऽरिष्टं नास्ति। एवं चांधस्य यत्र कुत्राप्यवस्थितस्य गृहाद्बहिर्गंतुमशक्नुवतो वृद्धातुरादेश्च सर्वारिष्टं स्नानादि वा नास्ति इति तेषामाशयः॥

## स्नानप्रयोजकत्वं शास्त्रदृष्टस्य ग्रहणस्येति सिद्धान्तः–

अत्रेदं कथ्यते। किमिदं ग्रहणं दृष्टमेव स्नानाद्यधिकारसंपादकमुत मेघाद्यावरणेनादृष्टमपि। कुतः। उभयथा वचनोपलब्धेः। तथाहि, वृद्धवसिष्ठः–"सर्वेषामेव वर्णानां सूतकं राहुदर्शने। सचैलं तु भवेत्स्नानं सूतकान्नं विवर्जयेत्॥"इति। षट्त्रिंशन्मते–"सर्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत्॥" इति। शृतं पक्वम्।"शृतं पाके" इति निपातनात्। यद्यपि तस्मिन् सूत्रे क्षीरहविषोरेवेति महाभाष्यकृतोक्तम्, तथापि महामुनिप्रयोगादन्यस्मिन्नपि द्रव्य ओदनादौ पाकसामान्यवद्वृत्तिः। विष्णुः–"राहुदर्शनदत्तं हि श्राद्धमाचंद्रतारकम्" इति। शातातपः–"स्नानदानतपःश्राद्धमनंतं राहुदर्शने" इति। एवमादीनि वचांसि दर्शनपदसहितान्युपलभ्यंते।अन्यथापि वसिष्ठः–"ग्रहणे संक्रमे वापि न स्नायाद्यदि मानवः। सप्तजन्मसु कुष्ठी स्याद्दुःखभागी च जायते॥" इति। लिंगपुराणेपि–"चन्द्रसूर्यग्रहे स्नायात्सूतके मृतकेपि च। अस्नायी मृत्युमाप्नोति स्नायी पापं न विंदति॥" इति। एवमादीनि दर्शनपदानाक्रांतानि वचांस्युपलभ्यंते। तत्र दर्शनवादिनः आहुः दर्शनपदानाक्रांतेषु वचस्सु ग्रहणस्य निमित्तत्वं च प्रतिपाद्यते। "ग्रहणे संक्रमे वापि" इति निमित्तसप्तम्युपलंभात्। ज्ञातमेव च ग्रहणं स्नानदानादिकं प्रति निमित्तं भवति। तज्ज्ञानापेक्षायां च राहुदर्शनपदोपेतवचनालोचनेन चाक्षुषज्ञानस्यैव निमित्तत्वम्। इतश्चाक्षुष एव ज्ञाने दर्शनस्य मुख्यत्वं ज्योतिःशास्त्रीयज्ञाने तु लक्षणाप्रसक्तिः। एवं सति मेघाच्छन्नग्रहणदिवसजातचंद्रग्रहणरात्रिभवसूर्यग्रहणेषु न स्नानदानादावधिकारः। तस्माद्ग्रहणं दृष्ट्वा स्नानदानादिकं विधेयामित्यर्थः संपन्नो भवति।नैतत्सहृदयहृदयंगमम्।यतो वचनेषु राहुदर्शनग्रहपदयोः समानार्थकता नास्ति। कथम्। "अदृश्यरूपाः कालस्य मूर्तयो गणकाश्रिताः। शीघ्रमंदोच्चपाताख्या ग्रहाणां गतिहेतवः॥" इति सूर्यसिद्धांते चंद्रादिग्रहपातानामदृश्यतोक्ता॥ पातो राहुश्च पर्यायः। उक्तं च तत्रैव–"दक्षिणोत्तरयोरेव पातो राहुश्च रंहसा। विक्षिपत्येष विक्षेपश्चंद्रादीनामपक्रमात्॥" इति। केशवार्केणाप्युक्तं–"पर्यायेण तु राहुपातयोर्नामनी विधुरेव तांत्रिकाः" इति॥ अतो राहुदर्शनमेव गगनकुसुमायमानम्। ननु ग्रहणे सूर्यचंद्रयोश्छादको राहुर्दृश्य एव। अतएव 'राहुग्रस्ते निशाकरे' इत्यादिपुराणोक्तिः साधीयसीति चेन्न। "भानोर्भार्धे महीच्छाया तत्तुल्येऽर्कसमेपि वा। शशांकपाते ग्रहणं कियद्भागाधिकोनके॥" इत्युपक्रम्य "छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत्। भूच्छायां प्राङ्मुखश्चंद्रो विशत्यस्य भवेदसौ॥" इति। असौ भूच्छायास्य चंद्रस्य छादको भवेदित्यर्थः–इति सूर्यसिद्धांतोक्तः स्पष्ट एव छाद्यच्छादकभावोऽभिहितः॥

## पौराणिकोक्तिविरोधपरिहारः-

पुराणेन सह विरोधपरिहारस्तु—"दिग्देशकालावरणादिभेदान्नच्छादको राहुरिति ब्रुवंति । यन्मानिनः केवलगोलविद्यां स्वसंहितावेदपुराणवाक्यम् ॥" इति पूर्वपक्षं विधाय ततो "राहुः कुभामंडलगः शशांकम्" इत्यादिना "तमोमयः शंभुवरप्रदानात्सर्वागमानामविरुद्धमेतत्—" इत्यन्तेन भास्कराचार्यैरेवोक्तः । तस्मिन्काले सान्निध्यमस्य तेनोपचर्यते राहुरिति वराहेण उक्तम् । तस्माद्राहुदर्शनं तु नास्त्येव ॥ भवन्मते दर्शनं चाक्षुषमेवोच्यते नान्यत् । एवं सति राहोर्दर्शनमिति तत्पुरुषोऽनुपपन्नः । अथ तु समीपलक्षणकदर्शनशब्दमंगीकृत्य तदर्थः क्रियते । तदपि यस्य स्वरूपमेवानुपपन्नं तस्य सामीप्यं तु सुतरामिति बालैरप्येतद्बुध्यते । तस्माद्दर्शनशब्देन नोपरागो लक्ष्यते राहुदर्शनं राहूपरागस्तस्मिन् राहुदर्शन इति । अयमर्थः । राहुर्नाम पातः । तस्य संबंधेन दर्शनमुपराग इति । न च राहुरेव लक्षणयोपरागपरः, तस्य दर्शनमिति पूर्वपक्षाभिमतार्थसिद्धिरिति वाच्यम् ॥ लक्षणा त्वर्थांतरासंभवे सति वक्तव्या ॥ "अत्यंतादर्शनं राहोस्तथाचात्यंतदर्शने । प्रजापीडा विनिर्देश्या व्याधिदुर्भिक्षतस्करैः ॥" इति विष्णुधर्मोत्तरादिवाक्येषु पदांतरासन्निधानाद्राहुदर्शनेनोपरागो लक्ष्यते । इदं च राहोः पातनामकं ग्रहगतिरूपमर्थांतरमस्तीत्यतो राहुदर्शनग्रहपातयोः समानार्थकतास्तीत्येवं च सिद्धमिति प्रागुक्तानां सर्ववचसां ग्रहणे स्नायादित्येव वाक्यार्थः फलितो भवति ॥ किंच ग्रहणे चाक्षुषमेव दर्शनं विवक्षितं चेत्तदा "नेक्षेतोद्यंतमादित्यं नास्तं यांतं कथंचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥" इत्युक्तोपरक्तसूर्यदर्शननिषेधो नोपपद्येत ॥ नन्वयं निषेधः सूर्योपरागदर्शन एव न चन्द्रोपराग इति चेन्न । 'नाशुची राहुतारकाम्' इत्यत्र राहुभा त्वग्रहणाद्रविचन्द्रोपरागद्वयविषयकोपसंहारस्य युक्तत्वात् ॥ अशुचेरजस्वलापतितादेर्ग्रहणं तु दोषाधिक्यसूचनार्थम् । यथा श्राद्धे कुलीनानां ब्राह्मणानामामंत्रणे उक्ते अन्येषां निषिद्धत्वादेव कुण्डगोलकब्राह्मणानामामंत्रणेऽसिद्धे पुनर्निषेधो दोषाधिक्यार्थमेव । "भास्करालोकनाश्लीलपरिवादं विवर्जयेत्" इति स्मृतिवाक्यस्य तूद्यदस्तगाम्यादित्यदर्शनपरतया व्याख्यानस्य युक्तत्वात् । केचित्त दर्शनादर्शनविषयकयोर्विध्योस्तुल्यबलत्वात्सकृद्दृष्ट्वा स्नायादिति व्याचख्युः । तच्चिंत्यम् । "जन्मसप्ताष्टरिःफांकैः" इत्यादिना सामान्यतो निषिद्धस्योपरक्तदर्शनस्य पुनर्निषेधात्प्रागुक्तदिशा राहुदर्शनपदस्य राहूपरागलक्षकत्वेन तुल्यबलत्वाभावाच्च । तस्मादुपरक्तयोः सूर्याचंद्रमसोर्यस्य कस्यापि दर्शननिषेधसत्त्वात्, ग्रहणे च स्नानदानाद्युक्तेस्तज्ज्ञानं, च ज्योतिःशास्त्रैकदेशगणितग्रन्थेभ्यो बुद्ध्वा तस्मिन्काले स्नानदानादिविधेयमिति सिद्धांतः । अत एव मेघाद्यावृतेऽप्युपरागे स्नानादिकं विधेयमेव ॥

## दिवाचन्द्रस्य रात्रौ रवेश्च ग्रहणे न स्नानादि-

ननु गणितग्रन्थाधीनमुपरागज्ञानमेवं चेत्स्नानादिप्रयोजकं तदा रात्रौ सूर्यग्रहणस्य दिवा चंद्रग्रहणस्य जायमानत्वात्तदापि स्नानादिकं स्यात् । सत्यमेवैतत् । वचनात्तथा न क्रियते । तदुक्तं

निगमे—"सूर्यग्रहो यदा रात्रौ दिवा चंद्रग्रहो यदि। तत्र स्नानं न कुर्वीत दद्याद्दानं न च कचित्" इति। अत एव तादृशे ग्रहणे दृष्टेपि दौष्ट्यं नास्तीत्यपि सूच्यते ॥ न चैतदभावे प्रतिषेधादित्यधिकरणे न पृथिव्यामग्निश्चेतव्यो नांतरिक्षे न दिवीत्युदाहृतवाक्यवन्नित्यानुवाद इति वाच्यम्॥ विधिशेषत्वाभावात्। यथा पृथिव्यामग्निर्न चेतव्य इति निषेधविधिरस्ति तत्र नांतरिक्षे न दिवीति दृष्टांतो निषेधविधेः शेषस्तथात्र सूर्यग्रहो यदा रात्रावित्येतद्वाक्यस्य विधेः शेष इति ॥ किंचैवं ब्रुवतस्तव मतेऽनर्थकमेव वाक्यं स्यात्। नचैतद्युक्तम्। अतएवाह जाबालिः—"संक्रांतेः पुण्यकालस्तु षोडशोभयतः कलाः। चंद्रसूर्योपरागे तु यावद्दर्शनगोचराः॥इति। ग्रस्तस्यास्तमनपर्यंतं दर्शनगोचरत्वात्तावान्कालः पुण्यकालो भवतीति माधवो व्याचख्यौ। तदुक्तं विश्वरूपनिर्णये—"दिवा चन्द्रग्रहो रात्रौ सूर्यपर्व न पुण्यदम्। संधिस्थं पुण्यवज्ज्ञेयं यावद्दर्शनगोचरम्—" इति। अन्ये तु मेघावृते चोपरागे गणितागततत्स्थितिघटिकाः पुण्यकाल इत्याहुः॥ दर्शने त्वेवंविधे निर्णये भुजवृत्तादुपरिस्थितत्वमेव विवक्षितम्। तदाह वसिष्ठः स्वसिद्धांते—"सूर्यस्यादर्शनं रात्रिर्दिनं तद्दर्शनात्मकम्। भुजवृत्तादुपरि च स्थितोऽर्को दर्शनं स्मृतम्॥" इति। अर्क इत्युपलक्षणं चंद्रादिग्रहनक्षत्राणाम्। आकाशप्रदेशः समंताद्भूसंलग्न इव यत्र भाति स प्रदेशो भुजशब्दवाच्यः। अतएव विष्णुधर्मोत्तरे—"अहोरात्रं न भोक्तव्यं स्नानं कृत्वा ततः परम्" इति॥ ग्रस्तास्ते भृगुः—"ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि। तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः" इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दौ भुजवृत्तोपरिस्थितत्वोपलक्षकौ। अन्यथा मेघाद्यावरणेन परदिवसे दर्शनाभावे उपवासः प्रसज्येत। तथा च यत्र स्पर्शकाले ग्रहणं दृष्ट्वा स्नानं विहितं तत्रांतरा मेघावरणात्सूर्यचन्द्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्यात्तदाप्युपवासप्रसंगः। न च सर्वे शिष्टास्तथाचरन्ति। तस्माद्दर्शनमभ्युपेत्य शास्त्रीयज्ञानपरतयैव व्यवस्था कर्तव्या। तस्यां च सत्यां पूर्वोक्तरीत्या च मेघानावृतेऽप्युपरागे तमदृष्ट्वैव प्रशस्तचक्षुषा अंधेन च गंतुमशक्नुवद्भिर्वृद्धातुरैश्च स्नानदानादिकं विधेयमिति फलितोऽर्थः। अत एव भागवते—रविग्रहे कुरुक्षेत्रे स्नानाद्यर्थं मिलितानां पांडवीयलोकानां मध्ये धृतराष्ट्रोपि परिगणित इति शिष्टाचारोप्यस्ति। एवं च सत्यरिष्टजनकत्वाभावेपि ग्रहणदर्शननिषेधः किंपुनरनिष्टजनकत्वे। तस्माज्जन्मशशांकेत्यादिपद्यं निर्मूलत्वाद्युक्त्यसहत्वाच्चोपेक्ष्यम्। किंच प्रत्यक्षोपलभ्यमानवासिष्ठमत्स्यपुराणादिवाक्येषु दर्शनपदाभावाच्च। अतएव मूले परे इति पदं प्रयुक्तम्॥ शान्तिस्तु दर्शनाभावेपि विधातुमुचिता॥ यतोरिष्टयोगानां स्वरूपवतामेवारिष्टजनकत्वमस्ति। अन्यथा ग्रहवेषस्योत्पातादिसूचितारिष्टनिवृत्तिहेतुः शांतिदर्शनाभावे न विधीयेत इत्यलमतिप्रसक्तानुप्रसक्तेन॥ ६॥

## चन्द्रबले विशेषः—

**पापांतः पापयुग्द्यूने पापाच्चन्द्रः शुभोप्यसन्॥**
**शुभांशे चाधिमित्रांशे गुरुदृष्टोऽशुभोऽपि सन्॥ ७॥**

अथ चंद्रबले विशेषमनुष्टुभाह–पापांत इति।चन्द्रः शुभोपि शुभ फलदोपि पापांतः पापयुक् द्यूने पापद्वयमध्यवर्ती पापग्रहयुक्तः पापः द्यूने सप्तमस्थाने वर्तमानश्चेत्स्यात्तदा असन् अशुभ एव । यदात्वशुभोप्यशुभफलदातापि चंद्रः शुभांशे सौम्यग्रहनवांशे स्यादथवाधिपस्य नवांशे स्यात्तदा गुरुणा बृहस्पतिना दृष्टः सन् शुभफलदाता भवेत् । यदाह राजमार्तण्डः–"पापग्रहेण संयुक्तः पापजामित्रसंस्थितः । पापद्वयान्तापतितः शुभोप्यशुभदः शशी ॥ अनिष्टस्थान संस्थोपि भवेच्छुभकरः शशी । सौम्यभागेधिमित्रांशे गुरुणा वापि वीक्षिते ॥" इति ॥ ७ ॥

## चन्द्रबलं प्रकारान्तरेण–

**सितासितादौ सद्दृष्टे चंद्रे पक्षौ शुभावुभौ ॥**
**व्यत्यासे चाशुभौ प्रोक्तौ संकटेऽब्जबलं त्विदम् ॥ ८ ॥**

अथ चन्द्रबलस्य विधानांतरमनुष्टुभाह–सितेति । सितादौ शुक्लपक्षप्रतिपदि समीचीने चन्द्रे सति संपूर्ण शुक्लपक्षः शुभः । असितादौ कृष्णपक्षप्रतिपदि चंद्रेऽसमीचीने सति संपूर्णः कृष्णपक्षः शुभः । व्यत्यासे च पूर्वोक्तादर्थाद्वैपरीत्ये द्वावपि पक्षावनिष्टौ । यदा शुक्लपक्षप्रतिपदि चंद्रो दुष्टः–तदा सकलः शुक्लपक्षोऽनिष्टः । यदा कृष्णपक्षप्रतिपदि चंद्रः शुभस्तदा संपूर्णः कृष्णपक्षोऽनिष्टः इति । उक्तं च रत्नमालायां–"वलक्षपक्षादिगते हिमांशौ शुभे शुभं पक्षमुदाहरंति । सितेतरादावशुभे शुभे च पक्षावनिष्टौ भवतोऽन्यथा तौ ॥" कश्यपोपि–"मासादौंदुःशुभो यस्य तत्पक्षस्तस्य शोभनः । कृष्णादौंदौ त्वशुभदे शुभं तद्व्यत्ययेऽन्यथा॥" इति । इदमेतादृशमब्जबलं चन्द्रबलं तु संकटे विवाहयात्रादाववश्यकर्त्तव्ये तात्कालिकचंद्रबलाभावे ग्राह्यं नान्यथेत्यर्थः ॥ ८ ॥

## ग्रहदोषनिवृत्त्यै नवरत्नधारणम्–

**वज्रं शुक्रेऽब्जे सुमुक्ता प्रवालं भौमेऽगौ गोमेदमार्कौ सुनीलम् ॥**
**केतौ वैडूर्यं गुरौपुष्पकं ज्ञेपाचिःप्राङ्माणिक्यमर्कैतुमध्ये॥९॥**

ग्रहाणां दौष्ट्यपरिहारपूर्वकं तुष्टिसंपादनार्थं नवरत्नसमुदायधारणं शालिन्याह–वज्रं शुक्रे इति । अत्रैकां सुवर्णमुद्रिकां कृत्वा तत्र दशभागे वर्तुलाकारे नवधा विभक्ते प्रागादिक्रमेण नवरत्नानि दृढं निधेयानि । तत्र प्रागिति पंचम्यंतमव्ययम् । पंचमी चेयं ल्यब्लोपे । अतः प्रागादिदिशो लक्ष्यीकृत्येयमर्थो जातः । तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रकं हीरकं निधेयम् । एवं चन्द्रप्रीत्यर्थं शोभनं मुक्ताफलमाग्नेय्याम् । भौमप्रीत्यर्थं प्रवालं दक्षिणस्याम् । अगौ राहौ तत्प्रीत्यर्थं गोमेदं नैर्ऋत्याम् । आर्कौ शनिप्रीतये शोभनं नीलं पश्चिमायाम् । केतुप्रीतये वैडूर्यं वायव्याम् । गुरुप्रीतये पुष्पकं पुष्परागम् उत्तरस्याम् बुधप्रीतये पाचिः ईशान्याम् । सूर्यप्रीतये माणिक्यं मध्यमकोष्ठे इति ॥ ९ ॥

## दरिद्राणां रत्नधारणोपायः–

**माणिक्यमुक्ताफलविद्रुमाणि गारुत्मकं पुष्पकवज्रनीलम् ॥**
**गोमेदवैडूर्यकमर्कतः स्यूरत्नान्यथो ज्ञस्य मुदे सुवर्णम् ॥१०॥**

अथ सति द्रव्यसामर्थ्ये नवरत्नसमुदायधारणस्य शक्यत्वात्तदुक्त्वेदानीमसति द्रव्यसामर्थ्ये यद्ग्रहकृतं दौष्ट्यं तद्ग्रहरत्नधारणमिंद्रवज्रयाह—माणिक्येति ॥ सूर्यप्रीत्यर्थं माणिक्यं धार्यम् । एवं चन्द्रस्य मुक्ताफलं भौमस्य विद्रुमं बुधस्य गारुत्मकं गरुडपाचिः गुरोः पुष्पकं पुष्परागः शुक्रस्य वज्रं शनेर्नीलम् । लहसुनिया इति कान्यकुब्जभाषयाहुः । राहोर्गोमेदं केतोर्वैडूर्यमित्येवमर्कतोर्कादीनां ग्रहाणां रत्नानि धार्याणि स्युः । तत्र यद्ग्रहकृतं दौष्ट्यं तस्य ग्रहस्य तुष्ट्यै तद्रत्नं धार्यमित्यर्थः । यदाह कश्यपः— "सूर्यादीनां च सन्तुष्ट्यै माणिक्यं मौक्तिकं तथा । सुविद्रुमं मारकतं पुष्परागं च वज्रकम् ॥ नीलगोमेदवैदूर्यं धार्यं स्वस्वदृढक्रमात् ॥" अथो ज्ञस्य मुदे सुवर्णमित्यग्रिमश्लोकेन सम्बन्धः ॥ १० ॥

### तत्राप्यशक्तावल्पमूल्यरत्नधारणम्—

**धार्यं लाजावर्त्तकं राहुकेत्वो रौप्यं शुक्रेंद्वोश्च मुक्ता गुरोस्तु ॥**
**लोहं मंदस्यारभान्वोः प्रवालंताराजन्मर्क्षात्त्रिरावृत्तितःस्यात् ॥ ११ ॥**

अथ महामूल्यरत्नधारणे यस्य सामर्थ्याभावस्तदर्थमल्पमूल्यानि रत्नानि ताराबलं च शालिन्याह—धार्यमिति ॥ अथो ज्ञस्य बुधस्य मुदे सन्तोषार्थं सुवर्णं यथाशक्ति धार्यम् । राहुकेत्वोः प्रीत्यै लाजावर्त्तकं मणिविशेषो धार्यः । एवं शुक्रेंद्वोस्तुष्ट्यै रौप्यम् । गुरोस्तुष्ट्यै मुक्ता । मन्दस्य शनेस्तुष्ट्यै लोहम् । आरभान्वोर्मंगलसूर्ययोः प्रीत्यै प्रवालं धार्यम् । उक्तं च श्रीपतिना— "धार्यं तुष्ट्यै विद्रुमं भौमभान्वो रूप्यं शुक्रेंद्वोश्च हेमेंदुजस्य । मुक्ता सूरेर्लोहमर्कात्मजस्य लाजावर्तः कीर्तितः शेषयोश्च ॥" इति ॥ सूरेः सुरगुरोः । शेषयो राहुकेत्वोः ।

### औषधीमूलानि धार्याणि ग्रहदोषे—

दीपिकाकारस्तु औषधीमूलानि धार्याणीत्याह—"मूलं धार्यं त्रिशूल्याः सवितरि विगुणक्षीरिकामूलमिंदौ जिह्वाहिर्भूमिपुत्रे रजनिकरसुते वृद्धदारोश्च मूलम् । भार्गी जीवेऽथ शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं विच्छोलं चार्कपुत्रे तमसि मलयजं केतुदोषेऽश्वगंधम् ॥" इति ॥ त्रिशूली बिल्वः । क्षीरिका क्षीरिणी । जिह्वाहिनागजिह्वा । वृद्धदारुर्विधारः । भार्ङ्गी प्रसिद्धा सिंहपुच्छं वा घोटं चरिवारेति मध्यदेशभाषया प्रसिद्धम् । मलयजं चन्दनम् । अश्वगंधं प्रसिद्धम् । एतदोषधीमूलधारणं सर्वथा रत्नधारणाशक्तौ वेदितव्यम् ॥

### ताराबलानयनम्—

तारेति ॥ यद्दिने ताराबलमस्ति वा नवेति विचारश्चिकीर्षितस्तद्दिने या तारा स जन्मर्क्षात् जन्मनक्षत्रात्त्रिरावृत्तितः आवृत्तित्रयेण गणनीया स्यात् । त्रिरिति "द्वित्रिचतुर्भ्यः सुच्" इति सुजंतमव्ययम् । स्वजन्मनक्षत्रादिननक्षत्रे गणिते नवभिर्भक्ते तिस्र आवृत्तयो भवन्ति । अवशिष्टतारायाः शुभाशुभं वाच्यमिति फलितोऽर्थः ॥ ११ ॥

### ताराणां जन्मादिसंज्ञाविशेषाः—

**जन्माख्यसंपद्विपदः क्षेमप्रत्यरिसाधकाः ॥**
**वधमैत्रातिमैत्राः स्युस्तारा नामसदृक्फलाः ॥ १२ ॥**

अथ शेषक्रमेण सकलास्तारासंज्ञा अनुष्टुभाह-जन्माख्येति ॥ स्पष्टार्थमिदं पद्यम् । यदाह नारदः-"जन्मसंपद्विपत्क्षेमप्रत्यरिः साधको वधः । मित्रं परममित्रं तु जन्मभाच्च पुनः पुनः ॥" इति ॥ एवं तारा गणनीया इति शेषः । तत्र तृतीयापंचमीसप्तम्यस्तारा निषिद्धाः । अनिष्टफलश्रवणात् । अर्थादन्याः समीचीनाः । समीचीनफलश्रवणात् । उक्तं च-"जन्मतारा द्वितीया च षष्ठी चैव चतुर्थिका । अष्टमी नवमी चैव षट् तु ताराः शुभावहाः ॥" इति ॥ जन्मनक्षत्रं तु कार्यविशेषे गृहीतं प्रतिषिद्धं च । तच्चाग्रे निर्णेष्यते । तदिदं ताराबलं कृष्णपक्षविषयं न तूभयपक्षसाधारणम् । तदाह नारदः-"कृष्णे बलवती तारा शुक्लपक्षे बली शशी" इति ॥ युक्तं चैतत् ॥ यतोऽत्रार्थवादो रत्नमालायां-" न खलु बहुलपक्षे शीतरश्मेः प्रभावः कथितमिह हि तारावीर्यमार्यैः प्रधानम् । अतिविकलशरीरे प्रेयसि प्रोषिते वा प्रभवति खलु कर्तुं सर्वकार्याणि योषा ॥ शुक्ले पक्षे शीतरश्मिर्बलीयानप्राधान्यं तारकायास्तु तत्र । शक्त्या युक्त विद्यमानेपि कांते न स्वातंत्र्यं योषितः क्वापि दृष्टम् " इति ॥ १२ ॥

## दुष्टताराणां दोषपरिहारो द्विधा-

**मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो**
**दद्यात्प्रत्यरितारकासु लवणं सर्वो विपत्प्रत्यरिः ॥**
**मृत्युश्चादिमपर्यये न शुभदोऽथैषां द्वितीयेंशका**
**नादिप्रात्यतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः॥१३॥**

अथावश्यककृत्ये दुष्टताराणां प्रकारद्वयेन परिहारं शार्दूलविक्रीडितेनाह-मृत्यौ स्वर्णतिलानिति ॥ ( १ ) मृत्यौ सप्तम्यां वधतारायां स्वर्णतिलान् यथाशक्ति सुवर्णयुक्तांस्तिलान् ब्राह्मणाय दद्यात् । विपद्यपि विपत्संज्ञायां तृतीयतारायां गुडमिक्षुविकारं दद्यात् । त्रिजन्मसु तिसृषु जन्मतारासु शाकं प्रसिद्धं वृंताकादि दद्यात् । अथो प्रत्यरितारकासु पंचम्यां तारायां लवणं दद्यात् । तदाह नारदः-"जन्मत्रिपंचसप्ताख्यास्तारा नेष्टफलप्रदाः ॥ अनिष्टपरिहाराय दद्याद्दानं द्विजातये ॥ शाकं गुडं च लवणं सतिलं कांचनं क्रमात् ॥" इति॥ अत्र सतिलमिति विशेषणं कांचनपदस्य न लवणपदस्य । तेन वधतारायां सतिलं कांचनं देयम् । उक्तं च दीपिकायां-प्रत्यरौ लवणं दद्याच्छाकं दद्यात्त्रिजन्मसु । विपत्तारे गुडं दद्यान्निधने तिलकांचनम् ॥" इति ॥ ( २ ) द्वितीयः परिहारः उच्यते तत्रादिमपर्यये प्रथमावृत्तौ विपत्प्रत्यरिर्मृत्युश्च तृतीयपंचमीसप्तम्यस्ताराः सर्वा अपि सामान्यतः षष्टिघटिकात्मिका अपि न शुभदाः स्युः । अथ द्वितीये पयय द्वितीयावृत्तौ विपत्प्रत्यरिमृत्यूनामादिप्रांत्यतृतीयका अंशा न शुभदाः । विपत्तारायां प्रथमा विंशतिर्घटिकास्त्याज्याः । इतराश्चत्वारिंशच्छुभाः । प्रत्यरितारायां मध्यमा विंशतिर्घटिकास्त्याज्यास्तदुभयतो विंशतिर्विंशतिर्घटिकाः शुभाः । वधतारायामंतिमा विंशतिर्घटिकास्त्याज्या आद्याश्चत्वारिंशच्छुभा इति नवीना व्याकुर्वते ॥ जीर्णास्त्वंशशब्देन नक्षत्रचतुर्थांशमाहुः ॥ तथा सति आदिप्रांत्यतृतीयकाश्चरणाः क्रमेण निषिद्धाः इतरे शुभाः । अथ तृतीये पर्यये तृतीयावृत्तौ

विपत्प्रत्यारिमृत्यवश्चैते सर्वे षष्टिघटिकात्मका अपि शुभाः शोभनफलदाः स्मृताः । तथा च जगन्मोहने गुरुरित्युक्त्वा पठितं-"पर्याये प्रथमे वर्ज्या विपत्प्रत्यरिनैधनाः । द्वितीये त्वंशका वर्ज्यास्तृतीये त्वखिलाः शुभाः ॥ " इति ॥ द्वितीये पर्याये अंशकानाह स एव-"आद्यांशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः । बधे त्याज्यस्तृतीयोंशः शेषा अंशास्तु शोभनाः ॥" इति ॥ अत्रांशो नक्षत्रचतुर्थांश उच्यते किमत्र प्रमाणमिति चेत् ॥ उच्यते ॥ " जन्मर्क्षाद्दशमं कर्म संघातर्क्षं तु षोडशम् । अष्टादशं सामुदयं त्रयोविंशं विनाशनम् ॥ मानसं पञ्चविंशर्क्षं नाचरेच्छुभमेषु तु ॥ " इति नारदोक्तेर्वैनाशिकाख्यस्य त्रयोविंशस्य भस्य दुष्टत्वम् ॥

## तदपवादः-

तदपवादमाह च्यवनः-"वैनाशकाख्ये नक्षत्रे अष्टाशीत्यंशकं विना । शेषांशा शुभदा ज्ञेया जन्मनींदुगतांशकाः ॥ " इति । अत्र वैनाशिकं प्रत्यरिसंज्ञं तस्य चरमांशस्यानिष्टता प्राप्ता साष्टाशीत्यंशकं विनेत्यनेन बाध्यते इति । अतः ' एकत्र दृष्टः शास्त्रार्थोपरत्रापि विनियुज्यते' इति न्यायादत्रापि सैव व्याख्येति न नवीनमतं ज्यायः ॥ अप्रमाणत्वात् ॥ १३ ॥

## चन्द्रस्य राशौ द्वादशद्वादशावस्थागणनोपायः-

**षष्टि ६० घ्नं गतभं भुक्तघटीयुक्तं युगा ४ हतम् ॥**
**शराब्धि ४५ हृल्लब्धतोऽर्कशेषेऽवस्थाः क्रियाद्विधोः ॥ १४ ॥**

अथ चन्द्रावस्था वक्ष्यति । तद्गणनोपायमनुष्टुभाह-षष्टिघ्नमिति॥ अत्र चन्द्रस्य राशौ राशौ द्वादश द्वादश अवस्थाः सन्ति । यदाह नारदः-"चन्द्रस्य द्वादशावस्था राशौ राशौ यथाक्रमात् । यात्रोद्वाहादिके कार्ये संज्ञातुल्यफलप्रदाः ॥ " तत्राश्विनीमारभ्य गतभानि षष्ट्या ६० गुण्यानि वर्तमाननक्षत्रभुक्तानि कार्याणि । तानि पुनर्युगैश्चतुर्भिराहतानि शराब्धिहृत्पंचचत्वारिंशता भाज्यानि । यल्लब्धमागतं गतावस्थास्ताः । शेषं वर्तमानावस्थाः । तत्र लब्धांकस्यापि द्वादशाधिक्ये द्वादशभिर्भागे प्रवासाद्यवस्थाश्चन्द्रस्य गताः स्युः । ता अवस्था मेषराशेः पुंसः प्रवासादिसंज्ञा, वृषराशिस्थे चन्द्रे नष्टादिसंज्ञाः स्युः । एवं मिथुनादिदशराशिषु मृतादिसंज्ञा ह्यवस्थाः क्रमेण भवंतीत्यर्थः । यदाह नारदः-"षष्टिघ्नं चन्द्रनक्षत्रं तत्कालघटिकान्वितम् । वेदघ्नमिषुवेदाप्तमवस्थाभानुभाजिताः ॥ ". इति ॥ अत्रोपपत्तिः । एकैकस्मिन् राशौ द्वादश द्वादशावस्थाः-संति । सामान्यतो नक्षत्रभोगःषष्टिघटिकात्मक इत्येवं सति राशिभोगघटिकाः पंचत्रिंशदधिकशतं भवति ॥ तत्र त्रैराशिकं-यद्येताभि १३५ घटीभिर्द्वादशावस्था लभ्यंते तत्रेष्टघटीभिः किमिति । तत्रैकघट्या गुणनायां विकारानापत्तेर्द्वादशानामयमंको १३५ भाजको जातः ॥ यथा १२ अत्रानयोर्गुणकभाजकयोस्त्रिभिरपवर्तने गुणकाश्चत्वारः ४ । भाजकाः पंचचत्वारिंशत् ४५ । तत्कालघटीयोगस्तु न्यायप्राप्त एव । तथा द्वादशभागोपि । तदाधिक्यस्य निष्प्रयोजनत्वात् ॥ अत्रेदमवधेयम् यद्यपि नक्षत्राणां घटीन्यूनाधिकभावः संभवति तथापि षष्टिघटिकात्मकेन व्यवहारः कार्यः । विद्यमाननक्षत्रं भुक्तं तु स्वभोगं ज्ञात्वा षष्टिघटिकात्मकं कृत्वा तत्र योज्यम् । यथा यदि स्वभोगेन षष्टिघटिकाः

लभ्यंते तदेष्टघटीभिः किमिति त्रैराशिकेनेष्टघटीनां षष्टिर्गुणको नक्षत्रभोगो भाजक इति ॥ १४ ॥

### द्वादशावस्थानामानि फलानि च-

**प्रवासनाशौ मरणं जयश्च हास्यारतिक्रीडितसुप्तभक्ताः ॥**
**ज्वराख्यकंपस्थिरताद्यवस्थामेषात्क्रमान्नामसदृक्फलाःस्युः १५**

अथ द्वादशावस्थानामानि सफलान्युपजात्याह-प्रवासनाशाविति ॥ स्पष्टार्थमिदं पद्यम् । उक्तं च कश्यपेन-"प्रवासनष्टे च मृता जया हास्या रतिर्मुदा । सुप्ता भुक्ता ज्वरा कंपा सुस्थितिर्नामसन्निभाः ॥" इति ॥ मुदा-"षिद्भिदादिभ्योऽङ्" । ततष्टाप् ॥ १५ ॥

### ग्रहदोषशांतये सौषधजलस्नानं-दक्षिणाश्च-

**लाजाकुष्ठबलाप्रियंगुघनसिद्धार्थैर्निशादारुभिः**
**पुंखालोध्रयुतैर्जलैर्निगदितं स्नानं ग्रहोत्थाघहृत् ॥**
**धेनुः कंब्वरुणो वृषश्च कनकं पीतांबरं घोटकः**
**श्वेतो गौरसिता महासिरज इत्येता रवेर्दक्षिणाः ॥ १६ ॥**

अथ ग्रहाणां वैकृतपरिहारार्थं सौषधजलस्नानं दक्षिणाश्च शार्दूलविक्रीडितेनाह-लाजाकुष्ठमिति ॥ लाजाः भृष्टशालयः इति केचित् ॥ वस्तुतस्तु ओषधीसाहचर्याल्लाजाशब्देन लज्जावती गृह्यते । कुष्ठं प्रसिद्धम् । बला वरिया इति कान्यकुब्जभाषायामाहुः । प्रियंगुः फलिनी । घनो मुस्ता । सिद्धार्थाः सर्षपाः शिरसा इति महाराष्ट्राः । सरिस इति कान्यकुब्जाः । निशे हरिद्राद्वयम् । दारुःदेवदारुः। पुंखा शरपुंखा । लोध्रं प्रसिद्धम् । एतैरौषधैर्युतानि गंगादिजलानि तैः स्नानं दुष्टग्रहसूचितारिष्टनाशकं स्यात् । उक्तं च दीपिकायां-"सिद्धार्थलोध्ररजनीद्वयमुस्तधान्यं लामज्जकं सफलिनी सवचा च मांसी । स्नानं कुरु ग्रहगणप्रशमाय नित्यं सर्वे रविप्रभृतयः सुमुखीभवन्ति॥" दैवज्ञमनोहरेपि-"सप्रियंगुरजनीद्वयमांसी कुष्ठलाजसितसर्षपखण्डैः । वारिभिः सहवचैः सहलोध्रैः स्नानमत्ति निखिलग्रहपीडाम् ॥" इति । वारिभिस्तीर्थोदकैः ॥

### तत्र औषधस्नानानि ग्रहभेदेन-

रत्नमालायां तु प्रत्येकं ग्रहाणामौषधस्नानमुक्तम् । यथा ( १ )-"मनःशिलैलासुरदारुकुंकुमैरुशीरयष्टीमधुपद्मकान्वितैः। सताम्रपुष्पैर्विषमे स्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः॥ सूर्यस्येदम् ॥( २ )-पंचगव्यगजदानविमिश्रैः शंखशुक्तिकुमुदस्फटिकैश्च । शीतरश्मिकृतवैकृतहंतृ स्नानमेतदुदितं नृपतीनाम् ॥ चंद्रस्येदम् ॥ ( ३ )-बिल्वचंपकबलारुणपुष्पैर्हिंगुकल्कफलिनीबकुलैश्च । स्नानमद्भिरिह मांसियुताभिर्भौमदौस्थ्यविनिवारणमाहुः ॥ भौमस्येदम् ॥ ( ४ )-गोमयाक्षबफलैः ससरोजैः क्षौद्रशुक्तिनवमूलहेमभिः । स्नानमुक्तमिदमत्र भूभृता बोधनाशु-

भविनाशनं बुधैः " ॥ बुधस्येदम् ॥ ( ५ )-"मालतीकुसुमयुक्तसर्षपैः पल्लवैश्च मदयन्तिकोद्भवैः । क्षिप्रमंबुमधुकेन च स्फुटं वैकृतं गुरुकृतं विनिहन्ति ॥" गुरोरिदम् (६) एलया च शिलया समन्वितैर्वारिभिःसकलमूलकुंकुमैः।स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः॥ "शुक्रस्येदम्।(७)असिततिलांजनलोध्रबलाभिः शतकुसुमान्वितलाजयुताभिः।रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिमुख्यैः ॥शनेरिदम् । लोध्रगर्भतिलपत्रकमुक्ताहस्तिदानमृगनाभिपयोभिः । स्नानमार्त्तिमिह कृंतति राहोः साजमूत्रमिदमेव च केतोः ॥ "राहुकथितद्रव्यमजमूत्रसहितं केत्वर्थं स्यात् ॥ राहुकेत्वोरिदम् । अतएवोक्तं दीपिकायां-"प्रयोज्यमौषधस्नानं ग्रहविप्रसुरार्चनम् । ग्रहानुद्दिश्य होमो वा ग्रहाणां प्रीतिमिच्छता ॥ " तत्र ग्रहपूजाहोमौ वसिष्ठसंहितायां महता प्रबंधेनोक्तौ तत एवावगंतव्याविरयलमतिविस्तरेण ॥

## तत्र दक्षिणाः-

अथ रवेरिति ॥ रविमारभ्य दक्षिणा उच्यंते ॥ तत्र सूर्यप्रीत्यर्थं धेनुः । चंद्रप्रीत्यर्थं कंबुशंखः । कंबु इति नपुंसकलिंगं पृथक्पदम् । 'शंखः स्यात्कंबुरस्त्रियाम्' इत्यमरोक्तेः । मंगलप्रीत्यर्थमरुण आरक्तो वृषः । बुधप्रीत्यर्थं कनकं सुवर्णम् । गुरुप्रीत्यर्थं पीतांबरम् । तच्च यथाविभवं कार्पासं कोशजं च । शुक्रप्रीत्यर्थं श्वेतो घोटकः । शनिप्रीत्यर्थमसिता श्यामवर्णा गौः । राहुप्रीत्यर्थं महाऽसिर्बहुमूल्यखड्गः । केतुप्रीत्यर्थमजः छागः । एवमेषां दक्षिणेत्यर्थः । यदाह वसिष्ठः-"धेनुं शंखं रक्तवृषं हेमपीतांबरद्वयम् । श्वेताश्वं कृष्णधेनुं च कृष्णलोहमजं क्रमात् ॥ स्वर्णेन वा समीकृत्य दातव्या दक्षिणा ततः । आचार्यार्थं जापकेभ्यो ब्राह्मणेभ्योऽथ शक्तितः ॥ " इति ॥

## तत्र दानान्तराणि विभवानुसारेणान्येषामपि-

अत्र प्रत्येकं दानमंत्रास्तत्रैवोक्ताः ग्रंथभूयस्त्वभयान्न लिख्यंते "एवं यः कुरुते सम्यग्ग्रहयज्ञं नृपोत्तमः । सर्वान् कामानवाप्नोति शुभस्थानफलं लभेत् ॥" नृपोत्तम इत्युपलक्षणम् । तेन यः कश्चिद्गृहस्थोपि कुर्यात् ॥ तत्र स्वविभवानुरूपाणि ग्रहदानानि प्रोक्तानि कैश्चित् । यथा-"कौसुंभवस्त्रं गुडहेमताम्रं माणिक्यगोधूमसुवर्णवस्त्रम् । सवत्सगोदानमितिप्रगीतं दुष्टार्थमार्तौ हि मसूरिकाश्च" । सूर्यायेदम् ॥ घृतकलशं सितवस्त्रं दधिशंखं चैव मौक्तिकसुवर्णे । रजतं च संप्रदद्याच्चंद्रारिष्टोपशमनाय ॥ " चंद्रायेदम् । "प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीरपुष्पम् । आरक्तवस्त्रं गुरुहेमताम्रं दुष्टाय भौमाय सचंदनं हि ॥"भौमायेदम् । "नीलं वस्त्रं मुद्गदानं बुधाय रत्नं पाची दासिकाहेमसर्पिः । कांस्यं दंतः कुंजरश्चाथ मेषो रौप्यं सर्वं पुष्पजायादिकं च ॥" बुधायेदम् । "अश्वः सुवर्णं शुकपीतवस्त्रं सपीतधान्यं लवणं सपुष्पम् । सशर्करं तद्रजनीप्रयुक्तं दुष्टार्थशांत्यै गुरवे प्रदेयम् ॥" गुरवे इदम् । रजनी हरिद्रा॥"चित्रवस्त्रमपि दानमर्चिते दुष्टगे मुनिवरैः परिगीतम् । तंडुलं घृतसुवर्णरूप्यकं वज्रकं परिमलो धवलोश्वः ॥"शुक्रायेदम् ॥ "नीलकं महिषं कृष्णं वस्त्रं लोहं सदक्षिणम् ॥ दद्याच्च दक्षिणायुक्तं शनिदौष्ट्यप्रशांतये ॥" सूर्यजायेदम् ।" राहोर्दानमिदं मेषो गोमेदं लोहकंबलौ । सुवर्णं नागरूप्यं च सतिलं ताम्रभाजनम् ॥ " राहवे इदम् । "केतोर्वैदूर्यममलं तैलं मृगमदस्तथा । ऊर्णास्तिलाश्च संयुक्ता दद्यात्क्लेशापनुत्तये ॥" केतवे इदम् ॥

## दानेषु प्रकारान्तरम्-

अन्यच्च संहिताप्रदीपे-"भानुस्तांबूलदानादपहरति नृणां वैकृतं वासरोत्थं सोमः श्रीखंडदानादवनिवरसुतो भोजनात्पुष्पदानात् ॥ सौम्यः शक्रस्य मंत्री हरिहरनमनाद्भार्गवः शुभ्रवस्त्रैस्तैलस्नानात्प्रभाते दिनकरतनयो ब्रह्मनुत्या परौ च ॥ " इति । ब्रह्म ब्राह्मणः । परौ राहुकेतू ॥ १६ ॥

## गतेः प्राक् ग्रहाणां गन्तव्यराशिफलदानादिनानि—

**सूर्यारसौम्यास्फुजितोक्षनागसप्ताद्रिघस्रान्विधुरग्निनाडीः ॥**
**तमोयमेज्यस्त्रिरसाश्विमासान्गंतव्यराशेः फलदाः पुरस्तात् ॥ १७ ॥**

अथ सूर्यादयो ग्रहा गंतव्यराशेः प्राक् कियद्भिर्दिनैः फलं दद्युरित्येतदुपजात्याह-सूर्यारसौम्येति । सूर्यादयो ग्रहा गंतव्यराशेर्जिगमिषितराशेः पुरस्तात् पूर्वमेवैतत्संख्याकादिवसघटीमासान् । अत्र-"कालाध्वनोरत्यंतसंयोगे " इति द्वितीया । ततो नैरंतर्येण तावत्कालं फलदाः स्युः । तद्यथा-सूर्यो गंतव्यराशेः प्राक् अक्षघस्रात्पंचदिवसात् फलदः, एवमारो भौमोष्टदिवसान् पूर्वं फलदः, बुधः सप्तदिवसात्, शुक्रोपि सप्तदिवसात्, विधुश्चंद्रः अग्निनाडीर्घटिकात्रयमेव प्राक् फलदः, राहुर्गंतव्यराशेः प्राक् त्रिमासफलदः, एवं शनिः षण्मासात्,गुरुर्द्विमासात् पूर्वं फलद इत्यर्थः। उक्तं च-"सूर्यः पंचदिनं शशी त्रिघटिकं भौमोऽष्ट वै वासरान्सप्ताहानि भृगुः स सोमतनयो मासद्वयं वै गुरुः । षण्मासात्पुरतोपि सूर्यतनयो राहुश्च मासत्रयं केतुश्चैव ददाति भावि सकलं गंतव्यराशेः फलम् ॥" इति ॥ जगन्मोहने त्वेवमुक्तम्-"आदित्यादिग्रहा दद्युर्लग्ने वा गोचरेपि वा । सप्तविंशति २७ भागोर्ध्वं परराशिफलं खलु ॥ " इति ॥ १७ ॥

## मंगलादिकृतेषु दोषनिवृत्त्यै ग्रहेभ्यो दानम्-

**दुष्टे योगे हेम चंद्रे च शंखं धान्यं तिथ्यर्द्धे तिथौ तंडुलांश्च ॥**
**वारे रत्नं भे च गां हेमनाड्यां दद्यात्सिंधूत्थं च तारासु राजा १८**

अथ प्रसंगादावश्यकमंगलयात्राकृत्येषु कर्त्तव्येषु सत्सु तिथ्यादिविषयकदुष्टयोगसद्भावे तद्दोषनिवारणार्थं दानं शालिन्याह-दुष्ट इति । दुष्टे व्यतीपातादिरूपे योगे सति हेम सुवर्णं यथाशक्ति राजा दद्यात् । च पुनश्चंद्रे दुष्टे विहितान्यस्थानस्थिते शंखं दद्यात् । तिथ्यर्द्धे करणे भद्राख्ये दुष्टे धान्यं दद्यात् । तिथौ दुष्टे चतुर्थ्यादिरूपे तंडुलान् । वारे दुष्टेऽनुपचयरूपे रत्नं प्रवालमुक्तादि दद्यात् । भे राशौ दुष्टे क्रूरग्रहाधिष्ठितत्वादिदोषसहिते सति गां दद्यात् । नाड्यां घटिकायां दुर्मुहूर्तादिना दुष्टायां सत्यां हेम सुवर्णं दद्यात् । च पुनस्तारासु दुष्टासु विपत्प्रत्यरिवधरूपासु सिंधूत्थं लवणं दद्यात् । पूर्वं दुष्टतारासु प्रत्येकं विशिष्य दानमुक्तम् । इदानीं तदशक्तौ लवणमेव देयमिति पुनरुक्तिपरिहारः । उक्तं च दीपिकायां "योगस्य हेम करणस्य च धान्यमिंदोः शंखं च तंडुलमणी तिथिवारयोश्च । ताराबलाय लवणान्यथ गां च राशेर्दद्याद्द्विजाय कनकं शुचिनाडिकायाम् ॥ " इति ॥ १८ ॥

## राशिप्रविष्टग्रहाणां फलदानकालः--वारगतस्वस्वनक्षत्रफलं च-

राश्यादिगौ रविकुजौ फलदौ सितेज्यौ मध्ये सदा शशिसुतश्चरमेऽब्जमंदौ ॥ अध्वान्नवह्निभयसन्मतिवस्त्रसौख्यदुःखानि मासि जनिभे रविवासरादौ ॥ १९ ॥

इति श्रीदैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ गोचरप्रकरणं समाप्तम् ॥ ४ ॥

अथात्र गोचरप्रसंगात्सूर्यादयो ग्रहाः राश्यंतरगताः संतः कदा शुभाशुभफलदातारो भवंति। तथा चांद्रमासाधिकरणकरविवासरादौ स्वजन्मनक्षत्रप्रवेशे सति फलविशेषं च वसंततिकलावृत्तेनाह–राश्याविति ॥ रविकुजौ सूर्यमंगलौ राश्यादिगौ राशिप्रथमदशांशमध्यस्थितौ सन्तौ फलदौ निखिलफलदातारौ। अवशिष्टांशेष्वषिदीषत्फलदौ। एवं सितेज्यौ शुक्रबृहस्पती मध्ये मध्यगतांशदशके निखिलफलदातारौ अन्यत्रेषत्। शशिसुतो बुधः सदा त्रिंशदंशेषु निखिलफलदाता। अब्जमंदौ चंद्रशनैश्चरौ चरमदशके निखिलफलदातारावन्यत्रेषत्। उक्तं च वसिष्ठेन–"भवनाधिगतौ फलदौ रविभौमौ मध्यगौ च गुरुशुक्रौ॥ अंत्यगतौ शशिरविजौ सदैव फलदः शशांकसुतः॥" वराहेणापि–"दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ॥ रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालम्॥" इति॥ रुधिरो भौमः॥

## मासिमासि जन्मनक्षत्रफलं वारभेदेन-

अध्वेति॥ यस्मिन्मासे स्वीयजन्मनक्षत्रप्रवेशे सूर्यादिवाराश्चेत्स्युस्तदा तस्मिन्मासेऽध्वादीनि फलानि वाच्यानि॥ तद्यथा–रविवारे जन्मनक्षत्रप्रवेशे सति तस्मिन् मासे अध्वा मार्गोऽटनमिति यावत्, फलं तस्य पुंसो भवेत्। एवं चन्द्रवारे जन्मनक्षत्रप्रवेशे अन्नं भक्ष्यं तत्प्राप्तिः स्यादित्यर्थः॥ एवं भौमवारे वह्निभयं भवेत्॥ बुधवारे सन्मतिः सती समीचीना धर्मयुक्ता बुद्धिर्भवेत्। गुरुवारे वस्त्रप्राप्तिर्भवेत्। भृगुवारे सौख्यं भवेत्। शनिवारे दुःखप्राप्तिः स्यादित्यर्थः॥ उक्तं च ज्योतिषरत्नसंग्रहे वामनेन–"अध्वा भोजनमग्निभीः सुमतिता वस्त्रं सुखं चासुखं मासे मासि फलं भवेज्जननभे सूर्यादिवारे स्थिते॥" इति॥ अत्र–'मासास्तथा च तिथयस्तुहिनांशुमानात्' इति भास्कराचार्यवाक्याच्चांद्रः शुक्लप्रतिपदादिदर्शांतो मासो गृह्यत इति शिवम्॥ १९॥ अथ गोचरप्रकरणं गद्येनोपसंहरति–इति दैवज्ञेति॥ ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः। गोविंदेन विनिर्मिते नयनिश्रौ पीयूषधाराभिधे व्याख्याने ग्रहगोचरप्रकरणं संपूर्णतामध्यगात्॥ १॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकण्ठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधारायां ग्रहगोचरप्रकरणं समाप्तम् (४)॥ श्रीरस्तु॥

# अथ गुणैः सहाष्टचत्वारिंशत्संस्कार (४८) प्रकरणम् ५.

## प्रथमरजोदर्शने शुभाशुभनिर्णयः-

**आद्यं रजः शुभं माघमार्गराधेषफाल्गुने ॥**
**ज्येष्ठश्रावण्योः शुक्ले सद्वारे सत्तनौ दिवा ॥ १ ॥**

श्रीगणेशाय नमः ॥ शर्वाणीतनयमघाब्धिदावमीशं नत्वा श्रीगुरुपदभक्तिलब्धविद्यः ॥ गोविंदो विबुधजनप्रहर्षिणीं तां संस्कारप्रकरणटिप्पणीं तनोति ॥ १ ॥ अथ संस्कारप्रकरणं व्याख्यायते-

## संस्कारपदार्थः-

तत्र संस्क्रियतेऽनेन श्रौतेन कर्मणा स्मार्तेन वा पुरुष इति संस्कारः । स्वीयस्वीयजातौ सामान्यविशेषविहितवैदिकस्मार्तकर्मानुष्ठानद्वाराऽदृष्टविशेषाधायक इति यावत् ॥ लक्षणया तदर्थोक्तदिनशुद्ध्यादिकं संस्कारशब्देनोच्यते ॥ तस्य प्रकरणमुपक्रमः ॥

## अष्टाचत्वारिंशत्संस्कारनामानि-फलं च-

ते च संस्काराः अष्टाचत्वारिंशत् । यदाह गौतमः-"गर्भाधानं पुंसवनं सीमंतोन्नयनं जातकर्म नामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पंचानां यज्ञानामनुष्ठानमष्टकापार्वणश्राद्धं श्रावण्याग्रहायणी चैत्री आश्विवयुजीति सप्तपाकसंस्था अग्न्याधानमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्याण्याग्रयणेष्टिर्निरूढपशुबंधः सौत्रामणीति सप्तहविर्यज्ञसंस्था अग्निष्टोमोत्यग्निष्टोम उक्थः षोडशीवाजपेयोतिरात्र आप्तोर्यामः इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्काराः ॥ अष्टावात्मगुणाः दया सर्वभूतेषु क्षांतिरनसूयाशौचमनायासो मांगल्यमकार्पण्यमस्पृहेति ॥ यस्यैते चत्वारिंशत्संस्काराः अष्टावात्मगुणाश्च स ब्राह्मणः सायुज्यमाप्नोति" इति ॥ तत्रैते पुंसः संस्काराः समीचीनदिवसेष्वनुष्ठिताः संतोभिहितफलदातारो भवंति ॥

## गर्भाधानयोग्यस्त्रीस्वरूपस्य निर्णयः-

तत्र प्रथमं गर्भाधानाख्यः संस्कारोऽभिहितः । स च रजस्वलाधीनः । उक्तं च भरद्वाजसंहितायां- "रजस्वला यदा नारी योग्या स्याद्गर्भधारणे । ततः कुर्वीत तत्संगं गर्भार्थं बुद्धिमान्नरः ॥

## पुत्रोत्पादनाकरणे प्रत्यवाय इत्यादिरीत्या पुत्रप्रशंसा-

तत्रापि पुत्रोत्पत्त्यर्थमवश्यं संगः कार्यः । अन्यथा परलोकाभावः । उक्तं च श्रुतौ- "नापुत्रस्य लोकोस्तीति तत्सर्वे पशवो विदुः इति ।" पशवो देवाः । अतएव पुन्नाम्नो नरकात् त्रायत इति पुत्र इत्यन्वर्थता प्रतीयते । तदुक्तं महाभारते आदिपर्वणि शाकुंतले-"यदागमवतः पुंसो यदपत्यं प्रजायते । तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ " इति अनेनामुष्मिकं फलमुक्तं

संततेः ॥ ऐहिकमपि फलमुक्तं भारते—" इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः । सर्वमेतदपत्यस्य कलां नार्हति षोडशीम् ॥ व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् । सर्वं तदनपत्यस्य मोघं भवति निश्चितम् ॥" अतो गर्भाधानमवश्यं कर्त्तव्यम् ॥

## रजोदर्शनात्प्राक् स्त्रीसंगो न कार्यः—

तच्च रजोदर्शनतः प्राक् न विधेयम् । तदुक्तं भविष्यत्पुराणे—" रजोदर्शनतः पूर्वं न स्त्रीसंसर्गमाचरेत् । संसर्गं यदि कुर्वीत नरके परिपच्यते ॥" युक्तं चैतत् । रजो हि पुष्परूपम् । तद्विना फलरूपसंतानानुपपत्तेः । ननु क्वचिद्रजोदर्शनं विनापि गर्भसंभवो दृश्यते क्वचित्तु सत्यपि रजसि गर्भानुपलंभ इति । नैष दोषः । गर्भधारणं हि रजो विना न भवतीत्येषा ऽव्याप्तिः । तच्च क्वचित्प्रकटं क्वचिदप्रकटमंतरेवतिष्ठति । तत्राप्रकटेपि रजस्यन्तर्गतरजःसत्त्वाद्गर्भधारणसंभवः । अतः प्रागुक्तदोषाभावः। उक्तं च कश्यपसंहितायां—"वर्षद्वादशकादूर्ध्वम्—अंतःपुष्पं भवत्येव पनसोदुंबरादिवत् ॥ अतस्तु तत्र कुर्वीत तत्संगं बुद्धिमान्नरः ॥" इति । यत्र तु सत्यपि रजसि गर्भधारणं न दृश्यते तत्र पुष्पबीजक्षेत्रादिदोषा द्रष्टव्याः ॥ तस्मात्स्थितमेतद्रजोदर्शनानंतरं स्त्रीसंगः कार्य इति ॥

## तत्र शुभा मासाः—

तत्र—"प्रथमरजोदर्शनतः शुभाशुभं भवति सर्ववनितानाम्" इति वसिष्ठोक्तेः । तत्र शुभफलसूचकं प्रथमरजोदर्शनमनुष्टुभाह—आद्यमिति । राधो वैशाखः । इष आश्विनः । शेषं स्पष्टम् । आद्यं प्रथमोद्भवं रजः स्त्रीधर्मो माघमार्गशीर्षवैशाखाश्विनफाल्गुनमासेषु तथा ज्येष्ठश्रावणमासयोश्चेत्तदा शुभं भविष्यच्छुभसूचकम् ॥

## तत्राशुभा मासाः—

अर्थाच्चैत्राषाढभाद्रपदकार्तिकपौषमासा अशुभाः ॥ उक्तं च स्मृतिचंद्रिकायां—"चैत्रे स्यात्प्रथमर्तौ तु नारी वैधव्यभागिनी । वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता तथा ॥ शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधान्यदा । नभस्ये दुर्भगा क्लिष्टा आश्विने च तपस्विनी ॥ ऊर्जेप्यायुष्मती नारी मार्गशीर्षे बहुप्रजा । पौषे तु पुंश्चली नारी माघे पुत्रसुखान्विता ॥ फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् " इति ॥

## तत्र पक्षफलम्—

तथा शुक्ले शुक्लपक्षे तत् । अर्थात्कृष्णपक्षे रजोदर्शनं दुष्टम् । तदुक्तं स्मृतिचंद्रिकायां—"शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत् । कृष्णस्य दशमी यावन्मध्यमं फलमादिशेत् ॥" अतः कृष्णपक्षदशम्युत्तरं कुलटात्वं स्यादित्यर्थः ॥

## तत्र वारफलानि—

सद्वारे सतां चंद्रबुधगुरुशुक्राणां वारे आद्यं रजः शुभमर्थादन्यवारेषु दुष्टफलम् ॥ यदाह कश्यपः—"रोगिणी रविवारे तु सोमवारे पतिव्रता । दुःखिता भौमवारे तु बुधे सौभाग्यसंयुता॥

श्रीसंयुता गुरोर्वारे पतिभक्ता भृगोर्दिने । मलिना मंदवारे तु रात्रावपि तथैव च ॥ " वसिष्ठोपि–"सदा गदार्त्ता सुपतिव्रता सा वंध्या प्रजावत्यतुलार्थयुक्ता । आनंदकर्त्री त्वसती च पुष्पवती क्रमाद्भास्करवासरेषु ॥ " भास्करवासरेष्वित्यत्र–" अर्धर्चाः पुंसि च" इत्यादिवत् बहुवचनादाद्यर्थोऽवगम्यते । तेन भास्करवासरादिष्वित्यर्थः फलितः ॥

## तत्र लग्नफलानि–

सत्तनौ समीचीनलग्ने शुभस्वामिकराशावित्यर्थ इति केचित् । तत्र शुभफलमाद्यं रजः । यदाह नारदः–" कुलीरवृषचापांत्यनृयुक्कन्यातुलाधराः । राशयः शुभदा ज्ञेया नारीणां प्रथमार्त्तवे ।" केचित्तु सत्तनौ सद्भिर्दृष्टे तनौ युते वा इति व्याख्यां कुर्वते । तदुक्तं दैवज्ञमनोहरे–"मेषे सव्यभिचारा स्याद्वृषभे परभोगिनी । मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥ पुत्राढ्या सिंहराशौ तु कन्यायां श्रीमती भवेत् । विचक्षणा तुलायां च वृश्चिके तु पतिव्रता ॥ दुश्चारिणी धनुःपूर्वे अपरे च पतिव्रता । मकरे मानहीना च कुंभे निर्धनबंधुता ॥ मीने विलक्षणा लग्ने ग्रहसंस्था विवाहवत् ॥ "

## अशुभपुष्पापवादः–

अत्राशुभफलापवादमाह वसिष्ठः–" अशुभमपि समस्तं चार्त्तवं संप्रभूतं सुरगुरुसितयुक्ते वीक्षिते वाथ लग्ने । तिमिरमिव कठोरज्योतिरुत्पत्तिकाले क्षयमथ समुपैति प्राप्नुयादीप्सितानि" ॥ कठोरज्योतिः सूर्यः ॥

## प्रातःसायंकालावेव श्रेष्ठौ तत्र–

दिवा दिवसे आद्यं रजः शुभं–"मलिना मंदवारे तु रात्रावपि तथैव च" इति नारदोक्तेः । दिवा रजोदर्शनं शुभमित्यर्थः । स्मृत्यंतरेपि विशेष उक्तः–"प्रातःकाले तु सधना सायाह्ने सर्वभोगिनी । मध्याह्ने च भवेद्वेश्या निशीथे विधवा भवेत् ॥ " इति ॥ १ ॥

## तत्र नक्षत्राणि–

**श्रुतित्रयमृदुक्षिप्रध्रुवस्वातौ सितांबरे ॥**
**मध्यं च मूलादितिभे पितृमिश्रे परेष्वसत् ॥ २ ॥**

अथ प्रथमे रजोदर्शने शुभनक्षत्राण्यनुष्टुभाह–श्रुतित्रयेति । श्रुतित्रयं श्रवणधनिष्ठाशतभिषाःमृदुक्षिप्रध्रुवाणि चित्रानुराधामृगरेवत्यश्विनीपुष्यहस्तरोहिण्युत्तरात्रयस्वातीषु भेषु आद्यं रजः शुभमिति पूर्वेण संबंधः । अत्र समाहारद्वंद्वः आगमशासनस्यानित्यत्वान्नुमभावः । मूलेति । मूलपुनर्वसुमघाविशाखाकृत्तिकामध्यं मध्यमफलम् । परेषु भरणीज्येष्ठार्द्राश्लेषापूर्वात्रयेषु असदनिष्टफलम् ॥

## नक्षत्रानुरोधेन फलानि रजोदर्शने–

उक्तं च गर्गेण–"सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता । धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी॥सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा । दीना प्रज्ञावती चैव पुत्राढ्या चित्रकारिणी॥

साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी । स्वकर्मनिरता हिंस्रा पुत्रपौत्रादिसंयुता ॥ नित्यं धनकथासक्ता पुत्रधान्यसमन्विता । मूर्खार्थाढ्या गुणवती दस्रर्क्षादेः क्रमात्फलम् ॥" इति व्यवहारनिबन्धे । श्रीपतिनापि—"करादिपंचोत्तरमूलपूषविष्णुत्रयाश्वीज्यविधींदुभेषु । आद्यं रजः सौख्यसुतायुरर्थसौभाग्यवृद्धिं कुरुतेंगनानाम् ॥ मघेशयोः शोकमथादितेर्भे सा बंधकीन्द्रेप्यनले दरिद्रा । पूर्वात्रये याम्यभुजंगधिष्ण्ये वैधव्यमस्या भवतीति नूनम् ॥" अत्र यद्यपि लिखितयोर्द्वयोरपि संमतिवाक्ययोरैकार्थ्यम् । तथापि ग्रन्थकृता विशाखामूलयोर्मध्यत्वाभिधानं वसिष्ठवाक्यस्यानुरोधात्कृतम् । उक्तं च वसिष्ठेन—"द्विदैवभे पुष्पवती प्रमत्ता कृत्यैव मोघामयवैरिसंघा ॥ मूले प्रकामाधिकहीनसत्त्वा स्यात्सर्वभक्ष्योद्धतदोषचित्ता ॥" इति॥

## तदा धृतवस्त्रवर्णेन शुभाशुभफलानि--बिन्दूनां च--

सिताम्बरे श्वेतवस्त्रे आद्यं रजः शुभमिति पूर्वेण संबंधः । उपलक्षणं चैतत्क्षौमनूतनवस्त्रयोः । अर्थादन्येषु दुष्टेषु वस्त्रेषु रजोदर्शनं निंद्यमित्यर्थः । तदाह वसिष्ठः—"सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता । क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥ दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा । नीलांबरधरा नारी विधवा पुष्पिता यदि ॥ मलिनांबरतो नारी दरिद्रा स्याद्रजस्वला ॥" क्षौमवस्त्रं पट्टवस्त्रम्।क्वचिद्रक्ताबिंदुभिः फलमुक्तम्—"वस्त्रे स्युर्विषमा रक्तबिंदवः पुत्रमाप्नुयात् । समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्त्तवे ॥" इति वसिष्ठोक्तेः ॥

## तात्कालिकवस्तुसम्बन्धवशाच्छुभाशुभानि—

अन्यच्च—"संमार्जनं काष्ठतृणाग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् । तल्पाल्पभोगे रहसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात् ॥" ॥ २ ॥

## दोषावहा रजोदर्शनकालादयः—

**भद्रानिद्रासंक्रमे दर्शरिक्तासंध्याषष्ठीद्वादशीवैधृतेषु ॥**
**रोगेष्टम्यां चंद्रसूर्योपरागे पाते चाद्यं नो रजोदर्शनं सत् ॥३॥**

निन्द्यरजोदर्शनं शालिन्याह—भद्रेति । भद्रा प्रसिद्धैव । निद्रा स्वापः । संक्रमः संक्रांतिः । दर्शोमावास्या । रिक्ताः प्रसिद्धाः । संध्या मध्याह्नसंध्या सायंसंध्या च । षष्ठीद्वादश्यौ प्रसिद्धे । वैधृताख्यः सप्तविंशतियोगः । रोगो ज्वरादिः प्रदरादिश्च । अष्टमी । चंद्रसूर्योपरागो ग्रहणम् । व्यतिपातः सप्तदशो योगो महापातश्च । एषु दुष्टयोगेष्वाद्यं रजोदर्शनं नो सत् । अनिष्टफलदमित्यर्थः । यदाह कश्यपः—"अष्टमीषष्ठ्यमा रिक्ता द्वादशी संक्रमेपि वा । वैधृतौ व्यतिपाते च ग्रहणे चन्द्रसूर्ययोः ॥ विष्ट्यां संध्यासु निद्रायां दुर्भगा प्रथमार्त्तवे ॥" नारदेन तु प्रतिपत्तिथिः परिघपूर्वार्द्धं च निषिद्धम्—"अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि । परिघस्य तु पूर्वार्द्धे व्यतीपाते च वैधृतौ ॥ संध्यासूपप्लवे षष्ठ्यामशुभं प्रथमार्त्तवम् ॥" रोगे सम्मतिर्नास्ति ॥

## स्थलभेदेन रजोदर्शने फलानि—

वसिष्ठेन तु स्थलभेदेन फलविशेषोभिहितः—"ग्रामाद्बहिः परग्रामे वा चेत्स्याद्व्यभिचारिणी । पतिव्रता पतिस्थाने सुशीला गृहमध्यमे ॥ ग्राममध्ये च वृद्धिश्च विधवा च दिगंबरा ।

उपरागे च दुःशीला आयुष्यं जलसन्निधौ ॥ धनमध्ये तु कन्याया धनधान्यसमृद्धिदा ॥" प्रथमार्त्तवे स्यादिति पूर्वेण संबंधः ॥

## तत्र मातृप्रश्नलग्नात्फलानि ज्ञेयानि-

अत्र रजस्वलायाः कन्यायाः मात्रादिकृतप्रश्नलग्नाच्छुभाशुभविशेषो भूयान् वसिष्ठेनोक्तः । सोऽस्माभिर्ग्रंथबाहुल्यभयान्नालेखि । स तत एवावधार्यः ॥ ३ ॥

## स्नानमुहूर्तः प्रथमरजस्वलायाः-

**हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः शक्रान्वितैः शुभतिथौ शुभवासरे च ॥ स्नायादथार्त्तववती मृगपौष्णवायुहस्ताश्विधातृभिररं लभते च गर्भम् ॥ ४ ॥**

अथ प्रथमरजस्वलायाः स्नानमुहूर्तं वसंततिलकयाह-हस्तेति । हस्तस्वात्यश्विनीमृगानुराधाधनिष्ठारोहिण्युत्तरात्रयज्येष्ठाभिः शुभतिथौ भद्रानिद्रासंक्रमे इत्याद्यनिष्टदिनव्यतिरिक्तदिवसे शुभवारे शुभानां चंद्रबुधगुरुशुक्राणां वासरे च । आर्तववती ऋतुरेवार्तवम् । प्रज्ञादित्वात्स्वार्थेऽण् । तद्विद्यते यस्याः सा तथोक्ता सा रजोवती स्नायात् । उक्तं च दैवज्ञवल्लभे-"ब्रह्मानुराधाश्विनिसोमभेषु हस्तानिलाखण्डलवासवेषु । विश्वार्यमर्क्षोत्तरभाद्रभेषु वरांगना स्नानविधिः प्रदिष्टः ॥" आखण्डलो ज्येष्ठा वासवं धनिष्ठेत्यपुनरुक्तिः ॥

## वारफलानि प्रथमरजस्वलास्नाने-

वारफलमपि तत्रैव-"सरुक्पतिव्रता दीना पुत्रिणी भोगभागिनी । पतिव्रता क्लेशयुक्ता ऋतुस्नानेर्कवारतः ॥" इति ॥

## प्रसूतास्नानफलं प्रसंगात्-

केचित्त्वन्यथा वारफलं वदन्ति-"काकीव वन्ध्या भवतीह शुक्रे नष्टप्रजा स्नानविधौ बुधे च । सौरे च मृत्युः पयसोल्पतेंदौ भौमार्कजीवे बहुपुत्रलाभः ॥" इति-एतत्प्रसूतास्नानाविषयम् ॥ तदुक्तं दैवज्ञवल्लभे "स्नाता प्रसूताप्यसुता बुधेन स्नाता च वन्ध्या भृगुनन्दनेन । सौरे मृतिः क्षीरहृतिस्तु सोमे पुत्रार्थलाभो रविजीवभौमे" इति ॥

## प्रथमरजस्वलास्नाने नक्षत्रविशेषः-

विशेषमाह-मृगेति ॥ मृगरेवतीस्वातीहस्ताश्विनीरोहिणीभिर्नक्षत्रैः स्नातार्त्तववती अरं शीघ्रं गर्भं लभते ॥ तदुक्तं दैवज्ञमनोहरे-"वायुः पूषा च सौम्यश्च करो ब्रह्मा तथाश्विनी । एभिः स्नाने तु नारीणां गर्भः संपद्यते पुनः ॥" इति । अत्रैकादशनक्षत्राणि स्नानविधावुक्तानि॥ तत्रापि षट्सु भेषु शीघ्रं गर्भोत्पत्तिर्भवेत् । अन्येषु किंचिद्विलंबेनेत्यर्थः । सर्वथा विहितभिन्नेषु स्नानं न कार्यमिति निष्कृष्टोर्थः ॥ उक्तंच-"कृत्तिका भरणी मूलमार्द्रा पुष्यः पुनर्वसुः । मघा चित्रा विशाखा च श्रवणो दशमस्तथा ॥ एताः प्राणहरास्तारास्तासु स्नानं न

कारयेत् । यदि स्नानं प्रकुर्वीत पुनः सूतिर्न विद्यते ॥ " इति । अर्थाच्छततारास्लेषापूर्वात्रयेषु मध्यममिति । इयं च देशाचारतो व्यवस्थानुसंधेया । शिष्टाचारस्यापि स्मृतिवत्प्रामाण्यात् । दाक्षिणात्यास्तु चतुर्थ एव दिवसे स्नानमाहुः ॥ " चतुर्थेहनि शुध्यति " इति । " भर्तुः स्पृश्या चतुर्थेह्नि स्नानेन स्त्री रजस्वला " इति स्मृतिवचनात् ॥ ४ ॥

गर्भाधाने त्याज्या एते-

गंडांतं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलांतकं
दास्रं पौष्णमथोपरागदिवसं पातं तथा वैधृतिम् ॥
पित्रोः श्राद्धदिनं दिवा च परिघाद्यर्धं स्वपत्नीगमे
भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम् ॥ ५ ॥

गर्भाधानमुहूर्त्तं शार्दूलविक्रीडितशालिनीभ्यामाह-गंडांतमिति ॥ तत्र स्वपत्नीगमे स्वपत्नीगमने एतान्दोषान् त्यजेदिति सर्वत्र संबंधः । एतान्कान् । त्रिविधं गण्डान्तम् । गंडांतलक्षणं रत्नमालायां " नक्षत्रतिथिलग्नानां गंडांतं त्रिविधं स्मृतम् । नवपंचचतुर्थानां ह्येकार्द्धघटिकामितम् ॥ " इति । निधनं जन्मर्क्षात् सप्तमं वधतारां जन्मनक्षत्रं मूलमन्तकं भरणीं दास्रमश्विनीं पौष्णं रेवतीं मघाम् उपरागदिवसं ग्रहणदिनं पातं व्यतीपातं महापातं च वैधृतियोगं पित्रोः मातापित्रोः श्राद्धदिनं दिवासूर्यावच्छिन्नकालं परिघयोगस्य पूर्वार्द्धं तथोत्पातैर्दिव्यांतरिक्षभौमैस्त्रिविधैरुत्पातैर्हतं दूषितं जन्मर्क्षतः जन्मलग्नाज्जन्मराशेर्वा मृत्युभवनमष्टमं लग्नं पापभं पापग्रहयुक्तभं नक्षत्रं लग्नं वा इति ॥

दुष्टतिथ्यादौ रजोदर्शने शांतिः-रजोन्तरप्रतीक्षा च-

अत्र यदि दुष्टफलतिथ्यादिषु रजोदर्शनमभूत् तत्र चतुर्थदिनानन्तरं शांतिकं विधेयम् ॥ यदाह वसिष्ठः-"प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शांतिककर्म कार्यम् । विवर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमन्यघस्रे ॥ ईशानतो गोमयमंडलेन परिस्तृतेग्नौ जुहुयात्सदूर्वाम् । युग्मां घृताक्तां च समित्प्रमाणां गायत्रिकां साष्टसहस्रसंख्याम् ॥ शतप्रमाणामथवाघहंत्रा शुभैर्यवैर्व्याहृतिमिस्तिलैश्च । ततः सुरान्भूमिसुरान्पितॄंश्च संतर्पयेदन्नसुवर्णवस्त्रैः ॥ " इति ॥ शांतिकप्रकारस्तु शांतिपद्धत्यादौ द्रष्टव्यः ॥ एवं शांतिकं विधाय गर्भाधानं विधेयम् ॥ ५ ॥

किंच-

भद्राषष्ठीपर्वरिक्ताश्च संध्यां भौमार्कार्कीनाद्यरात्रीश्चतस्रः ॥
गर्भाधानं त्र्युत्तरेन्द्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वंबुपे सत् ॥ ६ ॥

भद्रेति ॥ भद्रा प्रसिद्धा । षष्ठी तिथिश्च । पर्वाणि चतुर्दश्यष्टम्यमावास्यापूर्णिमासंक्रमणानि ॥ उक्तं च विष्णुपुराणे-"चतुर्दश्यष्टमी चैव अमावस्या च पूर्णिमा । पर्वाण्येतानि राजेंद्र रविसंक्रांतिरेव च ॥" इति ॥ रिक्ताश्चतुर्थीनवमीचतुर्दश्यः। संध्यां प्रातःसंध्यां सायंसंध्यां च । भौमं मंगलवारम, अर्कमादित्यवारम, आर्कि शनैश्चरवारं, चतस्र आद्यरात्री रजोदर्शनदिनमारभ्य दिनचतुष्टयं च तत्र त्यजेदित्यर्थः ॥

## गर्भाधाने वर्ज्या अन्येपि-

तदनंतरमपि पुत्रार्थी रजोदर्शनतो विषमदिवसं त्यजेत् ॥ उक्तं च गर्भाधानाध्याये वसिष्ठेन निषेधजातं-"पौष्णद्वये पित्र्यभयाम्यसार्पविष्णुद्वये नैधनजन्मभेषु । उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने ॥ उपप्लवे वैधृतपातयोश्च विष्ट्यां दिवा पारिघपूर्वभागे । संध्यासु पर्वस्वपि मातृपित्रोर्मृतेह्नि पत्नीगमनं विवर्ज्यम् ॥ दिनेषु युग्मेषु च वक्ष्यमाणयोगैः सुतार्थी स्वसतीमुपेयात् । दिनेष्वयुग्मेषु च कन्यकार्थी हित्वा च गंडांस्तिथिलग्नभानाम् ॥" इति ॥ वक्ष्यमाणयोगैः पुंयोगैः स्त्रीयोगैश्च ॥ अत्र ग्रंथकृता श्रवणधनिष्ठयोर्न निषेधः कृतः ॥ बार्हस्पत्यसंहितायां तयोर्विशेषतो विहितत्वात् ॥ तद्वचनमधुनैव वक्ष्यते ॥ ननु षोडशीग्रहणवद्विहितप्रतिषिद्धत्वाद्विकल्पः कस्मान्न भवति ॥ सत्यम् ॥ बहूनामनुरोधो न्याय्य इति विधिरेवोचितः । अत एवोक्तं नारदेन-"शुचिर्भूत्वा युग्मतिथावनग्नां कामयेत्प्रियाम् । पुत्रार्थी पुरुषस्त्यक्त्वा पौष्णमूलाहिपित्र्यभम् ॥" इति । "त्यक्त्वा पर्वतिथिं मूलमाश्लेषां पैतृभं त्विति ॥" इति काश्यपोक्तेः ॥

## तिथ्यादयो गर्भाधाने-

अत एव बृहस्पतिसंहितायां-"शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणि" इत्युक्तम् । तिथ्यादयः कश्यपेन कालविधाने उक्ताः-"षष्ठ्यष्टमीं पंचदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा । शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशांकाऽऽर्यसितेन्दुजानाम् ॥" इति ॥ अत्र वाक्ये चंद्रबुधगुरुशुक्रवारा निषेककार्ये शुभा उक्ताः । अर्थादन्ये सूर्यभौमशनिवारा निषिद्धाः । उक्तं च कालनिर्णये-"रिक्ता पर्वाष्टमी षष्ठी दिवा जन्मत्रयं तथा । पापग्रहाणां वाराश्च त्याज्याश्चैवानृतौ गतिः ॥ " सोमज्ञगुरुशुक्राणां वारवर्गोदयाः शुभाः ॥ तेषां च दृष्टयश्चैव नेतरेषां कदाचन ॥" इति । अत्र केचिन्निषेकेषु वारा उत्तमाः स्त्रीवारौ मध्यमौ नपुंसकवारौ निषिद्धौ । उक्तं च व्यासेन-"पुरुषग्रहवाराः स्युः शुभाः सीमंतकर्मणि । मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ ॥" इति ॥ अत्र सीमंतग्रहणमुपलक्षणं गर्भाधानस्येत्याहुः॥

## तत्र वारविषये विशेषः-

युक्तं चैतत् ॥ पुंस्त्रीवारेषु स्त्रीगमने पुरुषाः स्त्रियो वोत्पद्यन्ते इति तावदिष्टम् । नपुंसकवारगमने तु नपुंसकस्योत्पत्तिः स्यात् । नहि सा कस्यचिदिष्टा भवेदिति नपुंसकबुधवारनिषेध एवोचितः । शनिनिषेधस्तूभयवादिसिद्ध एव । दाक्षिणात्यशिष्टसमाचाराच्च । अतो बुधशन्योरेव निषेधोऽन्येषां ग्रहणमिति प्रतीमः । प्राच्यास्तु नैतत्सहंते ॥ तन्मते तु सूर्यभौमशनीनामेव निषेधः ॥ नारदः-"रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम् । ततः शुद्धौ क्रियास्त्वेताः सर्ववर्णेष्वयं विधिः ॥" इति ॥

## रजस्वलाशुद्धिकालः-

अत्रार्थवादमाह भरद्वाजः-"प्रथमेऽहनि चांडाली द्वितीये ब्रह्मघातकी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति॥" धर्मशास्त्रेपि-" भर्तुः स्पृश्या चतुर्थेह्नि स्नानेन स्त्री रजस्वला । पंचमेहनि योग्या स्याद्दैवे पित्र्ये च कर्मणि ॥ तस्मादेतावतो दोषांस्त्यक्त्वा स्त्रीगमनं हितम् ॥" इति ॥

## गर्भाधानकालावधिः—

ऋतुकालावधिमाह याज्ञवल्क्यः—"षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्। युग्मासु पुत्रा जायंते स्त्रियोऽयुग्मासु रात्रिषु ॥" अतः षोडशदिनमध्ये गर्भाधानं विधेयम्। तत्रैव गर्भसंभवात्। तत्र वाराः समीचीनाः प्रागुक्ता एव।

## नक्षत्राणि गर्भाधाने—

अधुना नक्षत्राण्याह—गर्भाधानमिति ॥ उत्तरात्रयमृगहस्तानुराधारोहिणीस्वातिश्रवणधनिष्ठाशततारकासु गर्भाधानं सत् शुभदम्। उक्तं च बार्हस्पत्यसंहितायां—"हरिहस्तानुराधाश्च स्वातीवारुणवासवम्। उत्तरात्रितयं सौम्यं रोहिणी च शुभाः स्मृताः ॥ आधाने मूलसर्पात्यमशुभं सममन्यभम् ॥" इति ॥

## तत्र सकृदेव स्त्री गन्तव्या सत्पुत्रार्थिनैकरात्रौ—त्यक्त्वा वर्ज्यर्क्षाणि—

एवं विहितनक्षत्रे सति चन्द्रबले गर्भाधानार्थं सकृदेव पत्नीगमनं कार्यमित्याह याज्ञवल्क्यः—"एवं गच्छेत्स्त्रियं क्षामां मघां मूलं च वर्जयेत्। सुस्थिरेंदौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥" चकाराद्रेवतीम्। भीमपराक्रमोपि—"पित्र्यं पौष्णं नैर्ऋतं च धिष्ण्यं त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम् ॥ पुष्टः क्षामां पुत्रकामोभिगच्छन्सल्लक्षण्यं पुत्रमाप्नोति पुण्यम् ॥" इति ॥

## मन्त्रपूर्वकमेव कार्यः स्त्रिया संगमः—

तच्च गमनं मन्त्रपूर्वकम्। तदुक्तं विष्णुपुराणे—"ऋतावुपगमः शस्तः स्वपत्न्यां मन्त्रतो द्विज" इत्युक्तेरिदं त्रैवर्णिकविषयं प्रतीयते। मन्त्रास्तु विष्णुर्योनिं कल्पयत्वित्येवमादयः। एतैर्मन्त्रैर्दक्षिणेन पाणिनोपस्थमभिमृशेदिति गोभिलोक्तेः ॥ ६ ॥

## लग्नबलं गर्भाधाने—

**केंद्रत्रिकोणेषु शुभैश्च पापैस्त्र्यायारिगैः पुंग्रहदृष्टलग्ने ॥**
**ओजांशगेऽब्जेऽपि च युग्मरात्रौ चित्रादितीज्याश्विषु मध्यमंस्यात् ७**

गर्भाधाने लग्नबलमिंद्रवज्रयाह—केंद्रेति ॥ अथ सामान्यतः शुभलग्नानि वसिष्ठोक्तानि—"वृषमिथुनकर्कसिंहकन्यातुलधरचापझषाः शुभा भवन्ति । यदि शुभफलशालिनोनुकूला निधनविशुद्धियुता निषेककाले ॥" इति। तत्र केंद्रत्रिकोणेषु लग्नचतुर्थसप्तमदशमपंचमनवमस्थानस्थितैः शुभग्रहैस्तथा त्र्यायारिगैस्तृतीयैकादशषष्ठस्थानस्थितैः पापग्रहैरुपलक्षिते पुंग्रहैः सूर्यभौमगुरुभिर्दृष्टे लग्ने तथौजांशगे इंदौ, विषमराशिर्मेषमिथुनादिरंश ओजादिरेव । तत्र स्थिते चन्द्रे सति युग्मरात्रौ समरात्रौ गर्भाधानं कार्यम् ॥ यदाह जगन्मोहने वसिष्ठः—केंद्रात्रिकोणेषु शुभस्थितेषु लग्ने शशांके च शुभैः समेते । पापैस्त्रिलाभारिगतैश्च यायात्पुंजन्मयोगेषु च संप्रयोगम् ॥" नारदः "ओजराश्यंशगे चन्द्रे लग्ने पुंग्रहवीक्षिते । शुचिर्भूत्वा युग्मतिथौ ह्यनग्न कामयेत्प्रियाम् ॥" इति ॥

## पुंग्रहाः-

पुंग्रहानाह नारदः-"पुंग्रहाः सूर्यजीवाराः स्त्रीग्रहौ शशिभार्गवौ । नपुंसकौ सौम्यसौरी शिरोमात्रं विधुंतुदः" इति ॥

## पुंनपुंसकयोगाः-

अत्र पुंनपुंसकयोगा वसिष्ठेनोक्ताः-"आधानलग्ने विषमांशराशौ जीवेन्दुजाभ्यां युतवीक्षिते वा । नान्यैः सपुत्रस्त्वथ पापखेटैः पापी च मिश्रैर्बलिभिश्च मिश्रः ॥ ओजर्क्षांशे लग्नगे वीर्ययुक्ते जीवेंद्वर्कैरोजराश्यंशसंस्थैः । पुंजन्म स्याद्व्यत्यये कन्यका स्यान्मिश्रैः षंढा द्व्यंगगैर्द्वित्रिजन्म ॥ ( षंढो नपुंसकः ) ओजांशकर्क्षाद्विषमर्क्षसंस्थः पुंजन्मकारी रविसूनुरेकः । विचार्य वीर्यं पुरुषग्रहाणां वाच्योथ पुत्रस्त्वथ पुत्रिका वा ॥ पापैश्च शेषं सुविचिंत्य वाच्यम्" इति ॥ एवमन्येपि पुंजन्मादियोगा जातके द्रष्टव्याः । एषु यस्मिन्कस्मिन्पुंजन्मयोगे पुत्रार्थी युग्मरात्रौ पत्नीं गच्छेत् । कन्याजन्मयोगे तु कन्यार्थी विषमरात्रौ पत्नीं गच्छेत् इति फलितोर्थः ।

## मध्यमनक्षत्राणि गर्भाधाने-

गर्भाधाने विहितनक्षत्राप्राप्तौ मध्यमनक्षत्राण्याह-चित्रेति ॥ चित्रापुनर्वसुपुष्याश्विनीषु तद्गर्भाधानं मध्यं मध्यफलमित्यर्थः । यदाह बृहस्पतिः-"चित्रादित्ये तथा तिष्यतुरगौ चेति मध्यमाः । शेषाण्यृक्षाणि दुष्टानि स्युर्निषेकाख्यकर्मणि ॥" इति ॥

## तत्र विहितषोडशदिनातिक्रमेषु न तत्कालप्रतीक्षा कार्या-

अत्र केचित्-दैवान्मानुषाद्वा प्रतिबंधाद्भर्तुरसन्निधाने केषु ऋतुषु व्यतीतेषु गर्भाधानाख्यः संस्कारो नाभूत्तदानीं दैवान्मध्ये भर्त्ता समागतश्चेत्तदा दक्षिणायनशुक्रास्तन्यूनाधिमासादिमहादोषसद्भावे गर्भाधानं नैव भवतीत्याहुः ॥ अतीतकालत्वात्, यथा कालातीतेषु जातकर्मनामकर्मान्नप्राशनचौलादिसंस्काराः पूर्वोक्तदोषसद्भावे नैव भवंति ॥ उक्तं च वसिष्ठेन-"अतीतकालान्यखिलानि यानि कार्याणि सौम्यायनगे दिनेशे । गुरौ भृगौ वाप्यथ दृश्यमाने तदुक्तपंचांगदिनेप्यखंडे ॥" इति । सत्यपि नृणामतिक्रमे-'निमित्तानंतरमेव निमित्तिकम्' इति न्यायेन-'षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्' इति याज्ञवल्क्यवचसा षोडशदिनातिक्रमे ऋत्वंतरमपेक्ष्य प्रागुक्तादिशा कालशुद्धिं विचार्य तत्कार्यमेव । तदा बहुकालव्यापिनी कालशुद्धिरुपेक्ष्यैव । यतो विज्ञानेश्वरेण-'तस्मिन्युग्मासु संविशेत्' इति व्याख्यावसरे किमयं विधिर्नियमः परिसंख्या चेति त्रयः पक्षा उपन्यस्ताः । तत्र स्त्रीगमने रागत एव प्रवृत्तेर्नियम एवायमिति सिद्धांतितम् । अतो 'गच्छेदेव' इति यमस्मरणात् 'ऋतावुपेयात्सर्वत्र वाप्रतिषेधवर्ज्यम्' इति गौतमस्मरणात् ॥

## ऋतुस्नातया संगमाकरणे-

ऋत्वगमने प्रत्यवायोऽपि स्मर्यते-"ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥" इति शातातपोक्तेः । अत एवैतद्दूषणभयादेवाधिकारिणा पित्रादिना कन्या गुणवते वरायावश्यं देयेत्याह याज्ञवल्क्यः-"पिता पितामहो

भ्राता कुल्यो वा जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः । अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ ॥'' इति विशेषोक्तिः कैमुतिकन्यायसूचनार्थम् । यत्र पित्रादेरदातुश्चेदयं दोषस्तदा भर्तुरयं दोषो भवत्येवेति किं वाच्यमित्यर्थः ॥ भ्रूणो गर्भः ॥

## गर्भाधानानन्तरकर्तव्यम्–

गर्भाधानं विधाय पुंसा निद्रासमये किं कार्यमित्याह विष्णुः–''निद्रासमयमासाद्य तांबूलं वदनात्त्यजेत् पर्यङ्कात्प्रमदां माल्यं पुष्पाणि मस्तकात् '' इति ॥

## गर्भधारणज्ञानविचारे समाधानमन्यत्र–

अथानया गर्भो धृतो नवेति प्रश्ने गर्भधारणयोगा जातके द्रष्टव्याः । प्रस्तुतेऽप्रसंगान्न लिख्यतेऽस्माभिः ॥ ७ ॥ इति गर्भाधानं समाप्तम् ॥

## सीमन्तोन्नयनमुहूर्तः–

जीवार्कारदिने मृगेज्यनिर्ऋतिश्रोत्रादितिब्रध्नभे
रिक्तामार्करसाष्टवर्ज्यतिथिभिर्मासाधिपे पीवरे ।
सीमंतोऽष्टमषष्ठमासि शुभदैः केंद्रत्रिकोणे खलै-
र्लाभारित्रिषु वा ध्रुवांत्यसदहे लग्ने च पुंभांशके ॥ ८ ॥

प्रसिद्धे गर्भे सीमंतोन्नयनाख्यसंस्कारमुहूर्तं शार्दूलविक्रीडितेनाह–जीवार्केति ॥ जीवो बृहस्पतिः । अर्कः सूर्यः । आरो मंगलः । एषां वारे । तथा ब्रध्नः सूर्यः। 'भास्कराहस्करब्रध्न' इत्यभिधानात् । तस्य भं हस्तः । अन्यत्स्पष्टं नामत एव । एवं मृगपुष्यमूलश्रवणपुनर्वसुहस्तनक्षत्रैः सीमंतो लक्षणया सीमंतोन्नयनाख्यः संस्कारः कार्यः। सीमंत उन्नीयते यस्मिन्कर्मणि तत्सीमंतोन्नयनमिति शब्दव्युत्पत्तिः । सीमंतः केशभागः । उक्तं सीमंताध्याये कश्यपेन– " शुक्लपक्षादिदिवसं रिक्तां पर्वस्य मध्यमम् । तिथिं त्यक्त्वार्कभूसूनुसुरेज्यानां च वासरे '' इति । रत्नमालायां–" श्रवणः सकरः पुनर्वसुर्निर्ऋतिभं च सपुष्यको मृगः । रविभूसुतजीववासराः कथिताः पुंसवनादिकर्मसु '' । आदिशब्देन सीमंतोन्नयनादि । व्यासः–"पुरुषग्रहवाराः स्युः शुभाः सीमंतकर्माणि । मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ'' इति । तत्र तिथयो निषिद्धा उच्यन्ते । रिक्तेति । रिक्ताः प्रसिद्धा अमा अमावस्या अर्कः द्वादशी रसाः षष्ठी अष्टमी एताभिस्तिथिभिर्वर्ज्या न्यूना अवशिष्टा यास्तिथयस्ताभिरुपलक्षिते दिने । यदाह गुरुः–" पक्षच्छिद्रां च रिक्तां च विना पंचदशीं शुभः । चतुर्दशी चतुर्थी च कदाचित्तु शुभप्रदे ॥ शुभसंस्थे निशानाथे चतुर्थी च चतुर्दशी । पौर्णमासी प्रशंसंति केचित्सीमंतकर्मणि'' इति ॥

## तत्र मासाधिपबलमपेक्षितम्-

किंच मासाधिपे मासेश इत्यग्रिमश्लोकेन ज्ञाते गर्भमासस्वामिनि पीवरे पुष्ट उदिते सतीत्यर्थः । यदाह नारदः-" चतुर्थे मासि षष्ठे वाप्यष्टमे वा तदीश्वरे । बलोपपन्ने दंपत्योश्चन्द्रताराबलान्विते " ॥ कश्यपोपि-' मासेश्वरे बलोपेते नास्तगे न पराजिते " इति । यदि मासाधिपो निर्बलस्तदा दोष इत्याह गर्गः-" यस्य मासाधिपो रिक्तो नीचो वास्तंगतोपि वा। तस्मिन्मासे क्षयं याति प्रसवो वा भविष्यति " ॥

## तत्र षष्ठाष्टमादिमासाः-

स च सीमन्तो गर्भधारणसमयादष्टमषष्ठमासि अष्टममासि षष्ठमासि वा कार्यः।अयं चेच्छया विकल्पः ' षष्ठेष्टमे वा मासि ' इति याज्ञवल्क्योक्तेः । नारदीये चतुर्थोपि मासोभ्यधायि तद्वाक्यं प्रदर्शितं शौनकेनापि-"चतुर्थे गर्भमासे स्यात्सीमन्तोन्नयनक्रिया । षष्ठेष्टमे वा कुर्वीत सूत्रांतरविधानतः " सूत्रांतरं स्वस्वगृह्यसूत्रम् । एवं स्वेच्छयोक्तमासे एव विधेयम् ॥

## शुक्लपक्षे पूर्वाह्णे सीमंतः-

तच्च शुद्धपक्षे पूर्वाह्णे एव नापराह्णे ॥ यदाह नारदः-" शुक्ले पक्षे च पूर्वाह्णे सीमन्ताख्यो विधिः स्मृतः" इति । बृहस्पतिरपि-"पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विना । पूर्वाह्ण एव तत्रापि नापराह्णे कथंचन" इति ॥

## तत्र लग्नम्-

लग्नमुच्यते-केंद्रेति । केंद्रत्रिकोणस्थानेषु १ । ४ । ७ । १० । ९ । ५ । शुभदैः सौम्यग्रहैस्तथा लाभारित्रिषु ११ ।६। ३ । खलैः पापग्रहैरुपलक्षिते लग्ने तत्रापि च पुनः पुमंशके पुरुषराशिलग्ने पुरुषनवांशके च कार्यः ॥ यदाह वसिष्ठः-" केंद्रत्रिकोणोपगतैश्च सौम्यैर्दुश्चिक्यलाभारिगतैश्च पापैः ॥ षडष्टलग्नांत्यविवर्जितेन्दौ सीमन्तकार्यं शुभदं तथैव" इति । रत्नमालायां-"षष्ठे मास्यथवाष्टमे तदधिपे वीर्योपपन्ने विधौ चेष्टैर्दृष्टतनौ नृनामभवने पुंलग्नभागेषु च । धीधर्माख्यचतुष्टयेपि च गुरौ पापैश्च तद्वाह्यगैर्मृत्युद्वादशवर्जितैश्च मुनिभिः सीमंतकर्म स्मृतम्" ॥ अत्र विशेषमाह-कश्यपः-"चन्द्रोपि शुभदो ज्ञेयस्त्यक्त्वा षष्ठाष्टमव्ययान् । सीमन्तलग्नादेकोपि क्रूरः पंचाष्टरिष्फगः ॥ हंति सीमंतीनीं सोपि तद्गर्भं वा न संशयः" अत्रापि जन्मराशिजन्मलग्नाभ्यामष्टमलग्नभवनमिष्टलग्नादष्टमलग्नंच शुद्धं ग्राह्यम् । यदाह सीमन्ताध्याये कश्यपः"न नैधने तयोर्लग्ने नैधने शुद्धिसंयुते । पंचभिश्च चतुर्भिर्वा सूर्येन्दुगुरुपूर्वकैः। ग्रहैरिष्टैः शुभे लग्ने राशावपि च नैधने " । सीमन्तोन्नयनमित्यनुषंगः ॥ तयोः स्त्रीपुंसयोः ॥

## तत्रापवादः क्वचित्-

अस्यापवादः प्रयोगपारिजाते नृसिंहोक्तः-"लग्नादष्टमराशीशः केंद्रगः शुभवीक्षितः।यद्यप्यष्टमभस्योक्तं दोषमाशु व्यपोहति" । अपिशब्दो भिन्नक्रमोष्टमभस्येत्यस्यानंतरं द्रष्टव्यः । सच कैमुतिकन्यायेनान्यदोषनिवारणार्थोपि संपन्नः । कचित्सत्यपि ग्रहबले सिंहवृश्चिकलग्ने निन्दिते अभिहिते इत्ययमप्यत्र विशेषो ध्येयः ॥ यदाह गुरुः-" मूलर्क्षे केचिदिच्छंति सीमंतं शुभदं बुधाः । सिंहालिं वर्जयेल्लग्नं ग्रहैरष्टमवर्जितम् " ग्रहैः क्रूरग्रहैः । कचिद्राशित्रयं निषिद्धम् । यदाह गर्गः-"सीमंतोन्नयनं कार्यं शुभांशे शुभलग्नगे कुलीरमृगकन्याश्च वर्ज्या शेषाश्च शोभनाः" इति

## नक्षत्राणि वाराश्च मतान्तरेण सीमन्ते—

मतांतरेण नक्षत्राणि वारांश्चाह—ध्रुवेति । ध्रुवाणि रोहिण्युत्तरात्रयम् अंत्यं रेवती तथा सदहे सतां शुभग्रहाणां चंद्रबुधगुरुशुक्राणामह्नि वासरे ध्रुवांत्यनक्षत्रेषु प्रागुक्तनक्षत्रेषु वा कार्यम् । एवं शुभग्रहवारे वा कार्यमित्यर्थः । यदाह गुरुः—"रोहिण्यैन्दवमादित्यं पुष्यहस्तो-त्तरात्रयम् । पौष्णं वैष्णवभं चैव सीमंतादिषु संमतम्" इति । श्रीधरः—सौम्यानां वारवर्गाः स्युः सीमंतादिषु शोभनाः" इति । अत्र जन्मनक्षत्रं यदि विहितमपि संभवेत्तदा तदपि वर्ज्यमित्याह वसिष्ठः—"बालान्नभुक्तौ व्रतबंधने च राजाभिषेके खलु जन्मधिष्ण्यम् । शुभं त्वनिष्टं सततं विवाहसीमंतयात्रादिषु मङ्गलेषु" ॥

## सीमन्ते शुक्रास्तमलमासादिदोषो नास्त्यस्ति च—

एवं निर्णीते सीमंतोन्नयनमुहूर्ते शुक्रास्तादिदोषविचारो नास्ति, नियतमासविहितत्वात् । तदाह गुरुः—मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः । न दोषकृन्मलो मासो गुर्वादित्यादिकं तथा" इति ॥ अयमत्र तात्पर्यार्थः । यत्र नियतकाल एव कालो विहितो यथा तृतीये मासि पुंसवनं तत्र शुक्रास्तादिदोषाभाव एव । यत्र तु सीमंतादौ चतुर्थषष्ठाष्टममासरूप-कालत्रयविधानं तत्र शुक्रास्तादिदोषरहितः कालो ग्राह्यः, संभवात् । स क्वचित्कुलाचारवशा-त्सीमंतादौ नियत एव कालो विवक्षितो भवेत्तदा न दोषः । कुलाचारवशादेव तदतिरिक्तो-ऽनियत एव कालः स्यात्तदापि न दोषः । यत्र बहुकालविधानेपि बहुदिनव्यापकसिंहस्थगुर्वा-दिदोषसद्भावस्तत्रानन्यगतिकत्वान्नैष दोषः । एवं नामकर्मान्नप्राशनादिष्वपि द्रष्टव्यम् । उक्तं च—"सीमंतजातकादीनि प्राशनांतानि यानि वै । न दोषो मलमासस्य मौढ्यस्य गुरुशुक्रयोः" इति । मौढ्यस्येत्यादि दोषोपलक्षणम् ।एवं च कालप्रतीक्षायोग्येषु चूडाकरणादिषु मलमासा-दिदोषो विचारणीय एवेति ॥

## सीमन्तस्य गर्भसंस्कारकत्वक्षेत्रसंस्कारकत्वयोर्व्यवस्था—

अथैते पुंसवनादयः संस्काराः किं गर्भसंस्कारकत्वात्प्रतिगर्भमावर्तंते, उत सकृदेव कार्या इति । तत्रेदृशं भृगुवाक्यं—"प्राप्ते तृतीयमासे स्फुरदिंदुकलापपक्षे च । पुंसवनं पुत्रेप्सुर्गर्भेगर्भे प्रकुर्वीत" इति पुंसवनमुपलक्षणं सर्वगर्भसंस्काराणाम् । गर्भेगर्भे इति वीप्साग्रहणात्प्रतिगर्भ-मावृत्तिरिति केचिदाहुः ॥ अपरे च सकृदेव कार्या इत्याहुः । यदाह हारीतः—"सकृच्च कृत-संस्काराः सीमंतेन द्विजस्त्रियः । यं यं गर्भं प्रसूयंते स सर्वः संस्कृतो भवेत्" इति । एतेन क्षेत्रसंस्कारकत्वमुक्तं भवति । यथा भूरेकवारं दाहाद्यनेकसंस्कारवती सर्वकाले कर्षणयोग्या भवति तद्वदत्रापीत्यर्थः। केचित्तु कोंकणदेशादौ प्रतिवर्षं दाहादिसंस्कारं विधाय कर्षणं क्रियते इत्येवं पक्षद्वयसंभवे देशाचारतो व्यवस्था ध्येया ॥ ननु तृतीयमासविहितत्वादादौ पुंसवनमु-हूर्तो विचारणीयः । ततश्चतुर्थषष्ठाष्टममासविहितः सीमंतमुहूर्तो विचार्यः वैपरीत्योक्तौ किं बीजमिति । उच्यते—सीमंते विहितस्य तिथिनक्षत्रवारलग्नादिसमुदायस्य पुंसवनेप्युपयोगा-त्सर्वदेशप्रसिद्धसीमंतानुष्ठानाचारदर्शनाच्चादौ सीमंतस्योक्तिः । पुंसवनं स्वतंत्रकर्त्तव्यत्वेनो-क्तमपि शिष्टाः सीमंतेन सहैव कुर्वंति ॥ यदाह जातूकर्ण्यः—"सीमन्तेन सहाथवा" इति ॥ नृसिंहोऽपि—"सीमंतोन्नयनस्योक्तविधिवासरराशिषु । पुंसवं कारयेद्विद्वान्सहैवैकदिनेऽथवा"

इति । अतएवानवलोभनाख्यं कर्मास्मिन्नेव दिने क्रियत इति शिष्टाचारोऽप्यत्रार्थे प्रमाणम् ॥ ८ ॥ इति सीमंतविचारः ।

## गर्भधारणादिमासेशाः स्त्रीणां चन्द्रबलं च--

**मासेश्वराः सितकुजेज्यरवींदुसौरचन्द्रात्मजास्तनुपचंद्रदिवाकराः स्युः ॥ स्त्रीणां विधोर्बलमुशंति विवाहगर्भसंस्कारयोरितरकर्मसु भर्तुरेव ॥ ९ ॥**

प्रसंगेन मासेश्वरान् स्त्रीणां चन्द्रबलं च वसंततिलकयाह—मासेश्वरा इति । गर्भप्रथममासादारभ्य दशमप्रसूतिमासपर्यंतं सितादयो मासेश्वरा ज्ञेयाः । यथा प्रथममासेश्वरः शुक्रः ॥ द्वितीये मंगलः । तृतीये गुरुः । चतुर्थे रविः । पञ्चमे चन्द्रः । षष्ठे शनिः । सप्तमे बुधः । अष्टमे आधानलग्नाधिपतिः । नवमे चन्द्रः । दशमे सूर्यः ॥

## गर्भावस्थाः-

अत्र प्रथममासमारभ्य दशममासं यावत् गर्भस्य कललादिरूपावस्था भवतीत्यपि विशेषो ध्येयः ॥ यदाह वराहः—"कललघनांकुरास्थिचर्मांगजचेतनाद्याः । क्रमशो गदिता भवंति शुभाशुभं च मासाधिपतेः सदृशम् " इति । शुक्रशोणितसन्निपातः कललम् । अंगजानि लोमानि ॥ वसिष्ठोऽपि "सितावनेयामरपूज्यसूर्यचन्द्रार्किसौम्योदयपेंदुसूर्याः । मासाधिपाःस्युः क्रमशो दशैते निपीडितो नाशयति स्वमासि " ॥

## चन्द्रबलं कर्मभेदेन स्त्रिया एव पुंस एव वा -

स्त्रीणामिति । गोचरप्रकरणे यद्यप्युभयोः स्त्रीपुंसयोः सामान्यतो ग्रहबलमुक्तम्, तथाप्यत्र स्त्रीणां चन्द्रबले विशेषोऽभिधीयते । विवाहे गर्भसंस्कारे गर्भाधानपुंसवनसीमंतादिरूपे स्त्रीणामपि बलं ग्राह्यम् ।इतरकर्मसु वस्त्रपरिधानालंकारधारणादिषु कृत्येषु भर्तुर्धवस्यैव चंद्रबलं ग्राह्यं न तु स्त्रीणाम् । यदा तु भर्ता मृतस्तदा स्त्रीणामेव चंद्रबलं ग्राह्यमित्यर्थसिद्धम् । उक्तं च "पाणिपीडनविधेरनन्तरं भर्तुरेव बलमैन्दवादिकम् । चिन्तनीयमिह योषितां क्वचिन्नष्टमंगलमृते मनीषिभिः" इति । राजमार्त्तंडः—"विवाहकार्ये कुसुमप्रतिष्ठा गर्भप्रतिष्ठा वनिताविशुद्धौ । अन्यानि कार्याणि धवस्य शुद्धौ पत्यौ विहीने प्रमदात्मशुद्ध्या ॥ " कुसुमप्रतिष्ठा गर्भाधानम् । गर्भप्रतिष्ठा सीमंतादिः ॥ ९ ॥

## पुंसवनविष्णुबल्योरेव मुहूर्तः-

**पूर्वोदितैः पुंसवनं विधेयं मासे तृतीये त्वथ विष्णुपूजा ॥ मासेऽष्टमे विष्णुविधातृजीवैर्लग्ने शुभे मृत्युगृहे च शुद्धे॥१०॥**

येषामाचारःपृथगेव पुंसवनं विधेयमिति तदर्थं पुंसवनमुहूर्तं विष्णुपूजामुहूर्त्तं चेंद्रवज्रयाह—

पूर्वोदितैरिति । पूर्वं सीमंतोन्नयने उदितैः प्रोक्तैस्तिथिवारनक्षत्रलग्नैरुपलक्षिते तृतीये मासि पुंसवनं विधेयमिति तदर्थं पुंसवनाख्यं कर्म विधेयम् । पुमान् सूयतेऽनेन कर्मणेति व्युत्पत्त्या पुंसवनकर्मणा पुंस्त्वहेतुना । यदाह शौनकः—"व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत् । गर्भेऽव्यक्ते तृतीये चेच्चतुर्थे मासि वा भवेत् ॥"नृसिंहः—सीमंतोन्नयनस्योक्ततिथिवासरराशिषु । पुंसवं कारयेद्विद्वान्सहवैकादिने तथा" इति । विशेषमाह वसिष्ठः—"कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे । हित्वा कर्कटकं नृयुग्ममबलामन्येष्वरिक्तातिथौ शुद्धे नैधनधाम्नि शुक्रशशभृद्विन्मंत्रिणां वासरे॥" इति । नैधनधाम्नि अष्टमस्थाने सर्वग्रहरहिते । यदाह वसिष्ठः—"अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्ते शुभावहाः । एवं सम्यक्परीक्ष्यैव कुर्यात्पुंसवनक्रियाम् " इति । वारास्त्वत्र सौम्यग्रहाणामुक्ताः ॥ बृहस्पतिरप्यत्र विशेषमाह—"गुरुशुक्रबुधेन्दूनां द्रेष्काणदिवसांशकाः । तेषामुदयहोराश्च पुंसवेऽतिशुभावहाः ॥" इति । अन्यैस्तु श्रीपत्यादिभिः पुंवारा एव प्रशस्ता अभिहिताः तत्फलान्याह गर्गः—"सौम्ये मृतप्रजा मंदे मृत्युर्वंध्या च भार्गवे।सोमे दुग्धविहीना स्याच्छेषाः सर्वार्थसिद्धिदाः ॥" इति । अत्र वचनद्वयप्रामाण्याद्विकल्पः । केचित्तु यदा तृतीये मासि पुंसवनं चिकीर्षितं तदा सौम्यवारा एव ग्राह्याः ॥ यदा चतुर्थे मासि गर्भस्य व्यक्तत्वात्पुंसवनं चिकीर्षितं तदा पुंवारा एव ग्राह्या इत्याहुः ॥

## तत्र नक्षत्राणि—

नक्षत्राणि ह्यत्र पुंनामानि ग्राह्याणि । तानि श्रवणः सकर इति श्रीपतिनोक्तानि । वसिष्ठेन तु पुंनामान्यभिहितानि । यथा—"पुंनाम श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः । मूलं प्रोष्ठपदं चानुराधा मृगाशिरोऽश्विनी ॥" विशेषमाह ऋक्षोच्चयः—"हस्तार्द्रातिष्यमूलानि सौम्यो विष्णुः पुनर्वसुः । प्रोष्ठपदाद्वयं प्रोक्तमषाढाद्वयमेव च ॥ श्रेष्ठानि कथितान्येव धिष्ण्यान्येकादशैव तु । स्वातौ तथा मघायां च रेवत्यां फाल्गुनद्वये ॥ अश्विन्यां चैव नक्षत्रे यदा पुंसवनं भवेत् । नरः संपद्यते दैवाद्यदा स्याद्गुरुतल्पगः ॥ लुब्धो ह्रस्वतनुः क्रूरो नारी चेत्कुलटा भवेत् ॥ शेषाणि दश धिष्ण्यानि निंदितानि विशेषतः ॥" तदेतयोर्विरुद्धार्थयोर्वाक्ययोर्देशाचारतो व्यवस्था । तत्र वसिष्ठवाक्येन दाक्षिणात्या व्यवहरंति । प्राच्यास्तु ऋक्षोच्चयवाक्येन ॥

## तत्र लग्नशुद्धिः—

लग्नशुद्धिमाह ऋक्षोच्चयः—"मीनवृश्चिककुंभेषु चापगोसिंहकन्यकाः । उक्ताः पुंसवनाद्येषु सुखपुत्रादिवाञ्छया । केंद्रत्रिकोणभवनेषु शुभस्थितेषु पापेषु षट्त्रिदशलाभगृहस्थितेषु । जीवेंदुभानुभृगुभूमिजमंदिरेषु लग्नेषु लग्नपरिशुद्धशुभांशकेषु"॥अत्रापि स्त्रीपुंसयोश्चंद्रबलमावश्यकमित्याह नृसिंहः—"अपि पुंसवनं कार्यं दंपत्योरनुकूलभे । जन्मादि वर्जयेद्राशिं चांशकं विपदादिति ॥ "

## विष्णुबलिमुहूर्तस्तत्र—

अथ गर्भरक्षार्थं विष्णुपूजामुहूर्त्तमुच्यते—अथेति । सीमंतानंतरमष्टमे मासि विष्णुविधातृजीवैः श्रवणरोहिणीपुष्यैरुपलक्षिते दिवसे तथा लग्ने शुभे शुभस्वामिके शुभयुक्ते वा सति तथा मृत्युगृहेऽष्टमस्थाने शुद्धे सर्वग्रहरहिते च सति विष्णुपूजा कार्या । यदाह प्रयोग-

पारिजाते वसिष्ठः—"मास्यष्टमे च गर्भस्य कुर्याद्विष्णुबलिक्रियाम् । श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते ॥ द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः । शुभग्रहोदयाः शस्तास्तेषां च दिवसा अपि ॥ पापाख्यायारिगाः श्रेष्ठा नेष्टाः सर्वेऽष्टमे स्थिताः" इति ॥

## अष्टमग्रहदोषापवादस्तत्र-

अष्टमग्रहदोषापवादमाह गुरुः—"रन्ध्रेशः स्वांशगः स्वोच्चे स्वक्षेत्रोपचयर्क्षगः । अष्टमस्थस्य दोषोयं विनश्यति न संशयः" इति ॥ नारदोपि—"लग्नाष्टमेशयोर्मैत्रे लग्नेशे बलसंयुते । अस्तगे निधनेशे च निधनेपि शुभग्रहे" इति ॥ वसिष्ठसंहितायां तु संक्षिप्योक्तं—"रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ वा । मध्ये चाह्नः पूर्वभागेनुकूले विष्णोः पूजां कारयेद्गर्भपुष्ट्यै" ॥

## विष्णुपूजाप्रकारस्तत्र-

तत्र पूजाप्रकारस्तेनैवोक्तः—"पीतांबरं कृष्णवर्णं शंखचक्रगदांबुजम् । वैकुंठवासिनं विष्णुं मृत्कुंभे स्थापयेत्ततः ॥ विष्णोः स्वरूपं कनकेन कृत्वा तल्लिंगमंत्रैरथ गन्धधूपैः । वस्त्राक्षतैर्गुग्गुलधूपदीपैर्नैवेद्यतांबूलफलैश्च सम्यक् ॥ कृत्वा च देवतापूजां गर्भाणां रक्षणाय च । ब्राह्मणाय प्रदातव्या प्रतिमा वस्त्रसंयुता" ॥ १० ॥ इति गर्भरक्षार्थं विष्णुबलिः ।

## जातकर्मनामकरणयोर्मुहूर्तौ-

**तज्जातकर्मादि शिशोर्विधेयं पर्वाख्यरिक्तोनतिथौ शुभेह्नि ॥**
**एकादशे द्वादशकेऽपि घस्रे मृदुध्रुवक्षिप्रचरोडुषु स्यात् ॥११॥**

अथ जातकर्मनामकरणयोर्मुहूर्त्तमुपजात्याह—तज्जातकर्मेति । नन्विदमयुक्तं—"तज्जातकर्म्म शुभदिने कार्यम्" इति ॥ कुतः ॥ जातस्योत्पन्नस्य कर्म वैदिकः संस्कारविशेषः यः स जातकर्मशब्देनोच्यते । तच्च शब्दप्रवृत्त्योत्पन्नक्षण एव विधेयम् । यदाह वसिष्ठः—"यस्मिन्मुहूर्ते जनितः कुमारस्तस्मिन्विधेयं खलु जातकर्म । संतर्प्य देवान्सपितॄन्द्विजांश्च सुवर्णगोभूतिलकांस्यवस्त्रैः" इति ॥ विष्णुरपि—"जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितम्" इति ॥ यथोदितं स्वस्वगृह्यानुसारेणेत्यर्थः ॥ तच्च श्रवणानंतरं सचैलं स्नानं विधाय कार्यम् । उक्तं च ज्योतिःसागरे वसिष्ठेन—"श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । उत्तराभिमुखो भूत्वा नद्यां वा देवखातके" इति ॥ तदपि नालच्छेदनात्प्रागेव कार्यम् । उक्तं च मनुना—"प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म विधीयते"—इति ॥ वर्द्धनं छेदनम् ॥ 'वृधु छेदने' इति धात्वर्थानुसारात् । अत्र हेतुमाह जैमिनिः—"यावन्नोच्छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते" इति ॥ तस्माज्जातकर्ममुहूर्तोनुपपन्न इति ॥ उच्यते ॥ संक्रांत्यादिदुष्टकालेषु शुभकर्माचरणं नास्ति । यदाह गर्गः—"व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि ॥ श्राद्धं विना शुभं कर्म प्राप्तकालेपि नाचरेत्" ॥ अन्यच्च—"अमासंक्रांतिविष्ट्यादौ प्राप्तकालेपि नाचरेत्" ॥ किंच—मूलज्येष्ठागंडांतादिषु जन्मसंभवे शांतिविधानात् ॥ अथवा पिता देशांतरगतो राजगृहादौ निरुद्धो वा जातकर्मादि कर्त्तुमशक्नुवन्पश्चात्प्रतिबंधापनोदने गृहमागतोपि सन्नैव करोति ॥ तदैव जन्माभावात्सूतकप्रवृत्तेश्च । तदाह

वैजवापः–"जन्मतोनंतरं कार्यं जातकर्म यथाविधि। दैवादतीतः कालश्चेदतीते सूतके भवेत्॥" इति ॥ अतएव कालविकल्पोभिहितो नारदसंहितायां–"तस्मिन् जन्ममुहूर्त्ते तु सूतकांते तथा शिशोः ॥ जातकर्म च कर्तव्यं पितृपूजनपूर्वकम् ॥" इति ॥ इदं च तुल्यन्यायान्नामकर्मण्यपि ध्येयम् ॥ तस्मादतिक्रांतकालेपि अवश्यं जातकर्मादिमुहूर्त्तो विचार्य इत्यलमतिप्रसंगेन ॥

## अतिक्रान्तजातकर्मादिकालः–

पर्वाण्युक्तानि मया । रिक्ताः चतुर्थीनवमीचतुर्दश्यः । ताभिरूने वर्जिते तिथौ ॥ जात्यभिप्रायेणैकवचनम् । शुभेह्नि व्यतीपातादिदोषरहिते दिवसे शुभग्रहवासरे च तथैकादशे द्वादशे वा घस्रे दिने तथा मृदुध्रुवक्षिप्रचरभानि प्रसिद्धानि तेषु च शिशोर्बालस्य तज्जन्मसमयातिक्रांतं जातकर्मादि । आदिशब्देन नामकर्माप्युच्यते । तद्विधेयं कर्तव्यं स्यात् । उक्तं च वसिष्ठेन–"मृदुध्रुवक्षिप्रचरेषु भेषु चारिक्तपर्वाख्यदिनेषु कार्यम् । शुभग्रहाणां दिनलग्नवर्गे तज्जातकर्म त्वथ नामधेयम् ॥ " इति ॥ रत्नमालायां–"मृदुध्रुवक्षिप्रचरेषु भेषु सूनोर्विधेयं खलु जातकर्म । गुरौ भृगौ वापि चतुष्टयस्थे संतः प्रशंसंति च नामधेयम् ॥ चतुष्टयं केन्द्रम् ॥

## जातकर्मफलम्–

जातकर्मप्रयोजनमाह गुरुः–"जातकर्मक्रियां कुर्यात्पुत्रायुःश्रीविवृद्धये । ग्रहदोषविनाशाय सूतिकाऽशुभविच्छिदे ॥ कुमारग्रहनाशाय पुंसां सत्त्वविवृद्धये ॥ " इति ॥

## नामकर्मणि कालविशेषाः–

अथ नामकर्मणि विशेषविचारः । नारदः–"सूतकांते नामकर्म विधेयं स्वकुलोचितम् " इति ॥ तत्र नक्षत्रादिनियमाभावः, नियतकालविहितत्वात् । तदुक्तं सारसंग्रहे–"एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे । वैश्यानां षोडशे नाम मासांते शूद्रजन्मनः ॥" इति । मनुस्तु–"नामधेयं दशम्यां तु द्वादश्यां चास्य कारयेत् । पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥" दशम्यामतीतायामेकादशे दिवसे इत्यर्थः । एतच्च ब्राह्मणविषयम् ॥ पूर्वोदीरितवाक्यस्वरसात् । अत्र नामकर्मणोपि विहितकालातिक्रमे शुक्रास्तादिदोषरहिते शुभकाले तत्कार्यम् ॥ यदाह कश्यपः–"उक्तकाले प्रकर्त्तव्या द्विजानामखिलाः क्रियाः । अतीतेषु च कालेषु कर्त्तव्याश्चोत्तरायणे ॥ सुरेज्येप्यसुरेज्ये वा नास्तगे न च वार्द्धके । शुभलग्ने शुभांशे च शुभेह्नि शुभवासरे ॥ चंद्रताराबलोपेते नैधनोदयवर्जिते । पूर्वाह्णे क्षिप्रनक्षत्रचरस्थिरमृदूडुषु ॥ नाममंगलघोषैश्च रहस्यं दक्षिणश्रुतौ ॥ " इति ॥ बृहस्पतिः–"पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः । अपराह्णं च रात्रिं च वर्ज्जयेन्नामकर्माणि ॥ " तथा जगन्मोहने गुरुः–"पक्षच्छिद्रां च नवमीं हित्वा पंचदशीं तथा । शेषाः स्युस्तिथयः सर्वा नामकर्मणि पूजिताः ॥ भास्करार्कजभौमानां वर्जयेदंशकोदयौ । धनकर्मसुतभ्रातृनवमस्थः शुभः शशी ॥ शुद्धव्ययेष्टमे लग्ने पापाश्च त्र्यरिलाभगाः । शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥ " इति ॥

## नामकरणप्रयोजनम्–

प्रयोजनं च स्मर्यते–"नामाखिलस्य व्यवहारहेतुः शुभावहं कर्म सुभाग्यहेतुः । नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥ " इति ॥

## चूचेचोलाअश्विनीत्यादि शतपदचक्रं-तदक्षरादिकमेव नाम कार्यम्-

तत्र नाम जन्मनक्षत्रचरणलक्षितस्वरोदयाभिहितशतपदचक्रान्तर्गताक्षरादिकमेव कार्यम् । उक्तं च गृह्यपरिशिष्टे-"तदक्षरादिकं नाम यस्मिन्धिष्ण्ये तदक्षरम्"।। शतपदचक्रसारोद्धारो ज्योतिषार्केऽभिहितो यथा-"चूचेचोला पदेष्वाद्ये लीलूलेलो यमस्य भे । आईऊए इमेग्नेर्भे ओवावीवू तथाकर्भे ।। वेवोकाकी मृगे ख्याताः कुघङच्छास्तु रौद्रभे । केकोहाही त्वदितिभे हूहेहोडा च पुष्यभे ।। डीडूडेडो इमे सार्पे मामीमूमे मघाभिधे । मोटाटीटू तथा भाग्ये टेटो पाप्यर्यमर्क्षभे ।। पूषणाठा तथा हस्ते पेपोरारीति चित्रभे । रूरेरोता तथा स्वातौ तीतूतेतौ द्विदैवभे ।। नानीनूने क्रमान्मैत्रे नोयायीयू इतींद्रभे । येयोभाभीति मूलाख्ये भूधाफाढा जलस्य भे ।। भेभोजाजीति विश्वर्क्षे जूजेजोखाभिजिद्भवेत् ।। खीखूखेखो श्रुतो ज्ञेया गागी-गूगे च वासवे ।। गोसासीसू जलेशर्क्षे सेसोदादीत्यजांघ्रिभे । दूथझञा तथोपांत्ये देदोचा-चीति पौष्णभे ।। इति प्रोक्ता इमे पद्ये वर्णानामादिजाः स्फुटाः ।। ज्ञेया मेषादिराशीनां नवभिर्नवभिः पदैः ।।" एतैरादिमाक्षरैश्चूडामणिरित्यादिनामानि स्थाप्यानि । तदुक्तं शंखेन " कुलदेवतानक्षत्रादिमाससंबद्धं नाम पिता वा कुर्यादन्योपि वा कुलवृद्धः" इति ।।

### चतुर्विधनामसु जन्मनाम गोप्यम्-

अत्र केचित् ।। " जन्मनाम तु गोपयेत्"इति स्मरणाज्जन्मनक्षत्रसंबंधिनाम गुप्तं संस्थाप्य व्यवहारार्थमन्यनाम कुर्यात् इत्याहुः ।।

### कर्तव्यनामस्वरूपम्-

तत्र नाम कीदृशं कार्यमित्याह वसिष्ठः-" तद्‌द्व्यक्षरं वा चतुरक्षरं वा यथेप्सितं चांत-लकारयुक्तम् । विवर्ज्य नामादिकमेव कार्यं स्फुटं वदेद्दक्षिणकर्णरंध्रे ।। " इति ।। याज्ञिका अपि पठंति-"घोषवदाद्यंतरंतःस्थं त्रिपुरुषानूकमनरि प्रतिष्ठितं तद्धि प्रतिष्ठिततम भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम् " इति । कृतं कृदंतं तद्धितं तद्धितांतम् । घोषवदादीनां कृदन्ततद्धितान्तानां च ज्ञानं व्याकरणशास्त्रात् । विश्वप्रकाशपद्धतौ तु विशेषः-'कुमार्या अप्ययुजाक्षरेण नाम दधताम् ' इति ।।

### मासनामानि नामकर्मणि-

मासनामानि वसिष्ठेनोक्तानि-चैत्रादिमासनामानि वैकुंठोथ जनार्दनः । उपेंद्रो यज्ञपु-रुषो वासुदेवस्त्रिविक्रमः ।। योगीशःपुंडरीकाक्षः कृष्णोनंतोऽच्युतस्तथा । चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः " इति ।। कुलदेवतास्तु वंशपरंपरया प्रसिद्धाः । अत्रान्यो नामप्रयुक्तो विशेषः स्मृतिभ्योऽनुसंधेयः ।। ११ ।। इति नामकर्म ।

### सूतिकास्नानमुहूर्तः-

**पौष्णध्रुवेंदुकरवातहयेषु सूतीस्नानं समित्रभरवीज्यकुजेषु शस्तम् ।। नार्द्रात्रयश्रुतिमघांतकमिश्रमूलत्वाष्ट्रेज्ञसौरि-वसुषड्विरिक्ततिथ्याम् ।। १२ ।।**

यज्वत्वं गुरुभृगुभागयोर्गृणंति " इति । भीमपराक्रमोपि-" भवेत्क्रूरो जडः पापः पटुर्यज्वा मखान्वितः । मूर्खश्चार्कादिकांशेषु क्रमेणोदयवर्तिषु " इति ॥

## बुधगुरुशुक्रस्वामिकराशयो व्रतबन्धे ग्राह्याः-

एवंसति बुधगुरुशुक्रस्वामिकराशीनां नवांशा ग्राह्याः ॥ एतच्च स्पष्टमुक्तं नारदेन- " लग्नेथ राशयः श्रेष्ठाः शुभग्रहयुतेक्षिताः । शुभा नवांशा न तथा ग्राह्यास्ते शुभराशयः । नक्रादौ च कर्कटांशः शुभग्रहयुतोपि वा । तस्माद्गोमिथुनांत्याश्वतुलाकन्यांशकाः शुभाः" इति । अश्वो धनुः ॥ तथा सति वृषमिथुनकन्यातुलाधनुर्मीनांशा ग्राह्या इति निष्कृष्टोऽर्थः ॥ ४९ ॥

## चन्द्रनवांशफलं व्रतबन्धे-

विद्यानिरतः शुभराशिलवे पापांशगते हि दरिद्रतरः ॥
चन्द्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान्स्वलवे५०

चन्द्रनवांशफलं स्वनवांशे सापवादं तोटकेन छन्दसाह-विद्यानिरत इति । यस्मिन् कस्मिंश्चिद्राशौ चन्द्रो यदि शुभग्रहराशिनवांशे स्यात्तदा व्रती विद्यानिरतो भवेत् । यदि पापग्रहराशिनवांशे चन्द्रस्तदा दरिद्रतरो धनधान्यरहितः स्यात् । यदि स्वलवे कर्काशे स्यात्तदा बहुदुःखयुतो भवेत् । उक्तञ्च कश्यपेन-शुभग्रहांशगे चन्द्रे विद्यावान् धनवान् व्रती । तस्मिन्पापांशसंस्थेऽतिनिर्धनोऽखिलदुःखभाक् ॥ स्वांशसंस्थे निशानाथे दरिद्रः खलु दुर्जनः" इति ॥

## तत्तन्नवांशगतचन्द्रफलम्-

वसिष्ठेन प्रत्येकं फलमुक्तं-"सूर्यांशकगते चंद्रे महापातककृद्व्रती । पण्योपसेवी स्वांशस्थे नीचे निस्वः खलो भवेत् ॥ कुजांशकगते चन्द्रे शस्त्रजीवी खलो व्रती । बुधांशकगते चन्द्रे वेदवेदी भवेत्पटुः ॥ जीवांशकगते यज्वा सांगवेदविशारदः ॥ शुक्रांशके धनी दाता विद्यावित्तविशारदः ॥ क्षिप्रोद्ग्राही यज्ञकृत्स्यात्सत्रदा भोगवान्भवेत् । सौरांशकगते चन्द्रे सदा चांडालसेवकः" इति ॥

## स्वनवमांशस्थितचन्द्रफलमपवादतयाह-

स्वांशस्थितस्य चंद्रस्यापवादमाह-कर्णेति । यदि कर्णे श्रवणनक्षत्रे अदितौ पुनर्वसुभे चोपनयने सति स्वांशचंद्रस्य नवांशश्चेत्स्यात्तदा व्रती धनवान् स्यात् । तदुक्तं नारदेन-"श्रवणादितिनक्षत्रे कर्कांशस्थे निशाकरे । तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् " इति ॥ ५० ॥

## केन्द्रस्थग्रहफलानि-राजसेवादीनि ( व्रतबन्धे )-

राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः ॥
प्राज्ञोऽर्थवान्म्लेच्छसेवी केन्द्रे सूर्यादिखेचरैः ॥ ५१ ॥

केंद्रस्थानां सूर्यादीनां फलमनुष्टुभाह-राजसेवीति । केन्द्रे सूर्यादिग्रहैः प्रत्येकं स्थितैः क्रमादिति फलं ज्ञेयामत्यर्थः ॥ अन्यत्स्पष्टम् ॥ यदाह श्रीपतिः-" स्वानुष्ठाने रतः स्यात्प्रचुरमतियुतः केंद्रसंस्थे सुरज्यं विद्यासौख्यार्थयुक्तो ह्युशनासि शशिजेऽध्यापकश्च प्रदिष्टः । सूर्ये

राजोपसेवी भवति धरणिजे शस्त्रवृत्तिर्द्विजन्मा शीतांशौ वैश्यवृत्तिर्दिनकरतनये सेवकश्चांत्यजानाम् " अंत्यजानां चांडालानाम् । अत्र लग्नस्थं चन्द्रं केंद्रस्थं च शनिं विना शुभाः पापाश्च शुभफला इत्यवगम्यते ॥

### केन्द्रे पापा निषिद्धाः व्रतबन्धे-तत्फलानि च-

मुनिभिस्तु केंद्रपापा निषिद्धा इत्युक्तम् । यदाह नारदः-स्फूर्जितं केंद्रगे भानौ व्रतिनो वंशनाशनम् । कूजितं केंद्रगे भौमे शिष्याचार्यविनाशनम् ॥ करोति रुदितं केंद्रसंस्थे मंदे महागदम् । लग्नकेंद्रगते राहौ रंध्रे मातृविनाशनम् । उग्रे केंद्रगते केतौ व्रतिवित्तविनाशनम् ॥ " इति । तत्र सूर्यस्य सर्वशाखाधिपत्वात्केंद्रसंस्थत्वमावश्यकाविषयं द्रष्टव्यम् । उक्तंच दैवज्ञमनोहरे-" सर्वशाखाधिपं भानुं केचिदूचुर्महर्षयः । तस्माद्व्रत्यंतराभावे लग्नस्थोर्कः प्रशस्यते" ॥ लग्नग्रहणं केंद्रोपलक्षणम् । तथा स्वगृहोच्चाद्यवस्थितः पापग्रहः केंद्रस्थः शुभफलदातान्यथा नेत्यर्थः ॥ इति विरुद्धार्थयोर्वचनयोर्विषयविवेकः ॥ ५१ ॥

### चन्द्रगुरुशुक्राणामितरग्रहयुतौ फलम्-

**शुक्रे जीवे तथा चन्द्रे सूर्यभौमार्किसंयुते ॥**
**निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युते पटुः ॥ ५२ ॥**

चंद्रगुरुशुक्राणां ग्रहयुतौ फलमनुष्टुभाह-शुक्रेति । तथा शुक्रे जीवे गुरौ तथा चंद्रे च प्रत्येकं सूर्यसंयुते व्रती निर्गुणः स्यात् । एवं भौमसंयुते सति क्रूरचेष्टः क्रूरा हिंसनशीला चेष्टा हस्तादिचापलं यस्य स तादृशः स्यात् । तथार्किः शनिस्तेन संयुते निर्घृणः निर्लज्जो निर्दयो वा स्यात् तथा तस्मिन्नेव शुक्रे जीवे चंद्रे वा प्रत्येकं सद्भिः चंद्रबुधगुरुशुक्रैः युते पटुः सर्वविद्यानिपुणः स्यात् । उक्तं च रत्नमालायां-" सार्के जीवे निर्गुणोर्थैर्विहीनः क्रूरः सारे वाक्पटुः सत्समेते । भानोः पुत्रेणालसो निर्घृणश्च स्याच्छुक्रेंदू जीववित्संप्रकल्प्यौ " इति ॥ ५२ ॥

### शुभाशुभयोगौ चन्द्रवशात्-

**विधौ सितांशगे सुते त्रिकोणगे तनौ गुरौ ।**
**समस्तवेदविद्व्रती यमांशगेऽतिनिर्घृणः ॥ ५३ ॥**

चंद्रवशेन शुभाशुभयोगौ प्रमाणिकयाह-विधाविति ॥ विधौ चंद्रे शुक्रांशगे सति शुक्रनवमपंचमस्थानस्थिते गुरौ लग्नस्थे सति व्रती बटुः समस्तांश्चतुरो वेदान्वेत्ति जानाति तादृशः स्यात् । एवं यमांशगे शनिनवांशस्थिते चंद्रे सति लग्ने गुरौ च सति सिते त्रिकोणगे सत्यप्यतिनिर्घृणः स्यात् यदाह महेश्वरः-जीवे लग्नमधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ शुक्रांशेखिलवेदविद्व्रविसुते स्वांशे कृतघ्नोऽधमः " इति ॥

### गुरुशुक्रयुक्तशन्यंशस्थचन्द्रफलम्-

अपरे तु गुरुशुक्रयुक्तोपि शन्यंशस्थे चंद्रे सत्यतिनिर्घृण इति व्याचक्षते । तदुक्तं रत्नमालायां-" लग्ने जीवे भार्गवे च त्रिकोणे शुक्रांशस्थे स्याद्विधौ वेदवेदी । सौरांशस्थे सूरिलग्ने सशुक्र विद्याशीलः प्रोज्झितः स्यात्कृतघ्नः " इति ॥ सूरिलग्ने सूरिर्बृहस्पतिस्तद्युक्ते लग्ने ॥

इति व्रतबन्धे लग्नविचारः॥ ननु व्रतबंधे वटुराशितोष्टमभवनादिशुद्धिरुक्ता । यदाह वसिष्ठः- "न नैधनं नैधनशुद्धिलग्नं न नैधनर्क्षं नच तन्नवांशः । न नैधनेशो न तदंशको वा लग्ने प्रशस्तो न च रात्रिनाथः" इति । सा ग्रन्थकृतात्र कुतो नोक्ता । अत्र ग्रन्थकृदाशयं वयं ब्रूमः ॥ 'वीक्षितेवाथैकविंशन्महादोषविवर्जिते' इति नारदोक्तेस्तेषां दोषाणां विवाहप्रकरणे वक्ष्यमाणत्वात्तत्रापि दंपत्योरष्टमं लग्नमित्यपि दोषः सलक्षणो वक्ष्यते । तत्र दंपत्योरिति संस्कार्योपलक्षणम् । तेन बटोरप्यष्टमभवने शुद्धिरुक्तैवेत्यत्र पुनर्नोक्ता । यत्र एकविंशति-दोषविचारो नास्ति सीमन्तादौ किंतु कतिपयदोषस्य तत्र तु साक्षादष्टमभवनशुद्धिरुक्ता । अग्रेपि यात्रादौ वक्ष्यते चेति । एवंचेत् नैधननवांशशुद्ध्यादि कुतो नोक्तम्, सत्यम् । वक्तव्यमेवेति ब्रूमः ॥ परन्तु नारदाद्यनेकमुनिभिरप्रणीतत्वान्नोक्तमिति ग्रन्थकृदाशयः ॥ एवंविधे व्रत-बन्धलग्ने व्रतं कुर्यात् ॥ तदाह नारदः-" शुभलग्ने शुभांशे वा नैधने शुद्धिसंयुते ॥ लग्ने त्वन्यैः सौम्यखेटैः संयुते वा निरीक्षिते ॥ जीवार्कशुक्रचंद्राद्यैः पंचभिर्बलिभिर्ग्रहैः । स्थानादिबलसंपन्नैश्चतुर्भिर्वा बलान्वितैः ॥ वीक्षिते वाथैकविंशन्महादोषविवर्जिते" इति ॥

## सर्वथा निर्दुष्टलग्नासंभवेल्पदोषे लग्ने व्रतबन्धः-

सर्वथा यदि निर्दूषणं लग्नं न लभ्यते तदा का गतिरिति उच्यते वेधादिमहादोषराहित्ये सत्यल्पदोषसत्त्वे गुणाधिक्ये च लग्नं साधीयो भवति । तदुक्तं नारदेन-" लग्नं सर्वगुणोपेतं लभ्यतेल्पोदनैर्न तत् । दोषाल्पत्वं गुणाधिक्ये बहुसम्मतमिष्यते ॥ दोषदुष्टोथ कालो यः सोपमार्ष्टुं न शक्यते " ॥ दोषदुष्टत्वं वसिष्ठेनोक्तं " दोषोप्येको गुणान्हंति तद्विरोधी गुणो न चेत् । पंचगव्येन यत्पूर्णं कुम्भं मद्यलवो यथा " ॥ दोषः पापग्रहवेधादिः ॥

### अन्येपि दोषाः व्रतबन्धे-

अन्येपि दोषा अत्र व्रतबंधे वसिष्ठादिभिरुक्ताः-"ग्रहे रवींद्वोरवनिप्रकोपे केतूद्गमोल्कापतनादिदोषे । व्रते दशाहानि वदंति तज्ज्ञास्त्रयोदशाहानि वदंति केचित् " । श्रीपतिनिबंधे-"पौषादिचतुरो मासान्प्राप्ता वृष्टिरकालजा । व्रतं यात्रां विवाहं च वर्जयेत्सप्तवासरान्" ॥ यत्तु गर्गवाक्यं-"बहुवर्षे त्रिरात्रं स्यादल्पवर्षेतु वासरम् । यदि वर्षेदनध्याये तेनैव सह गच्छति" इति-तद्वर्ज्यं, प्रकृत्याभिधानात् न केवलवृष्टौ दोषः । अकालवृष्टौ तु दोष एवेति ॥ ५३ ॥

### नित्यानध्यायाः-सोपपदाख्याश्च-

**शुचिशुक्रपौषतपसां दिगश्विरुद्रार्कसंख्यसिततिथयः ॥**
**भूतादित्रितयाष्टमी संक्रमणं च व्रतेष्वनध्यायाः ॥ ५४ ॥**

अथैवं व्रतबंधलग्नमभिधायेदानीं दोषवत्त्वेन प्रतिज्ञातानध्यायाञ्छ्वनचपलार्ययाह-शुचीति । द्विविधा ह्यनध्यायाः-नित्या नैमित्तिकाश्च । तत्र आषाढशुक्लदशमीज्येष्ठशुक्लद्वितीयापौषशुक्लैकादशी मन्वादिः माघशुक्लद्वादशी एता अनध्यायाख्याः सोपपदत्वात् । तदुक्तं स्मृतौ-"सिता ज्येष्ठे द्वितीया च आषाढे दशमी सिता ॥ चतुर्थी द्वादशी

माघ एताः सोपपदाः स्मृताः " इति ॥ भूतेति ॥ भूतं चतुर्दशी तदादित्रितयं चतुर्दशीपूर्णिमाप्रतिपदः । कृष्णपक्षे च अमा अमावास्या च तन्मध्ये यथाष्टमी भूतादित्रितयं चाष्टमी चानयोः समाहारद्वंद्वे नपुंसकत्वे ह्रस्वत्वं ज्ञेयम् । तथा संक्रमणं सूर्यस्य निरयणसंक्रांतिदिनं चकारान्मन्वाद्याखिलतिथी मधाविति पद्योक्ता मन्वाद्या युगादयश्चानध्याया ज्ञेयाः । व्रतेष्विति पदमावश्यकद्योतनार्थम् । यदाह गौतमः—"पक्षद्वये चतुर्दश्योरष्टमीद्वितये तथा । पक्षादावपि पक्षांते ब्रह्म नाधीयते नरैः " ॥ ब्रह्म वेदः ॥

## अन्येप्यनध्यायाः—

हारीतेन विशेष उक्तः—" प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः । श्वोनध्यायाद्यशर्वर्य्यां नाधीयति कदाचन " इति ॥ श्वोनध्यायाद्यशर्वर्य्यामिति मन्वाद्यनध्यायविषयम् । चतुर्दश्यादिषु तु पूर्वदिने प्रदोषसद्भावादेवाध्ययनाभावः ॥ फलंच ज्योतिःसारसागरे—" अष्टमी हंत्युपाध्यायं शिष्यं हंति चतुर्दशी । अमावास्योभयं हंति प्रतिपत्पाठनाशिनी " इति ॥ वृद्धमनुः—" चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु । अष्टकासु च संक्रांतौ शयने बोधने हरेः । अनध्यायं प्रकुर्वीत तथा सोपपदासु च " इति । चातुर्मास्यद्वितीयाः गर्गेणोक्ताः—"आषाढफाल्गुनोर्जेषु या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदंति महर्षयः " इति । विधुक्षये कृष्णपक्षे कृष्णादिमासगणनया चैत्रश्रावणमार्गशीर्षमासकृष्णपक्षसंबन्धिन्यो द्वितीयाश्चातुर्मास्यद्वितीया इत्यर्थः । अत एवोक्तं ज्योतिःसारसागरे—"चातुर्मास्यसमाप्तौ तु या द्वितीया भवेत्तदा । सर्वास्वेतास्वनध्यायः पुराणैः परिकीर्त्तितः ।" इति । चत्वारो मासाश्चातुर्मास्यमिति यौगिकशब्दः । ब्राह्मणादित्वात्स्वार्थे ष्यञ् ॥ तथा च स्मृत्यर्थसारे—"आषाढीकार्त्तिकीफाल्गुनीपूर्णिमाप्रतिपद्द्वितीयासु च " इत्यनध्यायप्रकरणेऽभिहितम् । मन्वादयो युगादयश्चाद्यप्रकरणेऽभिहिताः ॥ अष्टकास्तूक्ताः स्मृतौ—" पौषादित्रिषु मासेषु कृष्णे चैवाष्टकात्रयम् । एका ज्ञेयाश्विने मासि हायने चतुरष्टकाः ॥ अष्टकाच समुद्दिष्टा सप्तम्यादिदिनत्रयम् । नाधीयीत च शास्त्राणि व्रतबन्धं च वर्जयेत् " इति ॥

## अनध्यायफलानि—कृष्णप्रतिपद्युपनयनम्—आवश्यके—

अनध्यायप्रयोजनमाह वसिष्ठः—" पापांशकगते चन्द्रे स्वाधिनीचस्थितेपि वा । अनध्याये चोपनीतः पुनः संस्कारमर्हति " इति । अत्रानध्याये इत्येतद्विहितानध्यायव्यतिरिक्तानध्यायविषयम् । अन्यथा—" नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिने । मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि" इति वसिष्ठवाक्यमनर्थकमापद्येत ॥ नैमित्तिकानध्यायानां तर्हि किं प्रयोजनमितिचेत् । वेदाध्ययननिवृत्तिरित्यवगच्छ । एवंसति ' नार्त्तः कालमपेक्षते' इति लौकिकन्यायादतीतकालस्य बटोः कालांतरप्रतीक्षामसहमानस्यावश्यकोपनयनविषयमिति निष्कृष्टार्थः ॥ अतएवोक्तं व्यासेन—" प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ । चंद्रे बलयुते लग्ने वर्षाणामातिलंघने " इति ॥ प्रतिपद्ग्रहणं कैमुतिकन्यायसूचनार्थम् । नैमित्तिकानध्यायास्तु अस्माभिर्मन्वाद्या इति पद्यविवरणावसरे निरूपिताः ॥ ५४ ॥

प्रदोषाः-कालान्तरे तत्तिथिसम्बन्धेपि-

**अर्कतर्कत्रितिथिषु प्रदोषः स्यात्तदग्रिमैः ॥**
**रात्र्यर्धसार्द्धप्रहरयाममध्यस्थितैः क्रमात् ॥ ५५ ॥**

दोषवत्त्वेन प्रतिज्ञातान्प्रदोषाननुष्टुभाह-अर्केति । अर्कतर्कत्रितिथिषु तदग्रिमैरर्कादितिथिभ्योऽग्रिमैस्त्रयोदशीसप्तमीचतुर्थीतिथिभिः रात्र्यर्द्धसार्धप्रहरयाममध्ये स्थितैरर्कत्रितिथिषु प्रदोषः स्यात् । यथा द्वादश्यामर्द्धरात्रात्प्राक्त्रयोदशीप्रवृत्तौ प्रदोषः स्यात् । षष्ठ्यां सार्द्धप्रहरमध्ये सप्तमीप्रवृत्तिस्तदा प्रदोषः स्यात् । तथा तृतीयायां प्रहरमध्ये चतुर्थीप्रवेशे प्रदोष इत्यर्थः ॥ उक्तंच-"चतुर्थीप्रथमे यामे सार्धयामे च सप्तमी । यामद्वये त्रयोदश्यां प्रदोषः सर्वघातकः " इति ॥

चतुर्थीसप्तमीत्रयोदशीप्रदोषेषु मतभेदः-

इदं निर्मूलत्वादुपेक्ष्यम् दीपिकाटीकायां तूपनयनपद्यव्याख्याने प्रदोषपरिज्ञानं चाह गर्ग इत्युक्त्वोक्तं-" चतुर्थीयाममेकं तु सार्द्धयामं च सप्तमी । अर्द्धरात्रं त्रयोदश्यां प्रदोषो रजनीमुखम् ॥ अत्र नाध्यापयेद्वेदं वेदांगानि च सर्वथा ॥ अत्राध्ययनशीलस्य प्रदोषः सर्वघातकः" इति ॥ गोभिलेन ह्येवमुक्तं-"षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका । प्रदोषमिह कुर्वीत तृतीया नवनाडिका" इति । स्मृत्यर्थसारेपि-"चतुर्थ्याः पूर्वरात्रे तु नव नाड्यां प्रदर्शने । नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥ अर्द्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रिके" इति ॥ तदेतयोः पक्षयोर्देशाचारतो व्यवस्थेति ॥ ननु रात्र्यर्द्धमित्यत्र ' अर्द्धं समेंशके ' इत्यभिधानात्समांशवाचिनोर्द्धशब्दस्य नपुंसकलिंगत्वात् " अर्द्धं नपुंसकम् " इति समासे "प्रथमानिर्दिष्टं समास उपसर्जनम् " इत्यर्द्धशब्दस्योपसर्जनसंज्ञत्वात् " उपसर्जनं पूर्वम् " इति पूर्वनिपाते च "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इत्यच्प्रत्यये कृते "यस्येति च " इतीकारलोपे च " रात्राह्नाहाः पुंसि " इति पुंस्त्वे अर्द्धरात्र इति भवितव्यं न पुनः रात्र्यर्द्धमिति चेत् । उच्यते, नात्र समांशवाच्यर्द्धशब्दः यथा ग्रामार्द्धो नगरार्द्धं इत्यत्र । किं तर्हि । ' भित्तं शकलखंडे वा पुंस्यर्द्धोऽर्द्धम् ' इत्यभिधानात्केवलविभागवाची । कथं द्वितीयप्रहरस्य चरमघटिका तृतीयप्रहरस्य प्रथमघटिका चेत्येवं घटिकाद्वयोपेतः कालो निशीथशब्दवाच्यः । एतच्च जन्माष्टमीनिर्णये-"अर्द्धरात्रादधश्चोर्ध्वमकार्द्धघटिकान्विता । रोहिणीचाष्टमी ग्राह्या उपवासव्रतादिषु " इति योगीश्वरपद्यव्याख्याने व्याख्यातं माधवेन । ततश्च समांशवाचित्वाभावादर्द्धशब्दस्य नैकदेशिसमासः । किं तर्हि । षष्ठीसमासे षष्ठ्यंतस्य पूर्वनिपातः । अत्रैव-"रात्रौ यामद्वयादर्वाक् यदि पश्येत्त्रयोदशीम् । प्रदोषः स तु विज्ञेयो गर्हितः सर्वकर्मसु " इति गोभिलवाक्यमप्यनुकूलम् । इदमेवाभिप्रेत्य-"रात्र्यर्द्धपूर्वा परगा जयन्ती कलयापि वा' इति वराहणापि रात्र्यर्द्धपदं प्रयुक्तम् । अत्र तु समांशवाचित्वं विवक्षितम् । सिद्धांतपक्षस्तु परदिनार्द्धात्त्रिंशार्द्धात्परतो दिनश्रीरिति । विवाहवृन्दावनपद्यादौ तत्र तादृशाः प्रयोगाश्रिताः ॥ ५५ ॥

ब्रह्मौदने शांतिः-अनध्याये उत्पातादौ च सति-

**प्राग्ब्रह्मौदनपाकाद्व्रतबंधानंतरं यदि चेत् ॥ उत्पातानध्ययनोत्पत्तावपि शांतिपूर्वकं तत्स्यात् ॥ ५६ ॥**

अथ व्रतबंधानंतरं सायंकाले बह्वृचानां ब्रह्मौदनाख्यः संस्कारोभिहितः। तत्र विशेषमार्यायाह-प्रागिति। यदि व्रतबन्धात्प्राक् अकालिकाद्यनध्याय उत्पातो वा भवेत्तदा न कार्य एव व्रतबंधः। दैवान्निर्दुष्टे काले व्रतबंधो निर्वृत्तः तदुत्तरं सायंकालीनब्रह्मौदनविधेः पूर्वमुत्पातप्रयुक्ता कालाशुद्धिरथवाऽनध्यायो वा स्यात्तदानिष्टम्। उक्तं च नृसिंहप्रसादे-"ब्रह्मौदनविधेः पूर्वं प्रदोषे गर्जितं भवेत्। तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत्" ॥ अतस्तद्ब्रह्मौदनं शान्तिपूर्वकमादौ शान्तिं विधाय पश्चात्स्यात् ॥

ब्रह्मौदने दोषे शान्तिप्रकारः-

शांतिप्रकारस्तु नृसिंहप्रसादे-"तस्य शांतिप्रकारं तु वक्ष्ये शास्त्रानुसारतः। स्वस्तिवाचनपूर्वं तु हवनं कारयेद्बुधः ॥ प्रधानं पायसं साज्यं द्रव्यं शांतियुजो भवेत्। सूक्तं बृहस्पतेर्विद्वान्पठेद्विद्यासमृद्धये ॥ गायत्री युज्यते मंत्रः प्रायश्चित्तं तु सर्पिषा। धेनुं सवत्सकां दद्यादाचार्याय पयस्विनीम् ॥ शिलां होमविधेः पश्चात्स्थापयेत्तत्र संसदि। ब्राह्मणान्भोजयेत्पश्चात्ततो ब्रह्मौदनं चरेत् ॥" इति। अत्रैतस्य विचारस्य मुहूर्तविचारेऽनुपयोगान्मूलपद्यनिबंधो यद्यपि स्वयमवक्तव्यः तथापि सकलजनप्रसिद्ध्यर्थमभिहितः ॥ ५६ ॥

तत्तच्छाखिनां तत्तदीयर्क्षेषूपनयनं शस्तम्-

**वेदक्रमाच्छशिशिवाहिकरत्रिमूलपूर्वासु पौष्णकरमैत्रमृगादितीज्ये ॥ ध्रौवेषु चाश्विवसुपुष्यकरोत्तरेशकर्णे मृगान्त्यलघुमैत्रधनादितौ सत् ॥ ५७ ॥**

अथ पूर्वं द्वाविंशतिनक्षत्राण्यभिहितानि सामान्यतस्तेषां वेदपरत्वेन विशेषं वसंततिलकयाह- वेदक्रमादिति। मृगार्द्राश्लेषाहस्तचित्रास्वातीमूलपूर्वात्रयेषु ऋग्वेदाध्यायिनाम्, रेवतीहस्तानुराधामृगपुनर्वसुपुष्यरोहिण्युत्तरात्रयेषु यजुर्वेदाध्यायिनाम्, अश्विनीधनिष्ठापुष्यहस्तोत्तरात्रयार्द्राश्रवणेषु सामवेदाध्यायिनाम्, मृगरेवतीपुष्याश्विनीहस्तानुराधाधनिष्ठापुनर्वसुष्वथर्वणवेदाध्यायिनां पूर्वश्लोकानुवृत्ततत्पदपरामृष्ट सुपनयनं सत् शुभमित्यर्थः। उक्तं च ज्योतिर्निबंधे-"मूले हस्तत्रये सार्पे शैवपूर्वात्रये तथा। ऋग्वेदाध्यायिनां कार्यं मेखलाबंधनं बुधैः ॥ पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे शशांकभे। ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौंजिबंधनम् ॥ पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम्। प्रशस्तं मेखलाबंधे बटूनां सामगायिनाम् ॥ मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम्। अथर्वपाठिनां शस्तो भगणोयं व्रतार्पणे "इति ॥ ५७ ॥

### विवाहव्रतचूडासु मातृ रजोदोषे चौलोपनयनविवाहनिर्णयः-

**नांदीश्राद्धोत्तरं मातुः पुष्पे लग्नांतरे न हि ॥**
**शांत्या चौलं व्रतं पाणिग्रहः कार्योऽन्यथा न सत् ॥ ८८॥**

अथ धर्मशास्त्रीयं विशेषमनुष्टुभाह—नांदीश्राद्धोत्तरमिति । बहुघटीसाध्यानां शुभकर्मणां प्रारंभे सकलशुभाशुभकर्मसाधारणनांदीश्राद्धाख्यं कर्माभिहितम् । तत्कृत्यानंतरं यदि संस्कार्यमातुः पुष्पे रजोदर्शने जाते सति लग्नांतरे विवक्षितलग्नादन्यस्मिन् लग्ने च असति तदावश्यकीं धर्मशास्त्रोक्तां शांतिं विधाय चौलं व्रतं यज्ञोपवीतं पाणिग्रहो विवाहश्च कार्यः ॥ अन्यथा समीचीनद्वितीयलग्ने सति चौलं चौलादिशुभकर्म न सत् । दुष्टफलदमित्यर्थः । उक्तं च मेधातिथिना—"चौले च व्रतबंधे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥ वधूवरान्यतरयोर्जननीचेद्रजस्वला । तस्याः शुद्धेः परं कार्यं मांगल्यं मनुरब्रवीत् " ॥ वृद्धमनुरपि—"विवाहव्रतचूडासु यदि माता रजस्वला । तदा न तत्प्रकर्त्तव्यमायुःक्षयकरं यतः " ॥ बृहस्पतिः—"वैधव्यं च विवाहे स्याज्जडत्वं व्रतबंधने । चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥ " इति । रजोविषयमेतज्ज्ञेयम् । प्रचेताः— "प्राप्य चाभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि । पत्नी रजस्वला जाता न कुर्यात्तत्पिता तदा ॥ " इति ॥

### उपनयनकर्तारः-

पितेति नांदीश्राद्धकर्तुरुपलक्षणम् । तथाच वृद्धगर्गेण--"पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः । उपायनेऽधिकारी स्यात्पूर्वाभावे परः परः "इत्यादयोधिकारिण उपनयनेभिहिताः । तस्मात्संस्कार्यमातरि रजस्वलायां लग्नांतरसद्भावे च न कार्यमेव चौलादि ॥

### श्रीशान्तिप्रकारः-उपनयने सुमुहूर्तालाभे-

लग्नांतराभावे तु शांतिप्रकारो वाक्यसारे--"अलाभे सुमुहूर्त्तस्य रजोदोषे ह्युपस्थिते । श्रियं संपूज्य विधिवत्ततो मंगलमाचरेत् ॥ हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् । प्रत्यृचं पायसं हुत्वाऽभिषिच्य हितमाचरेत् " इति ॥

### श्रीशान्तेरपवादः-आपदादौ--

अस्याप्यपवादस्तत्रैव--"उपवासेन शुध्यंति नार्यः सद्यो रजस्वलाः । एकाकिन्यो विवाहादौ देशभंगेषु चापदि " इति । एतच्च पद्यं वक्तुमनुचितम् । मुहूर्तविचारार्थं प्रवृत्तत्वात् ग्रंथकर्तुः, यतोत्र न कश्चिन्मुहूर्तविचारः प्रतिपाद्यत इति । परंतु सकलजनप्रसिद्धः शास्त्रार्थो भवितुं युक्तः ॥ ८८ ॥ इति सपरिकरव्रतबन्धकालादिविचारः समाप्तः ॥

### छुरिकाबन्धनमुहूर्तः--समावर्तनानन्तरं विवाहात्प्राक्क्षत्रियाणाम्-

**विचैत्रव्रतमासादावभौमास्ते विभूमिजे ॥**
**छुरिकाबंधनं शस्तं नृपाणां प्राग्विवाहतः ॥ ८९ ॥**

अथैवं त्रैवर्णिकानां व्रतबंधमुक्त्वेदानीं केशांतकर्मादि वक्ष्यति । तत्र विवाहात्प्राक् क्षत्रियाणां छुरिकाबंधनं विहितं तन्मुहूर्तमनुष्टुभाह—विचैत्रेति ॥ चैत्ररहितेपूपनयनमासेषु माघफाल्गुनवैशाखज्येष्ठेष्वित्यर्थः ॥ आदिशब्देन व्रतबंधनोक्तपक्षतिथिनक्षत्रलग्नादीनां ग्रहणम् । तस्मिन् कीदृशे । अभौमास्ते मंगलास्तरहिते । गुरुशुक्रयोस्त्वस्तवर्जनं सामान्यनिषेधेन सिद्धत्वान्न पृथगुक्तम्। तथा विभूमिजे मंगलवाररहिते सूर्यादिवारे एतादृशे काले नृपाणां क्षत्रियाणां विवाहतः पूर्वं छुरिकाया अल्पशस्त्रविशेषस्य कट्यां बंधनम् । कार्यमिति शेषः । तच्छस्तं हितकारी । उक्तं च नारदेन—"छुरिकाबंधनं वक्ष्ये नृपाणां प्राक्करग्रहात् । विवाहोक्तेषु मासेषु शुक्लपक्षेप्यनस्तगे ॥ जीवे शुक्रे च भूपुत्रे चंद्रताराबलान्विते । मौंजीबंधनऋक्षेषु भौमवर्जितवासरे ॥ व्रतलग्नोदये कर्तुरष्टमोदयवर्जिते । धनत्रिकोणगैः सौम्यैः पापैर्भवरिपुत्रिगैः ॥ छुरिकाबंधनं कार्यमर्चयित्वा सुरान् पितॄन् । अर्चयेच्छुरिकां सद्मदेवतानां च सन्निधौ॥ ततः सुलग्ने बध्नीयात्कट्यां लक्षणसंयुताम् ॥" इति । लक्षणानि नारदवराहाभ्यामुक्तानि ग्रंथभूयस्त्वभयात्संप्रदायव्याख्यागम्यत्वाच्चास्माभिर्नोक्तानि ॥ अत्र 'प्राग्विवाहतः' इत्युक्तेरवाधीनिश्चयात्समावर्तनानंतरं छुरिकाबंधनं कार्यम् । विवाहभूषणत्वात्तस्याः । यदि यज्ञोपवीतानंतरमेव चिकीर्षितं स्यात्तदोपनयनानंतरं कार्यमित्येव ब्रूयात् । ग्रंथकर्त्रा तु नारदोक्तक्रममंगीकृत्यैवमुक्तम् । तत्र—"पाठक्रमो बलीयान्" इति समाधिः ॥ ५९ ॥

## गोदानाख्यकेशान्तकर्ममुहूर्तः—

**केशांतं षोडशे वर्षे चौलोक्तदिवसे शुभम् ॥**
**व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ॥ ६० ॥**

**इति दैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ**
**पंचमं संस्कारप्रकरणं समाप्तम् ॥ ५ ॥**

केशांतसमावर्तनमुहूर्तमनुष्टुभाह—केशांतमिति । षोडशे वर्षे चौलोक्तदिवसे 'चूडा वर्षात्तृतीयात्प्रभवति' इत्यादिना कथितशुभदिवसे गोदानापरपर्यायं केशांतसंज्ञं हि कर्म शुभं स्यात्॥

## गोदानपदप्रवृत्तिनिमित्तम्—तत्कालाश्च वर्णभेदेन—

गावः केशा दीयंते खंड्यंते यस्मिन्निति व्युत्पत्तिः । यदाह—"केशांतं षोडशे वर्षे कुर्याच्चौलोक्तभादिके" इति । षोडश इत्येतद्ब्राह्मणविषयं द्रष्टव्यम् । क्षत्रियविशोस्तु द्वाविंशतिचतुर्विंशतितमवर्षयोः केशांतमित्यर्थः ॥ तदुक्तं मनुना—"केशांतः षोडशे वर्षे ब्राह्मणस्य विधीयते ॥ राजन्यबंधोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥" इति ॥

## महानाम्नीमहाव्रतोपनिषद्व्रतगोदानव्रतानि क्रमेण कार्याणि—

अत्र गोदानस्य महानाम्न्यादिव्रतपूर्वकत्वात्तानि प्रागनुष्ठाय ततो गोदानं विधेयमिति । यदाहाश्वलायनः—"प्रथमं स्यान्महानाम्नी द्वितीयं च महाव्रतम् । तृतीयं स्यादुपनिषद्गोदानं

च ततः परम् ॥" इति । अतो जन्मतस्त्रयोदशे वर्षे महानाम्नी चतुर्दशे महाव्रतं पंचदशे उपनिषद्व्रतं षोडशे गोदानमिति उक्तम् । एवं क्षत्रियविशोरप्युक्तं गोदानात्प्राक् वर्षचतुष्टयं क्रमेण महानाम्न्यादि भवति । अत्रापि मुहूर्तविचारश्चौलवदेव । तदुक्तं श्रीधरीये-" तिथिन-क्षत्रवाराश्च वर्गोदयानिरीक्षणम् । चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ॥" इति ॥

## महानाम्न्यादीनां कालातिक्रमे-

यदाह पुनर्दैवादतीतकालानि महानाम्न्यादिव्रतानि स्युस्तदा समावर्तनेन सह कार्याणि ॥

## समावर्तनकालः-

व्रतोक्तेति ॥ हि निश्चये । व्रतं यज्ञोपवीतम् । तत्र विहितदिवसे । आदिशब्देन वारन-क्षत्रलग्नांशेषु सत्सु समावर्त्तनमिष्यते । यदाह-"गुरुशुद्धिं विना काले व्रतोक्ते व्रतमोक्षणम्॥" इति ॥ महेश्वरोपि-"खेचरज्ञैर्व्रतानां विसर्गोदितं कर्म तद्व्रतोक्ते च धिष्ण्यादिके " इति । सुरेश्वरोपि-"विभौमभानुजे वारे नक्षत्रे च व्रतोदिते । चन्द्रतारादिशुद्धौ च स्यात्समावर्त्तन-क्रिया ॥" इति । यत्तु-"क्षौरोदितर्क्षादिविलग्नयोगे मौंजीविमोक्षः शुभदो द्विजानाम् " इति दीपिकाकारादिभिरुक्तं तत् स्वदेशविषयम् । विशेषो नारदोक्तः-" अथोत्तरायणे जीवशुक्र-योर्दृश्यमानयोः । द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम् ॥ चित्रोत्तरोदितीज्येंदुहरिमि-त्रविधातृषु । मेषेर्केदुज्ञार्यशुक्रवारलग्नांशकेष्वपि ॥ प्रतिपत्पर्वरिक्तामामष्टमीं च दिनक्षयम् । हित्वान्यदिवसे कार्यं समावर्तनमुण्डनम् ॥ " अत्र कश्यपेन चैत्रो वर्जितः-" चैत्रमासवि-सृष्टेषु माघादिषु च पंचसु " इति तदुक्तेः ॥

## गोदानविवाहमध्ये समावर्तनं कार्यम्-

एतच्च गोदानानंतरं विवाहात्प्राक्कार्यमित्याह वसिष्ठः-" अधीत्य वेदांश्च तदर्थशास्त्राण्य-भ्यस्य लब्ध्वा स्वगुरोरनुज्ञाम् । कुर्यात्समावर्त्तनकर्म पश्चाद्गोदानतः पाणिनिपीडनात्प्राक् ॥ "

## द्वितीयविवाहो द्वितीये वर्षे न-

तत्रापि सत्यावश्यकत्वे द्वितीयवर्षे न कार्यमेव । तदुक्तं ग्रंथांतरे-"वधूप्रवेशं व्रतमोचनं च पुंसः पुनर्दारपरिग्रहं च । नाब्दे द्वितीये विदधीत विद्वान्वदंति गर्गात्रिवसिष्ठमुख्याः॥" इति । स्त्रीमरणानंतरं पुनर्विवाहो द्वितीये वर्षे न भवतीत्यर्थः ॥ पूर्वविवाहानंतरं द्वितीयवर्षे न भव-तीति कस्यचिद्व्याख्यानमपाकृतम् । " प्रमदामृतिवासरादितः पुनरुद्वाहविधिर्वरस्य च । विषमे परिवत्सरे भवेद्युगलं चैव मृतिप्रदं भवेत् ॥" इति संग्रहकारवचनादिति शिवम्॥६०॥

संस्कारप्रकरणं गद्येनोपसंहरति-श्रीदैवज्ञेति ॥ स्पष्टार्थम् ॥ ज्योतिर्विद्वरनीलकंठविदुषः श्रीचन्द्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्त्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नय-निधौ पीयूषधाराभिधे व्याख्याने खलु संस्कृतिप्रकरणं पूर्णं सदानंददम् ॥ १ ॥ इति श्रीदैव-ज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्त्तचिंतामणिटीकायां पीयू-षधाराभिधायां सपरिकरं संस्कारप्रकरणं समाप्तिमगमत् ॥ ५ ॥

# अथ विवाहप्रकरणम् ६.

## विवाहे शुभसमयचिन्तनमावश्यकम्-

**भार्या त्रिवर्गकरणं शुभशीलयुक्ता शीलं शुभं भवति लग्नवशेन तस्याः ॥ तस्माद्विवाहसमयः परिचिंत्यते हि तन्निघ्नतामुपगताः सुतशीलधर्माः ॥ १ ॥**

श्रीगणेशाय नमः ॥ गौरीनन्दनमिष्टसिद्धिसदनं विघ्नावलीभेदनं नत्वा ज्योतिषिकाग्र्यरामरचिते मौहूर्त्तचिंतामणौ। गोविन्दो बुधनीलकण्ठाविधिवित्सूनुः सतामग्रणीर्बह्वर्थं करपीडनप्रकरणं व्याख्याति विद्वन्मुदे ॥ १ ॥ अथ विवाहप्रकरणं व्याख्यायते ॥

## विवाहपदार्थस्तद्भेदाश्च-

तत्र विवाहशब्देन पाणिग्रहणाख्यः संस्कारविशेष उच्यते-ते च विवाहा अष्टौ । उक्तञ्च मनुना-"चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्। अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ॥ (१) ब्राह्मो (२) दैवस्तथा चा (३) ऽऽर्षः (४) प्राजापत्यस्तथा (५) ऽऽसुरः। (६) गांधर्वो (७) राक्षसश्चैव (८) पैशाचश्चाष्टमोधमः" इति ॥

## अष्टविधविवाहलक्षणानि-

एषां लक्षणान्याह याज्ञवल्क्यः-(१)"ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥ (२)-यज्ञस्थऋत्विजे दैव (३)-आदायार्षस्तु गोद्वयम्। चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ (४)-इत्युक्त्वाचरतां धर्मं सह या दीयतेऽर्थिने । स कायः पावयेत्तज्जः षट् षड्वंश्यान्सहात्मना ॥ (५) आसुरो द्रविणादानाद् (६)-गांधर्वः समयान्मिथः। (७) राक्षसो युद्धहरणात् (८)-पैशाचः कन्यकाछलात्" इति। कायः प्राजापत्यः। छलं वंचना ॥

## एतेषु कालनियमानियमव्यवस्था-

एषां कालनियममाह नारदः-"प्राजापत्यब्राह्मदैवविवाहा ऋषिसंज्ञकाः। उक्तकालेषु कर्त्तव्याश्चत्वारः फलदायकाः ॥ गांधर्वासुरपैशाचराक्षसाख्याश्च सर्वदा" इति। अतएव- "सार्वकालमेके विवाहम्" इति गृह्यकारवचनं गांधर्वादिविवाहविषयम् ॥

## विवाहे उपोद्घातः-अनाश्रमवासपुत्रोत्पत्त्यादिरित्यादिरूपः-

स च विवाहः स्त्रीपुरुषद्वयायत्तः। तत्रापि बहुधा पुरुषायत्तः-"अनाश्रमी न तिष्ठेत क्षणमेकमपि द्विजः। आश्रमादाश्रमं गच्छेदेष धर्मः सनातनः" इति च स्मरणादितराश्रमोपजीव्यतया प्राधान्याच्चेति समावर्त्तनानंतरं पुरुषेणावश्यं विवाहे यतितव्यम् ॥ किंच-

अग्निहोत्रादीनां नित्यानां कर्मणां करणे पत्नीं विना नाधिकार इति स्मृतौ स्मरणात् ॥ " नापुत्रस्य लोकोऽस्ति " इति श्रुत्या पुत्राभावे परलोके दुर्गतिबोधनाच्च ॥ तत्र पुत्राद्युत्पत्तिस्तु दंपत्योरानुकूल्यं विना न स्यात् । उक्तञ्च याज्ञवल्क्येन-" यत्रानुकूल्यं दंपत्योस्त्रिवर्गस्तत्र वर्द्धते " इति । त्रिवर्गो धर्मार्थकामात्मकः । स च ज्योतिःशास्त्रैकदेशविवाहपटलाधीन इत्येतत्सर्वं मनस्यालोच्य सप्रयोजनं विवाहप्रकरणारंभं वसंततिलकया प्रतिजानीते-भार्येति । शुभं भर्त्रादेरनुकूलं शीलं स्वभावस्तेन युक्ता भार्या त्रिवर्गस्य धर्मार्थकामरूपस्य करणं स्थानमस्ति । अत्र स्त्रीनपुंसकलिंगयोः सामानाधिकरण्यं " वेदाः प्रमाणं स्मृतयः प्रमाणम् " इतिवत्साधु अजहल्लिंगत्वादस्य । तस्याः सुलग्नवशेन शीलं शुभं भवति । यतः सुतशीलधर्माः तन्निघ्नतां विवाहाधीनताम्-' अधीनो निघ्न आयत्तः ' इति ' त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ' इति चामरः । उपगताः प्राप्ताः । अतो हि निश्चयेन विवाहसमयः परिचिंत्यते विचार्यते इति ॥

## विवाहफलम्-

उक्तञ्च कश्यपेन-" अथातः संप्रवक्ष्यामि गृहस्थाश्रममुत्तमम् । य आधारोऽन्याश्रमाणां भूतानां प्राणिनां तथा ॥ ऋणत्रयच्छेदकारि धर्मकामार्थसिद्धिदम् । एतत्सर्वं स्थितं स्त्रीषु शीलवृत्तान्वितासु च ॥ तच्छीलवृत्तलब्धिस्तु सुलग्नवशतो भवेत् । तस्मात्सम्यग्लग्नशुद्धिं प्रवक्ष्याम्यनुपूर्वशः " इति । ऋणत्रयं देवऋणंपितृऋणमृषिऋणं च ॥

## गृहस्थाश्रमप्राशस्त्यम्-

वासिष्ठोपि-" कश्चिद्गृहाश्रमसमो न परोऽस्ति धर्मः सोपि स्थितः सुगुणवृत्तयुतांगनासु । उद्वाहलग्नवशतो गुणवृत्तलब्धिस्तासां तथाविधसुलग्नमतः प्रवच्मि " ॥

## तत्तत्कर्मणां सुलग्नेऽनुष्ठाने जन्मकालीनग्रहजन्यदुरदृष्टनाशः-

ननु जन्मकालीनखेचरावेदितशुभाशुभं दुरतिक्रमामिति विवाहलग्नानर्थक्यमिति चेन्न । ज्योतिषस्मृत्यावेदितशुभसमयारब्धविधिजन्यापूर्वजनितशुभफलेन जन्मांतरीयदुरदृष्टध्वंसो भवतीत्येवमर्थतया सार्थक्यात् । अत एवाह सत्याचार्यः-" शुभक्षणक्रियारंभजनिताः पूर्वसंभवाः । संपदः सर्वलोकानां ज्योतिस्तत्र प्रयोजनम् " इति । एवं व्रतबंधादावपि द्रष्टव्यम् ॥ १ ॥

## प्रश्नलग्नाद्विवाहे योगद्वयम्-

**आदौ संपूज्य रत्नादिभिरथ गणकं वेदयेत्स्वस्थचित्तं**
**कन्योद्वाहं दिगीशानलहयविशिखे प्रश्नलग्नाद्यदींदुः ।**
**दृष्टो जीवेन सद्यः परिणयनकरो गोतुलाकर्कटाख्यं**
**वा स्यात्प्रश्नस्यलग्नंशुभखचरयुतालोकितंतद्विदध्यात् ॥२॥**

प्रश्नलग्नाद्विवाहयोगद्वयं स्रग्धरयाह-आदाविति । अथशब्दो मंगलार्थः । ग्रंथमध्यस्थत्वात् । यथोक्तं-"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कंठं भित्त्वा विनिर्यातौ तस्मान्मां-

गलिकावुभौ " इति । आदौ गणकं ज्योतिर्विदं रत्नादिभिः रत्नमणिसुवर्णवस्त्रफलादिभिः संपूज्य ततः प्रष्टा जनः कन्याया उद्वाहं गणकं वेदयेत् ज्ञापयेत् । " गतिबुद्धि " इत्यादिना विदेर्बुद्ध्यर्थत्वादणौ कर्त्तुः कर्मत्वम् ॥

## दानस्य ग्रहीतुः स्वस्थचित्ततासंपादनद्वारा वक्तव्यार्थे निर्दुष्टतासंपत्तिः फलम्-

कीदृशं गणकम् । स्वस्थचित्तमव्याकुलांतःकरणं । " स्वस्थे चित्ते बुद्धयः संभवंति " इति लोकोक्तेः ॥ रत्नादिग्रहणमप्येतदर्थमेव । यदाह वासिष्ठः-"शुभे दिने दैवविदं त्वभिज्ञं तांबूलपुष्पाक्षतपूर्णपाणिः । प्रष्टा च गत्वा प्रणिपत्य पृच्छेन्निवेद्य तस्मै वरकन्ययोर्भे " इति । उत्पलोपि-" प्रष्टा मणिकनकयुतैः फलकुसुमै राशिचक्रमभ्यर्च्य । पृच्छेद्यथाभिलषितं भक्त्या विनयान्वितः प्रश्नम् " इति ॥

## तत्र प्रथमो योगः-

तत्रैको विवाहयोग उच्यते-दृगिति । यदि प्रश्नलग्नात् दशमैकादशतृतीयसप्तमपंचमानामन्यतमे स्थितश्चंद्रो जीवेन गुरुणा दृष्टः-तदा सद्यः शीघ्रं परिणयनकर्त्ता स्यात् । यदाह वसिष्ठः-"लग्नात् त्रिपंचास्तदशायगस्तु हिमद्युतिर्जीवनिरीक्षितश्च । तयोस्तु संबंधकरस्तदानीं नार्काशुलुप्तो न च नीचभगेत् " तयोर्वरकन्ययोः ॥ कश्यपोऽपि-"लग्नाद्दुश्चिक्यपुत्रास्तकर्मलाभगतः शशी । गुरुदृष्टस्तयोरेवं संबंधं कुरुते सदा " इति । संबंधं विवाहम् ।

## द्वितीययोगस्तत्रैव-

द्वितीयो योग उच्यते । गोतुलेति । गौर्वृषः वृषतुलाकर्काणामन्यतमं प्रश्नलग्नं वा स्यात् तच्चेत् शुभग्रहैर्युतमवलोकितं वा भवेत्तर्हि तत्परिणयनं विदध्यात् । " विलग्नगा गोघटकर्कटाश्च हिमांशुदैत्येज्यसमन्वितास्ते । संवीक्षिता वा यदि कन्यकाया लाभो भवेत्तत्र च पृच्छकस्य " इति वसिष्ठोक्तेः । कश्यपोपि-"लग्नस्थाश्चंद्रशुक्राभ्यां वीक्षिताः संयुताश्च वा । कुर्वंति कन्यकालाभं यदि गोघटकर्कटाः " इति ॥

## योगान्तरे अपि तत्र-

अत्र नारदादिभिः शुक्रचंद्रयोर्दृष्टियोगश्चाभिहितः । ग्रंथकर्त्रा तु शुभखचरत्वाद्बुधगुर्वोरपि दृष्टिरुक्ता । सा कन्याया भर्तृप्रश्ने सति तत्प्राप्तिसूचिका ज्ञेया । तुल्यन्यायत्वात् । अथवा-" लग्नं विधुभृगुजयुतालोकितम् " इति पाठः कल्प्यः ॥ २ ॥

## पुनस्तत एव विवाहे योगद्वयान्तरम्-

**विषमभांशगतौ शशिभार्गवौ तनुगृहं बलिनौ यदि पश्यतः ॥**
**रचयतो वरलाभमिमौ यदा युगलभांशगतौ युवतिप्रदौ ॥३॥**

अथान्यद्विवाहयोगद्वयं द्रुतविलंबितेनाह-विषमेति । चरणद्वयं स्पष्टार्थम् । अत्रोत्तरार्द्धे संमतिवाक्योक्तकन्यालाभप्रदयोगाद्वैपरीत्यमिति युक्तितो निबद्धं ग्रंथकृता । अयमेको विवाहयोगोभिहितः ॥

## विवाहे योगान्तरम्-

विषमेति । अथापरो विवाहयोगः । यदेमौ शशिभार्गवौ युगलभांशगतौ युग्मराशिगतौ युग्मांशकगतौ च बलिनौ संतौ तनुगृहं पश्यतस्तदा कन्याप्रदौ स्यातामू । यदाह नारदः- "शुक्रेन्दू युग्मराशिस्थौ युग्मांशकगतौ यदा । वीक्षिते बलिना लग्ने कन्यालाभो भवेत्तदा" इति ॥ ३ ॥

## प्रश्नलग्नाद्वैधव्ययोगत्रयम्-

**षष्ठाष्टस्थः प्रश्नलग्नाद्यदींदुर्लग्ने क्रूरः सप्तमे वा कुजः स्यात् ।**
**मूर्ताविंदुः सप्तमे तस्य भौमो रंडा सा स्यादष्टसंवत्सरेण ॥४॥**

प्रश्नलग्नाद्वैधव्ययोगत्रयं शालिन्याह-षष्ठेति । यदि प्रश्नलग्नादिन्दुश्चन्द्रः षष्ठाष्टमस्थस्तदा कन्या अष्टसंवत्सरेण । विवाहवर्षादिति शेषः । रंडा भर्तृनाशिका स्यात् । ततः स्वयमपि म्रियेत । सर्वथा द्वयोरपि मरणमष्टमाब्दानंतरं स्यादित्यर्थः। संमत्यनुरोधात् । यदाह वसिष्ठः- "प्रष्टुर्विलग्नात्प्रबलः शशांकः शत्रुस्थितो मृत्युगृहास्थितो वा । यद्यष्टमाब्दात्परतो विवाहं करोति मृत्युं वरकन्ययोश्च" इति ॥

## तत्र द्वितीयो वैधव्ययोगः-

अथान्यः-वा अथवा लग्ने यः कश्चित्क्रूरग्रहः स्यात्ततः सप्तमे स्थाने कुजो भौमो भवेत्तदाऽष्टवर्षमध्ये रंडा स्यात् । यदुक्तं नारदेन-"यदि लग्नगतः क्रूरस्तस्मात्सप्तमगः कुजः । विज्ञेयं मरणं पुंसः सप्तमाब्दान्तरे यदि" । केचित्सप्तमेपि क्रूरग्रहमेवंविधे प्रश्ने निषेधंति । यदाह कश्यपः-"एको लग्नगतः पापः पापोन्यः सप्तराशिगः । आसप्तमाब्दान्मरणं पुरुषस्य न संशयः" इति । "यद्युदयस्थः क्रूरस्तस्माद्यदि सप्तमो भवेत्पापः । सप्तभिरब्दैर्मरणं विज्ञेयं तस्य पुरुषस्य" इति । वसिष्ठोपि-"एकोपि लग्नोपगतश्च पापः पापस्ततोन्यः खलु सप्तमस्थः । आसप्तमाब्दान्निधनं वरस्य बलान्वितौ तौ कुरुतस्त्ववश्यम्" ॥ एषां मते 'सप्तमे वा खलः स्यात्' इति पाठः कल्प्यः । अस्मिन् पाठे विशिष्य कुजग्रहणं न कर्त्तव्यं भवति । पापत्वादेव तल्लाभादिति युक्तमुत्पश्यामः ॥

## वैधव्यप्रापकं योगान्तरम्-

अथापरः-मूर्तौ लग्ने इंदुः तस्य सप्तमे स्थाने भौमो भवेत्ततोष्टवर्षानंतरं रंडा स्यात् । उक्तं च नारदेन-"यदि लग्नगतश्चंद्रस्तस्मात्सप्तमगः कुजः । विवाहानंतरं भर्त्ता त्वष्टवर्षे न जीवति" ॥ ४ ॥

## कुलटामृतवत्सायोगौ प्रश्नलग्नात्-

**प्रश्नतनोर्यदि पापनभोगः पंचमगो रिपुदृष्टशरीरः ॥**
**नीचगतश्च तदा खलु कन्या सा कुलटा त्वथवा मृतवत्सा॥५॥**

प्रश्नलग्नात्कुलटामृतवत्सायोगाविकल्पं दोधकवृत्तेनाह-प्रश्नतनोरिति । यदि प्रश्नलग्नात्पापग्रहः पंचमस्थानस्थः शत्रुग्रहावलोकितः सन् स्वनीचगतश्च स्यात्तदा खलु निश्चितं सा कन्या कुलटा वेश्या भवेत् । अथवा मृतवत्सा मृतापत्या वा भवेत् । तुः पादपूरणे । यदाह

कश्यपः—" स्वनीचगः शत्रुदृष्टः पापः पंचमगो यदा । मृतपुत्रां करोत्येव कुलटां च न संशयः ॥" इति । नारदोपि—" लग्नात्पंचमगः पापः शत्रुदृष्टः स्वनीचगः । मृतपुत्रा तदा नारी कुलटा वा न संशयः" इति । शत्रुमित्रमध्यग्रहान् ' मित्राणि द्युमणेः ' इत्यादिना वक्ष्यत्यत्रैव ॥ ५ ॥

## विवाहभङ्गयोगः प्रश्नलग्नात्—

यदि भवति सितातिरिक्तपक्षेतनुगृहतःसमराशिगः शशांकः ॥
अशुभखचरवीक्षितोरिरंध्रेभवतिविवाहविनाशकारकोऽयम् ॥ ६ ॥

विवाहभंगयोगं पुष्पिताग्रयाह—यदीति । सितातिरिक्तपक्षे कृष्णपक्षे तनुगृहतः यदि शशांकश्चन्द्रः समराशिषु वृषकर्कादिषु गतः सन् तनुगृहतः प्रश्नलग्नराशितोरिरंध्रे षष्ठेऽष्टमे वा स्थाने स्थितः अशुभखचरैः पापग्रहैरवलोकितो भवति तदायं योगो विवाहस्य विनाशकारको भवति तदुक्तं नारदेन—" कृष्णपक्षे शशी लग्नाद्युग्मराशिगतो यदि । पापदृष्टो न संबंधं करोत्येवारिरंध्रगः ॥ " इति । विवाहविनाशकारक इत्यत्र प्रयोगे समासानुपपत्तिरित्यस्य समाधिश्च ग्रन्थांते करिष्यते ॥ ६ ॥

## जन्मकालीनग्रहवशात् बालवैधव्यपरिहारोपायः—

जन्मोत्थं च विलोक्य बालविधवायोगं विधाय व्रतं
सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः ।
सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा विवाहं स्फुटं
दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः ॥ ७ ॥

एवं प्रश्नलग्नाद्वंध्यामृतापत्यादियोगानभिधायेदानीं जन्मकालीनबालवैधव्ययोगविचारमतिदिशंस्तत्परिहारान् शार्दूलविक्रीडितेनाह—जन्मोत्थमिति । यथा प्रश्नलग्नाद्विधवायोगो विचारितस्तथा जन्मोत्थं जन्मकालीनं च बालविधवायोगं विलोक्य जातकशास्त्राज्जन्मकालीनलग्नवशतो वैधव्ययोगं विचार्य वक्ष्यमाणव्रतं कारयेदित्यन्वयः । तत्र बालविधवायोगानाह होरामकरंदे गुणाकरः—"त्यक्ता धवेनोष्णकरेस्तसंस्थे बाल्येपि भौमे विधवा प्रदिष्टा । पापग्रहालोकनवर्गयाते कन्यैव वंध्या भवतीति सूत ॥ वैधव्यं क्रूरखेटैर्मदनगृहगतैर्मिश्रितैः स्यात्पुनर्भूः पापैस्तैर्वीर्ययुक्तैर्भवति परिहृता प्रेयसा सौम्यदृष्टे । अन्योन्यांशस्थयोश्च क्षितिसुतसितयोर्बंधकी योषिदुक्ता चंद्रोर्वीसूनुशुक्रा यदि मदनगृहे प्रेयसोनुज्ञया सा ॥ " इति । अन्यमपि श्लोकं पठंति—" लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे । कन्या भर्तुर्विनाशाय भर्ता कन्याविनाशदः ॥ " इति ॥

## वैधव्ययोगपरिहारः—

जातकीयवैधव्ययोगपरिहार उच्यतेऽस्माभिः-"द्यूनाद्वाचां पतिशुभगत रंध्रभाश्चादूत्मृत्युर्नीशोरुदयगृहतस्तद्वपुश्चिंतनीयम् " इति गुणाकरेण सप्तमस्थानाद्भर्तृसौभाग्ये विचार्ये इत्यु-

हारोक्तम् । तत्र-"यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः । पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या पृच्छतां जन्मतो वा ॥" इति भट्टोत्पलोक्तेः स्वस्वामिसौम्यैरीक्षितं चेत्सप्तमस्थानं भवति तदा तद्भावसुखं वाच्यम् । केचित्तु स्त्रीणां महत्यरिष्टयोगे तत्परिहारमाहुः ।

## प्रबलवैधव्ययोगपरिहारः-

अथापरिहार्य्ये वैधव्ययोगे प्रतीकारमाह-विधायेति । रह इति वक्ष्यमाणमिहापकृष्टव्यम् । पित्रादिः सुतया कन्यया रह एकांते हि निश्चयेन सावित्र्या व्रतं विधाय कारयित्वा उत अथवा पैप्पलं पिप्पलसंबंधि व्रतं एकांते विधाय पश्चादिमां कन्यां सुलग्ने चिरजीविने वराय दद्यात् । तदुक्तं व्रतखंडे-" सावित्र्यादिव्रतादीनि भक्त्या कुर्वंति याः स्त्रियः । सौभाग्यं च सुहृत्त्वं च भवेत्तासां सुसंगतिः" इति । सावित्रीव्रतकरणप्रकारस्तत्रैव प्रसिद्धः॥ संहितासारे-"अवैधव्यकरैर्योगैर्विवाहपटलोदितैः । वरायायुष्मते देया कन्या वैधव्ययोगजा ॥" इति ॥

## वैधव्ययोगनाशकपिप्पलव्रतप्रकारः-

पिप्पलव्रतमुक्तं ज्ञानभास्करे-"बलवद्विधवायोगे बाल्ये सति मृगीदृशाम् । पिता रहसि कुर्वीत तद्भंगं शास्त्रसंमतम् ॥ सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते । अवैधव्यकरे योगे लग्ने ग्रहबलान्विते । व्रतारंभं प्रकुर्वीत बालवैधव्यनाशनम् ॥ सुस्नाता चित्रवस्त्राढ्या कन्या पितृगृहाद्बहिः ॥ नीत्वाश्वत्थशमीस्थाने यद्वा बदरिकाश्रमे ॥ आलवालं प्रकुर्वीत विपुलं मृदु कर्षितम् । कुमार्याचार्यनिर्दिष्टं कृत्वा संकल्पमादरात् ॥ करकांबुप्रपूर्णेन सिंचनं प्रतिवासरम् । चैत्रे चाश्विनमासे च तृतीयासितपक्षतः । यावत्कृष्णतृतीयान्या मासमेकं यथाविधि ॥ ब्राह्मणानां तथा स्त्रीणां पूजनं च समाचरेत् । तदाशिषाप्नुयात्कन्या सौभाग्यं च सुखान्वितम् ॥ प्रतिमां पार्वतीशार्नीं वैष्णवे भोजनेर्चयेत् । चंदनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि ॥ उपचारैर्यथाभक्त्या नैवेद्यैः प्रतिवासरम् । एवं व्रतप्रभावेण बालवैधव्यनिष्कृतिः । जायते कन्यकानां च ततः पाणिग्रहक्रिया " ॥ इत्यश्वत्थव्रतम् ॥

## प्रबलवैधव्ययोगपरिहारस्त्रिधा-

अथान्यदपि अपरिहार्यबालवैधव्ययोगापहारकं प्रकारत्रयमाह-वा रह इत्यादि । वा अथवा रह एकांते अच्युतमूर्तिः विष्णुप्रतिमा । पिप्पलघटौ प्रसिद्धौ । एषां मध्ये अन्यतरेण मनोभीष्टेन साकं संलग्ने वक्ष्यमाणदूषणरहिते सौभाग्यगुणान्विते च विवाहलग्ने विवाहं कारयित्वा पश्चात्तां कन्यां स्फुटं लोकप्रसिद्धं यथा भवति तथा चिरजीविने आयुष्मते वराय दद्यात् पित्रादिरधिकारी । तदुक्तं मार्कंडेयपुराणे-"बालवैधव्ययोगेपि कुम्भद्रुप्रतिमादिभिः । कृत्वा लग्नं रहः पश्चात्कन्योद्वाह्येति चापरे ॥ " इति । कुंभ इत्युलक्षणम् । तेन मंथन्यपि ग्राह्या । द्रुर्वृक्षः । " पलाशी द्रुद्रुमागमाः " इत्यमरः । स चाश्वत्थ एव नान्यः । प्रतिमा विष्णुप्रतिमा । शिरोभुजाद्यवयवयुता सौवर्णी न शालग्रामशिला । सर्वत्रापि प्रमाणं वक्ष्यते ॥

## (१) कुम्भेन सह विवाहः कन्यायाः-

कुंभविवाहः सूर्यारुणसंवादे-" विवाहात्पूर्वकाले च चंद्रताराबले शुभे। विवाहोक्ते च मंथन्या कुंभेन सह चोद्वहेत् ॥ पिता संकल्पबाह्यं च विवाहं विधिपूर्वकम्। सूत्रेणावेष्टयेत्पश्चाद्दशतंतुपिधानतः। कुंभमालंकृतं देहं तयोरेकांतमंदिरे। ततः कुंभं च निःसार्य निमज्य सलिलाशये ॥ ततोभिषेचनं कुर्यात्पंचपल्लववारिभिः। तत्सर्वं वस्त्रपूजाद्यं ब्राह्मणाय निवेद्य च ॥ कन्यालंकारवस्त्राद्यं ब्राह्मणाय निवेदयेत् ॥" इति कुंभविवाहः॥ कुंभप्रार्थना च तत्रैव-"वरुणांगस्वरूप त्वं जीवनानां समाश्रय। पतिं जीवय कन्यायाश्चिरं पुत्रान् सुखं वरम् ॥ देहि विष्णुवरादेव कन्यां पालय दुःखिताम् ॥" इति ॥

## (२) अश्वत्थेन सह विवाहः-

अश्वत्थविवाहस्तत्रैव-" सुहृद्द्विजगुरूनारीं मंगलोच्चारणैः समम् ॥ आहूयोद्वाहकाले च रम्यभूमौ सुमंडपे ॥ गत्वा प्रणम्य गौरीं च गणनाथं च भूरुहम्। भवानीं चैव मंथानीं पिता मंत्रमुदीरयेत् ॥ उद्वाहयिष्ये विधिवदश्वत्थेन मनोहराम्। कन्यां सौभाग्यसौख्यार्थहेतवेहं द्विजोत्तम ॥ नमस्ते विष्णुरूपाय जगदानंदहेतवे। पितृदेवमनुष्याणामाश्रयाय नमो नमः ॥ वनानां पतये तुभ्यं विष्णुरूपाय भूरुह। नमो निखिलपापौघनाशनाय नमोनमः ॥ पूर्वजन्मभवं पापं बालवैधव्यकारकम्। नाशयाशु सुखं देहि कन्याया मम भूरुह ॥" इत्यश्वत्थेन सह विवाहसंकल्पप्रार्थने। विवाहस्तु कुंभविवाहवद्विधेयः॥ इत्यश्वत्थविवाहः।

## (३) विष्णुप्रतिमया सह विवाहः-

एवं विष्णुप्रतिमया सौवर्ण्या सह विवाहं विधाय प्रतिमादानं विधेयम्। अथ प्रतिमादानविधिस्तत्रैव-" शुभे मासि सिते पक्षे सानुकुलग्रहे दिने। ब्राह्मणं साधुमामंत्र्य संपूज्य विविधार्हणैः॥ तस्मै दद्याद्विधानेन विष्णोर्मूर्त्तिं चतुर्भुजाम्। शुद्धवर्णसुवर्णेन वित्तशक्त्याथवा पुनः ॥ निर्मितां रुचिरां शंखगदाचक्राब्जशोभिताम्। दधानां वाससी पीते कुमुदोत्पलमालिनीम् ॥ सदक्षिणां च तां दद्यान्मंत्रमेतमुदीरयेत्। 'यन्मया पूर्वजनुषि भ्रंत्या पतिसमागमम्॥ विषोपविषशस्त्राद्यैर्हतो वातिविरक्तया। प्राप्यमाणं महाघोरं यशःसौख्यधनापहम् ॥ वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये। बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ॥ सौवर्णीं निर्मितां शक्त्या तुभ्यं संप्रददे द्विज। अनघाद्याहमस्मीति त्रिवारं प्रवदेदिति ॥' एवमस्त्विति विप्राशीर्गृहीत्वा स्वगृहं विशेत्। ततो वैवाहिकं तातो विधिं कुर्यान्मृगीदृशः॥" इति प्रतिमादानविधिः॥ इति विष्णुप्रतिमाविवाहः॥एवं घटेनाश्वत्थेन वा विष्णुरूपेण वा एकांते विवाहं विधाय पश्चाद्वादित्रघोषपुरःसरं पित्रादिः कन्यादानाधिकारी कन्यामायुष्मते वराय दद्यात्॥

## कन्यादातारः विवाहे-

कन्यादातॄनाह याज्ञवल्क्यः-" पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः" इति ॥ ननु 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरोक्तेर्द्विः परिणी-

ताया: कन्यायाः पुनर्भूत्वेन महादोषः संभवतीत्यपेक्षायामाह-अत्र न भवेदिति । अत्रैवंविधे कुंभादिविवाहानंतरं कन्यायाः पुनरायुष्मद्वरेण सह विवाहविषये पुनर्भूभवः पुनर्भूसंभूतदोषो नास्ति ॥ कुतो दोषो नास्तीति । उच्यते-विधानखंडे तथाभिधानात् । "स्वर्णांबुपिप्पलानां च प्रतिमा विष्णुरूपिणी । तया सह विवाहे च पुनर्भूत्वं न जायते॥"(चकाराद् घटस्यापि) । "लक्ष्मीरूपा सदा कन्या हरिरूपं सदा जलम् । हरेर्दत्तं च यद्दानं दातुः पापहरं सदा॥ लक्ष्मीनारायणप्रीत्यै या दत्ता कन्यका बुधैः । तारयेत्सकलं दातुः कुलं पूर्वापरं सदा ॥ चंद्रगंधर्ववह्न्यंबुशिवसोमस्मरा इमे । पतयः कन्यकानां च बाल्यात्संति सदैव ते ॥ तदुद्वाहविधिर्यत्नात्कृतो नो जनयेदघम् । यथालिभुक्तं कमलं देवानां पूजनाय वै ॥ अर्हं भवति सर्वत्र तथा कन्या नृणां भवेत् ॥" इति । धर्मशास्त्रेपि-"यत्किंचित्कथितं शास्त्रे शांतिकं पतिरक्षणे । तत्पापमपि नो पापं येन धर्मोभिरक्ष्यते " इति । श्रुतावपि सोमादिभिः सहोद्वाहोभिहितः-"सोमः प्रथमो विविदे गंधर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः॥ सोमोददद्गंधर्वाय गंधर्वोददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् " इति ॥ अतो देवभोग्यानां कन्यानां पुरुषविवाहे यथा न दोषः पुनर्भूभवस्तथात्रापि । अतएव हि लोकेपि शिष्टाचारो दृश्यते-"मंथन्या भास्करो यत्नात्कृतवान्दुहितुर्विधिम् । रेणुकोपि स्वकन्यायास्तरूद्वाहं चकार सः"इति विधानखंडे उक्तत्वात् । अतएव"पित्रा मात्रा तथा भ्रात्रा दत्ता या तोयधारया। विप्राग्निसुहृदां साक्ष्यं कृत्वा सोद्वाहिता भवेत्"इति कात्यायनादिभिर्विवाहस्य परिभाषितत्वादेकदा कन्या पुरुषविवाहं निर्वर्त्य पुनर्द्वितीयपुरुषविवाहे जाते सा पुनर्भूरेवेत्यलमियता ॥ ७ ॥

कन्याया अस्याः प्रथमं कीदृशमपत्यं भवितेति प्रश्ने उत्तरदानप्रकारः-

**प्रश्नलग्नक्षणे यादृशापत्ययुक् स्वेच्छया कामिनी तत्र चेदाव्रजेत् ॥ कन्यका वा सुतो वा तदा पंडितैस्तादृशापत्यमस्या विनिर्दिश्यते ॥ ८ ॥**

अथास्याः कन्यायाः कीदृशमपत्यं प्रथमं भवितेति प्रश्ने स्रग्विणीछंदसोत्तरमाह-प्रश्नेति । तत्र ज्योतिर्वित्समीपे यादृशापत्ययुग्यादृशापत्यमेव विवृणुते । कन्यकेत्यादि ॥ शेषं पद्यं स्पष्टार्थम् । यदाह शौनकः-" आलिंग्य शिशुं कन्या पृच्छकमाश्रित्य तिष्ठति प्राक् चेत् ॥ स्त्रीहस्ता स्त्रीजननी पुंहस्ता पुत्रजननी च " इति ॥ कन्या । यस्य कस्यापीति शेषः ॥ ८ ॥

प्रश्नसामान्येषु शुभाशुभनिर्णयोपायः-

**शंखभेरीविपंचीरवैर्मंगलं जायते वैपरीत्यं तदा लक्षयेत् ॥ वायसो वाखरःश्वासृगालोपिवाप्रश्नलग्नक्षणेरौति नादंयदि॥९॥**

अथ सामान्यतो निमित्तवशेन शुभाशुभप्रश्नं स्रग्विण्याह—शंखेति। शंखः प्रसिद्धः। भेरी वाद्यविशेषस्ताम्रादिनिर्मितः। विपंची वीणा। एतेषां रवैः प्रश्नलग्नक्षणे श्रुतैर्मंगलं जायते। उपलक्षणत्वान्मनोह्लादितुरगगजच्छत्रादिसान्निध्येपि शुभं द्रष्टव्यम्। यदाह शौनकः—"वादित्रतूर्यघोषो वीणावेणुप्रगीतशब्दाश्च। शंखध्वनिः प्रशस्तः पृच्छाकाले कुमारीणाम्॥ वृषभो रथो गजो वा शंखः पद्मं ध्वजोथवा छत्रम्। सर्पति पृच्छकदेशे सोत्तमतां व्रजति सर्वलोकस्य॥" इति। सा विवाह्या कन्या।

## प्रश्नसामान्येऽशुभज्ञानोपायः—

अथाशुभयोग उच्यते—वैपरीत्यमिति। वायसः काकः खरो गर्दभः। श्वा कुक्कुरः। सृगालः प्रसिद्धः। यदि प्रश्नलग्नक्षणे वायसादिर्नादं शब्दं रौति तदा वैपरीत्यम् अशुभं लक्षयेत्। उपलक्षणत्वादुलूकोष्ट्रमहिषनादोप्यशुभः। उक्तं च शौनकेन—"श्वसृगालोलूकरवो महिषोष्ट्रगजाविकप्रलापो वा॥" इति। बृहस्पतिरपि सृगालादिसान्निध्यं निषिद्धमाह—"सृगालमहिषोष्ट्राश्च शिवा मेषाजकुक्कुटाः। खरकौशिकमार्जारा न प्रशस्ताः समीपगाः॥" इति॥

## अन्येपि शुभाशुभज्ञानोपायाः विवाहादिप्रश्ने—

अत्र प्रसंगादस्माभिः शौनकोक्ताः शुभाशुभयोगा लिख्यंते। (तत्र शुभयोगाः)—"कृकलासवानरोरगगर्दभसंश्लेषणं मिथोपि भवेत्। दैवज्ञपृच्छकानां कन्या एकत्र संरमते॥" (कन्या एकत्रेत्यत्र संहिताया अविवक्ष्यमाणत्वाद् वृद्ध्यभावः)। "भिद्यति यद्युदकुंभः शय्यासनपादुकादिभंगो वा। प्रश्नसमयेपि यस्यास्तस्या वैधव्यमादेश्यम्॥ उदयात्सप्तमसंस्थे रविभृगुतनये शशांके वा। वैधव्यं क्षितितनये सप्तगमे कन्यका म्रियते॥ सप्तमगोर्कः कन्यां मृतप्रजां पुंश्चलीं करोत्युदयात्। कथितं तु यथोद्वाहे योज्यं तत्प्रश्नसमयेपि॥ (अथ शुभा अपि)—"पृच्छा च वर्णत्रितयं समीपमाश्रुत्य तिष्ठति च्छागः। तस्यादेश्यं विदुषा यदा तदा यागभोगित्वम्॥ यदि पृच्छालग्नस्थौ गुरुसौम्यौ दीर्घजीविनं कुरुतः। पंचमसंस्थौ पुत्राञ्जामित्रगतौ धनं विपुलम्॥ सर्पंति यदि कुमाराः समीपगाः प्रच्छकस्य विगतभयाः। सा कन्या पुत्रवती कथनीया मंगलवती च॥ प्रमदात्मकद्रेष्काणे वनितांशो यदि विलग्नमायातः। दृष्टः शुक्रेंदुभ्यां कन्यालाभं समादिशति॥ प्रमदाभवननिविष्टाः प्रेक्ष्यंते यदि विलग्नमायातम्। योषिद्ग्रहैः सुबलिभिः कन्यालाभं तदा ब्रूयात्॥ एवं कुमारिकाणां पृच्छालग्ने वरोपलब्धिः स्यात्। द्रेष्काणे भवने वा नवांशके नृग्रहैर्बलिभिः॥" एवं शुभाशुभग्रहसूचितं निमित्तसंभूतं च ज्ञात्वा वक्तुर्ज्योतिर्विदो माहात्म्यमाह स एव—"एवं कुमारिकाणां गुणदोषतश्च कथनीयम्। दौःशील्यं निर्धनता वैधव्यं वान्यथात्वं वा॥ दृष्ट्वा निमित्तवर्गं नीचोच्चविधिं च जामित्रम्। कथयति फलमुद्वाहे तस्य न मिथ्या भवेद्वाणी॥" इति। एवमन्यानि शुभाशुभनिमित्तानि क्षुतादिकं च ग्रन्थांतरेभ्यो ज्ञेयानि।

## शुभाशुभज्ञानायोपश्रुतिसंपादनतत्प्रकारौ—

केचन विवाहे उपश्रुतिमपि विचारयंति। तदुक्तं विवाहवृंदावने—"आरोप्याक्षतपूरिते गणपतिं प्रस्थादिपात्रे शनैः सम्मार्जन्यधिवेष्टिते युवतयस्तिस्रः सकन्या निशि। निर्याता रजकादिवेश्मसु करे कृत्वा तमभ्यर्चितं यां वाचं शृणुयुस्तदर्थसदृशी लोके किलोपश्रुतिः"

इति । तत्रोपश्रुतिमंत्रः-"उपश्रुतिर्महादेवि चण्डालगृहवासिनि । यथार्थं ब्रूहि देवि त्वं शङ्कराज्ञप्रवर्द्धिनि ॥" इत्यलमतिप्रसंगेन ॥ ९ ॥

## कन्यावरणे पूर्वांगानि-

**विश्वस्वातीवैष्णवपूर्वात्रयमैत्रैर्वस्वाग्नेयैर्वा करपीडोचितऋक्षैः ॥ वस्त्रालंकारादिसमेतैः फलपुष्पैः संतोष्यादौ स्यादनु कन्यावरणं हि ॥ १० ॥**

कन्यावरणमुहूर्त्तं मत्तमयूरच्छन्दसाह-विश्वेति । उत्तराषाढास्वातीश्रवणपूर्वात्रयानुराधाधनिष्ठाकृत्तिकानक्षत्रैः अथवा विवाहनक्षत्रैरुपलक्षिते काले वस्त्रालंकारादिभिरादिशब्देन खाद्यमधुरवस्तुभिः समेतैः फलपुष्पैरादौ कन्यां संतोष्य अनु पश्चात्कन्यावरणं हि निश्चयेन स्यात् । उचितऋक्षैरित्यत्र "ऋत्यकः" इति प्रकृतिभावः ॥

## कन्यावरणप्रकारः-

यदाह वराहः-" पूर्वात्रयश्रवणमित्रभवैश्वदेवहौताशवासवसमीरणदैवतेषु । द्राक्षाफलेक्षुकुसुमाक्षतपूर्णपाणिरश्रांतशांतहृदयो वरयेत्कुमारीम् ॥ " इति । फलानि पूगीफलादीनि । कश्यपः-" पंचांगशुद्धिदिवसे चन्द्रताराबलान्विते । विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे । मासाद्यादिवसं रिक्तामष्टमीं नवमीं तिथिम् । त्यक्त्वान्यदिवसे गन्धस्रक्तांबूलफलान्वितैः । सह वृद्धद्विजगणैर्वरयेत्कन्यकां सतीम् ॥" अत्र लग्नशुद्धिर्महेश्वरेणोक्ता-" अशुभैस्त्रिषडायसंस्थितैः शुभखेटैः सुतधर्मकेंद्रगैः । यदि वोपचये गुरौ सिते हरिजस्थे वरयेत्कुमारिकाम् ॥ " इति ॥ हरिजं लग्नम् ॥ वरणं प्रार्थना ॥

## वाग्दानप्रकारः-

" वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया । वरावलोकनविधौ निश्चितस्त्वं सुखीभव " इति ॥ एवंरूपा वाग्दानाख्येति यावत् ॥

## विवाह्यकन्यायाः योग्यायोग्यस्वरूपादयः-

तत्र विवाह्यकन्यालक्षणमाह मनुः-" अव्यंगांगीं सौम्यनाम्नीं हंसवारणगामिनीम् । तनुलोमकेशदशनां मृद्वंगीमुद्वहेत्स्त्रियम् ॥ नोद्वहेत्कपिलां कन्यां नाधिकांगीं न रोहिणीम् ॥ नालोमिकां नातिलोमां न वाचाटां न पिंगलाम् ॥ ऋक्षवृक्षनदीनाम्नीं नांत्यपर्वतनामिकाम् ॥ न पक्ष्यहिप्रेष्यनाम्नीं न विभीषणनामिकाम् ॥ " इति । अंत्यश्चांडालः । शातातपः-" ह्रस्वस्वरां मेघवर्णां मधुपिंगललोचनाम् । तादृशीं वरयेत्कन्यां गृहस्थः सुखमेधते ॥" विष्णुपुराणेपि-" न श्मश्रुव्यंजनवतीं न चैव पुरुषाकृतिम् । नातिबद्धेक्षणां तद्वत्कृशांगीं नोद्वहेत्स्त्रियम् ॥ यस्याश्च रोमशे जंघे गुल्फौ यस्यास्तथोन्नतौ ॥ गंडयोः कूपको यस्या हसंत्याश्चैव जायते । नोद्वहेत्तादृशीं कन्यां प्राज्ञः कार्यविचक्षणः ॥ " इति । अतिबद्धेक्षणां निमीलितप्रायनेत्रामित्यादिसामुद्रिकशुभाशुभलक्षणलक्षितां परीक्ष्य कन्यां वरयेदिति । सामुद्रिकलक्षणानि काशीखण्डे वराहसंहितायामप्युक्तानि तत एव ज्ञेयानि ॥ १० ॥

### वरवरणमुहूर्तप्रकारादयः-

**धरणिदेवोऽथवा कन्यकासोदरः शुभदिनेगीतवाद्यादिभिः संयुतः॥
वरवृतिं वस्त्रयज्ञोपवीतादिना ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् ॥ ११ ॥**

वरवरणमुहूर्तमाह-धरणिदेव इति ॥ धरणिदेवो ब्राह्मणः पुरोहितादिः । शेषं स्पष्टार्थं पद्यम् । उक्तं च व्यवहारचंडेश्वरेण-" पूर्वात्रितयमाग्नेयमुत्तरात्रितयं तथा । रोहिणी तत्र वरणे भगणः शस्यते सदा ॥ उपवीतं फलं पुष्पं वासांसि विविधानि च । देयं वराय वरणे कन्याभ्रात्रा द्विजेन वा" इति ॥

### संग्राह्यवरस्वरूपम्-

कीदृशाय वराय कन्या देयेत्याह वसिष्ठः-"कुलं च शीलं च सनाथतां च विद्यां च वित्तं च वपुर्वयश्च । वरे गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिंतनीयम्" ॥

### त्याज्यवरस्वरूपम्-

कीदृशाय वराय न देयेत्याह चंडेश्वरः-" सितकुष्ठिन्यपस्मारे ब्रह्मघ्ने राजयक्ष्मणि । अंधे च परिवित्तौ च बधिरे दूरदेशगे ॥ व्यसनासक्तचित्ते च न देया कन्यका बुधैः " इति ॥ परिवित्तिलक्षणममरसिंहेनोक्तं-'परिवेत्तानुजोनूढे ज्येष्ठे दारपरिग्रहात् । परिवित्तिस्तु तज्ज्यायान्' इति । व्यसनं द्यूतादि ॥ वासिष्ठोपि " अत्यासन्ने नातिदूरेप्यत्याढयेप्यतिदुर्बले । वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते ॥ दूरस्थानामविद्यानां मोक्षधर्मानुवर्त्तिनाम् । शूराणां निर्द्धनानां च न देया कन्यका बुधैः ॥ " इति ॥

### गुणाढ्यायैव वराय कन्या देया नान्यस्मै-

" काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि । न त्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् " ॥ अत्र हीनगुणाय कन्या न देया किंतु गुणवते दयेति तात्पर्यम् । न पुनरसंस्कृतायास्तस्या रजोदर्शनानंतरमवस्थानं युक्तम् ॥ दोषस्मरणात् ॥

### रजस्वला कन्या न देया-नोद्वाह्या च-

यदाह वात्सः-" माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च । त्रयस्ते नरकं यांति दृष्ट्वा कन्यां रजस्वलाम् ॥ यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः । असंभाष्यो ह्यपांक्तेयः स भवेद्वृषलीपतिः"इति।वृषली रजस्वला । याज्ञवल्क्यः-"अप्रयच्छन्नवाप्नोति भ्रूणहत्यामृतावृतौ "॥ भ्रूणो बालकः ॥ ऋतु आर्तवं रजः । नारदोपि-यावंत ऋतवस्तस्याः समतीयुः पतिं विना । तावंत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम् " इति ॥ अतएवाह वसिष्ठः-" रजो हि दृष्टं यदि कन्यकायाः कुलद्वयं दुर्गतिमेति तस्यः । तस्मान्नितांतं च तदुक्तकालं नोलंघ्य पाणिग्रहणं विधेयम् " इति ॥ ११ ॥

### विवाह्यकन्यावयोनिर्णयः-ग्रहशुद्धिश्च-

**गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टात् ॥
रविशुद्धिवशाच्छुभो वराणामुभयोश्चंद्रविशुद्धितोविवाहः॥१२॥**

अथ कन्याविवाहकालं ग्रहशुद्धिं च वसंतमालिकाछंदसाह-गुर्विति । कन्यकानां विवाहः षडब्दकोपरिष्टात्षड्वर्षातिक्रमानंतरं समवर्षेषु युग्मवर्षेषु सत्सु गुरुशुद्धौ सत्यां शुभः । अर्थात्पुरुषाणां विषमवर्षेषु रविशुद्धौ विवाहः शुद्धः । तदाह च्यवनः-" षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमो भुंक्तेथ गंधर्वस्ततः पश्चाद्धुताशनः " इति । इदमस्य व्याख्यानम्, जन्मानंतरं वर्षद्वयं सोमः कन्यां भुंक्ते तदनंतरं द्वे वर्षे गंधर्वस्तदनंतरमग्निस्ततो मनुष्याधिकार इति षडब्दतः प्राग्विवाहो न कार्यः । ततः षड्वर्षानंतरं समवर्षे विवाहः शुभः ॥

## स्त्रीणां युग्मे पुंसामयुग्मे वयस्येव विवाहः कार्यः-

यदाह नारदः-"युग्मेब्दे जन्मतः स्त्रीणां शुभदं पाणिपीडनम् । एतत्पुंसामयुग्मेब्दे व्यत्यये नाशनं तयोः" इति ॥ कश्यपोपि-"विवाहो जन्मतः स्त्रीणां युग्मेब्दे पुत्रपौत्रदः । अयुग्मे श्रीप्रदः पुंसां विपरीते तु मृत्युदः " इति । एवं सति । स्त्रीणां विवाहोष्टमदशमवर्षयोर्भवतीत्यर्थः ॥

## विवाहे कन्यायाः अष्टमं नवमं दशमं वयः श्रेष्ठम्-

अत एवाह व्यासः-"अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या द्वादशे वृषली स्मृता" इति ॥

## अष्टमनवमदशमवयस्ककन्यादाने सुफलम्-अन्यकन्यादाने सत्फलं न-

अस्य फलश्रुतिमाह वात्स्यः-"गौरीं ददन्नाकलोकं वैकुण्ठं रोहिणीं ददत् । कन्यां ददद्ब्रह्मलोकमतः परमसद्गतिम् ॥ प्राप्नोतीति शेषः । "गौरी विवाहिता सौख्यसंपन्ना स्यात्पतिव्रता । रोहिणी धनधान्यादिपुत्राढ्या सुभगा भवेत् । कन्या विवाहिता संपत्समृद्धा स्वामिपूजिता " इति॥ ननु नवमवर्षाया रोहिण्या अयुग्मवर्षत्वाद्विवाहः न संभवति । गर्भतो नवमवर्षग्रहणे अयुग्मवर्षत्वापरिहारात्स दोषस्तदवस्थ एव । येतु " अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत् " इति ॥ चंडेश्वरवाक्यमभ्यसंति तन्मते सुतरां विवाहाभावः ॥ उच्यते ॥ " युग्मेब्दे संपदः सौख्यं स्त्रिया धर्मायुषी सदा । भर्तुर्दुष्टा भवत्योजे निषेकान्नात्र संशयः " इति पराशरवाक्याद्गर्भग्रहणं यथावसीयते । नारदादिवाक्ये तु जन्मत इत्यपि तत्र षष्ठवर्षानंतरं जन्मतो विषमवर्षीयमासत्रयानंतरं नव मासाः शुभाः समवर्षीयमासत्रयं च । इदमेव च मासत्रयं नारदादिमते गृह्यते इति युक्ता व्यवस्थेति युक्तमुत्पश्यामः । एतदेवाभिप्रेत्योक्तं श्रीपतिनिबन्धे-"मासत्रयादूर्ध्वमयुग्मवर्षे युग्मे तु मासत्रयमेव यावत् । विवाहशुद्धिं प्रवदंति संतो वात्स्यादयो गर्गवराहमुख्याः" इति । "अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् । तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता" इति चंडेश्वरोक्तिश्च सार्थिका । एवं नवमवर्षस्यायुग्मत्वप्रयुक्तनिषेधोऽष्टमवर्षानंतरं मासत्रयमेव ॥ तस्मादनंतरं तु सुखेन विवाह इति व्यासवाक्येनाविरोधः ॥

## स्त्रीणां गुरोः पुंसां रवेः उभयोश्च चन्द्रस्य बलमावश्यकमेव विवाहे-

एवं विहितवर्षे यस्मिन्काले गुरुशुद्धिर्भवेत्तद्वशेन विवाहः कार्यः । गुरुशुद्धिस्तु-" बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः । श्रेष्ठो गुरुः खषट्त्र्याद्यैः पूजयान्यत्र निंदितः " इत्युपन-

### जन्मराशिजन्मलग्नान्यतरस्य विवाहादिलग्नस्य च स्वाम्यैक्ये न लग्नाष्टमदोषः-

अथाष्टमलग्नदोषपरिहारमाह—एकेति ॥ जन्मराशिजन्मलग्नयोरन्यतरस्य विवाहलग्नस्य च स्वाम्यैक्ये सति यथा मेषवृश्चिकयोः तथा तयो राशीश्वरयोः मैत्रे यथा सिंहमीनयोः। अत्र हि सूर्यगुर्वोरन्योन्यप्रीतिरस्ति। एतादृशविषये लग्नाष्टमदोषकृद्विवाहो न स्यात्। यदाह कश्यपः—"जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ। जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः॥" इति ॥ ४६ ॥

### विवाहादिलग्नस्य जन्मराशिलग्नापेक्षत्वेऽपवादान्तरम्-

**मीनोक्षकर्कालिमृगस्त्रियोष्टमं लग्नं यदा नाष्टमगेहदोषकृत् ॥**
**अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी ॥४७॥**

अथोत्तरार्द्धोक्तमेवार्थं स्पष्टमुपजातिकयाह—मीनेति ॥ उक्षा वृषः। स्त्री कन्या। अन्ये प्रसिद्धाः। एते राशयो यद्यष्टमलग्नानि स्युः। यथा सिंहान्मीनः, तुलातो वृषः, धनुषः कर्कः, मेषाद्वृश्चिकः, मिथुनान्मकरः, कुंभात्कन्याष्टमलग्नं तदाष्टमगेहदोषकृन्न भवेत्। कुत इत्यत आह ॥ अन्योन्येति ॥ प्रागुक्तपरस्परप्रीतिवशेन ॥ इदं चोपलक्षणं—मेषवृश्चिकयोस्तुलामकरयोश्च ऐकाधिपत्यात्। एवं सति सा वधूः परिणीता कन्या सुतायुर्गृहसौख्यभागिनी स्यात्। उक्तं च—"झषकुलीरवृषालिमृगांगना जननराशिविलग्नगृहाष्टमाः। शुभफला भृगुणा कथितास्तयोरधिपती सुहृदौ हि परस्परम् ॥" इति ॥

### प्रकारान्तरेणाष्टमलग्नदोषापवादः-

परिहारांतरमप्याह गुरुः—"लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः। यद्यष्टमगतस्योक्तदोषमाशु व्यपोहति ॥ रन्ध्रेशः स्वशुभांशस्थस्तुंगः स्वक्षेत्रमित्रगः। अष्टमस्थानदोषो हि विनश्यति न संशयः ॥" इति ॥ ४७ ॥

### लग्नेष्टमेशस्य तदंशस्य चास्थितौ द्वादशभवनलग्नादौ च दोषः-

**मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात् ॥**
**व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात् ॥४८॥**

अथाष्टमलग्नदोषप्रसंगाज्जन्मराशिजन्मलग्नाभ्यामष्टमेशस्य तदंशस्य च लग्नस्थितत्वदोषं तथा द्वादशभवनदोषं कुसुमविचित्राच्छंदसाह—मृतीति ॥ अष्टमभवननवांशो यदि विलग्ने स्यादथवाष्टमभवनस्वामी विलग्ने स्यात्तदा शुभकरो न स्यात्। यदाह कश्यपः—"दंपत्योरष्टमे लग्ने राशौ वापि तदंशके। तद्राशे वा लग्नगते तयोर्मृत्युर्न संशयः ॥" इति ॥

### जन्मराशिभ्यां द्वादशं लग्नं तदंशस्तत्स्वामी वा लग्ने इत्येतत्त्रयं दोषाः-

व्ययभवनं जन्मलग्नजन्मराशिभ्यां द्वादशं भवनमथवा व्ययांशोऽथवा व्ययस्वामी यदि लग्ने स्यात्तदा कलहकृत्स्यात्। उक्तं च कश्यपेन—"तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे।

विवाहे लग्नगे नैःस्व्यं नित्यं स्यात्कलहो द्वयोः ॥" इति ॥ नारदेनापि—" दंपत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः । अर्थहानिस्तयोस्तस्मात्तदंशस्वामिनं त्यजेत् ॥" इति ॥ ४८ ॥

### विषघटीदोषो लग्नस्य-

**खरामतो ३० त्यादितिवह्निपित्र्यभे खवेदतः ४० के रदत ३२ श्च सार्पभे ॥ खबाणतो ५० श्चे धृतितो १९ र्यमांबुपे कृते २० र्भगत्वाष्ट्रभविश्वजीवभे ॥ ४९ ॥**

**मनो १४ र्द्विदैवानिलसौम्यशाक्रभे कुपक्षतः २१ शैव-करेष्टि १६ तोऽजभे ॥ युगाश्वितो २४ बुध्न्यभतोय-याम्यभे खचंद्रतो १० मित्रभवासवश्रुतौ ॥ ५० ॥**

**मूलेऽङ्कबाणा ५६ द्विषनाडिकाःकृता४वर्ज्याःशुभेऽथो विषनाडिका ध्रुवाः ॥ निघ्ना भभोगेन खतर्क ६० भाजिताः स्फुटा भवेयुर्विषनाडिकास्तथा ॥ ५१ ॥**

विषघटीदोषं वंशस्थाभ्यामिंद्रवज्रया चाह—खरामेति ॥ रेवतीपुनर्वसुकृत्तिकामघानक्षत्रेषु खरामतः त्रिंशद्घटिकोत्तरं कृताश्चतस्रो घटिका विषनाडिकाः शुभे कार्ये वर्ज्याः स्युरिति तृतीयश्लोकेनान्वयः । एवं सर्वत्र व्याख्येयम् । के रोहिण्यां कृतेर्विंशतेः । अजभे पूर्वाभाद्र-पदायाम् । अन्यानि पदानि स्पष्टानि । तदेवं षष्टिघटीरूपे नक्षत्रभोगे ध्रुवकाश्चतस्रो विष-नाडिकाश्च प्रोक्ताः ॥

### षष्टिघटिकान्यूनाधिक्ये विषनाडिकाप्रमाणानि-

न्यूनाधिकत्वे तु स्पष्टीकरणमुच्यते—अथो इति ॥ विषनाडीनां ध्रुवाः खरामत इत्येवमा-द्यो नक्षत्रभोगेनेष्टेन निघ्नाः खतर्कैः षष्ट्या भाजितास्ततो विषनाडिका ध्रुवाः स्पष्टा भवेयुरि-त्यर्थः ॥ अत्रोपपत्तिस्त्रैराशिकेन ॥ यदि घटीषष्ट्यात्मकभभोगेनेमे ध्रुवका इमाश्चतस्रो विष-नाडिकाश्च लभ्यंते, तदेष्टभभोगेन किमिति तत्र ध्रुवा विषनाडिकाश्चेष्टभभोगेन गुण्याः षष्ट्या भाज्या इति फलितम् ॥ यदाह कश्यपः—" वियद्बाणा वेददस्राः खरामा व्योमसागराः। वेद-चन्द्राश्चन्द्रदस्रा खरामा व्योमबाहवः ॥ नेत्राग्नयो व्योमगुणाः शून्यदस्रा गजेंदवः । क्ष्माबा-हवो वियद्दस्राः शक्राश्चन्द्राः खभूमयः ॥ वेदचन्द्रास्तर्कबाणा वेददस्राः खबाहवः । व्योमें-दवो व्योमचंद्रा धृतयस्तर्कभूमयः ॥ वेदाश्विनः खरामाः स्युर्दस्रर्क्षा घटिकाः क्रमात् । आभ्यः परस्तात्क्रमशश्चतस्रो विषनाडिकाः ॥ ऋक्षाद्यतद्घटीनिघ्नाः षष्टिभक्ताः स्फुटाः स्मृताः । विष-नाडीदोषदुष्टं लग्नं सर्वगुणान्वितम् ॥ शुभैः सर्वैश्च संयुक्तमपि पंचेष्टकं त्यजेत् ॥" इति ॥ वसिष्ठः—" कुर्वंत्युद्वाहितां कन्यां विधवां वत्सरत्रयात् । अन्यस्मिन्मंगले ताश्च निधनं चाथ निर्द्धनम् ॥" इति ॥ ताः विषनाडिकाः ॥

## तिथिवारयोर्विषनाडिकाः-

प्रसंगात् ग्रंथांतरोक्तास्तिथिवारविषनाडिकाः प्रोच्यंतेऽस्माभिः । दैवज्ञमनोहरे-" तिथी १५ षु ५ नागा ८ द्रि ७ गिरी ७ षु ५ वारिधि ४ गजा ८ द्रि ७ दिक् १० पावक ३ विश्व १३ वासवाः १४ । मुनी ७ भ ८ संख्या प्रथमातिथेः क्रमात्परं विषं स्याद्घटिकाचतुष्टयम् ॥ नखा २० द्वयं २ द्वादश १२ दिक् च १० शैला ७ बाणाश्च ५ तत्त्वानि २५ यथाक्रमेण । सूर्यादिवारेषु परं चतस्रो नाड्यो विषं स्यात्खलु वर्जनीयम् ॥ " ज्योतिःसारे-" विवाहव्रतचूडासु गृहारंभप्रवेशयोः । यात्रादिशुभकार्येषु विघ्नदा विषनाडिकाः ॥ " इति ॥

## विषनाडिकादोषापवादः-

अस्य परिहारमाह दैवज्ञमनोहरे गुरुः-"चंद्रो विषघटीदोषं हंति केंद्रत्रिकोणगः । लग्नं विना शुभैर्दृष्टः केंद्रे वा लग्नपस्तथा ॥ " इति ॥ फलप्रदीपे-"विषनाड्युत्थितं दोषं हंति सौम्यर्क्षगः शशी । मित्रदृष्टोथ वा स्वीयवर्गस्थो लग्नपो भवेत् ॥ " ॥ ४९ ॥ ५० ॥ ५१ ॥

## दिवामुहूर्ताः-विवाहे-

**गिरिशभुजगमित्राः पित्र्यवस्वंबुविश्वेभिजिदथ च विधातापींद्र इंद्रानलौ च ॥ निर्ऋतिरुदकनाथोऽप्यर्यमाथो भगः स्युः क्रमश इह मुहूर्त्ता वासरे बाणचंद्राः ॥ ५२ ॥**

दुर्मुहूर्त्तदोषं विवक्षुरादौ दिवामुहूर्त्तान्मालिनीच्छंदसाह-गिरिशेति ॥ अत्र बाणचंद्रा इत्युक्तेः मुहूर्त्तस्य पार्थक्येन लक्षणं नोक्तम् । गिरिशो महादेवः । भुजगः सर्पः । मित्रः सूर्यविशेषः । पित्र्यवस्वंबुविश्वे प्रसिद्धाः । अष्टमोऽभिजित् । ततो विधाता ब्रह्मा, इन्द्रः । इंद्रानलौ । अत्र समुदितयोर्व्यासज्यवृत्तिदेवतात्वम् ॥ ततश्चतुर्थमुहूर्त्तस्वामिनः इत्यपेक्षिते पित्र्येति नक्षत्राभिधानादयुक्तं प्रतिभाति । अथवा नक्षत्रतदीशयोरभेदोपचारात् स्वामिनि वृत्तिः । ' इंद्रस्य ' अल्पाच्तरत्वात्पूर्वनिपातः । निर्ऋती राक्षसः । उदकनाथो वरुणः। अर्यमा भगश्चेमौ सूर्यविशेषौ । इत्येते बाणचंद्राः पञ्चदश वासरे मुहूर्ताः स्युः ॥ यदाह नारदः-"दिवामुहूर्ता रुद्राहिमित्राः पितृवसूदकम् । विश्वे विधातृब्रह्मेंद्रा इंद्राग्न्यसुरतोयपाः ॥ अर्यमा भगसंज्ञश्च विज्ञेया दशपंच च ॥ " इति ॥ ५२ ॥

## रात्रिमुहूर्ताः-विवाहे-

**शिवोजपादादष्टौ स्युर्भेशा अदितिजीवकौ ॥ विष्णवर्कत्वष्टृमरुतो मुहूर्त्ता निशि कीर्त्तिताः ॥ ५३ ॥**

रात्रिमुहूर्त्ताननुष्टुभाह-शिव इति ॥ प्रथममुहूर्त्तस्वामी शिवः । ततोऽजपादादष्टौ भेशा नक्षत्रस्वामिनो मुहूर्त्तेशाः स्युः । यथा अजपादः अहिर्बुध्न्यः पूषा अश्विनौ यमः अग्निर्ब्रह्मा सोम इत्यष्टौ ततो दशमेशोऽदितिः जीवको गुरुः । स्वार्थे कः । विष्ण्वर्कत्वष्टृमरुतः प्रसिद्धाः । एते निशि मुहूर्त्ताः प्रकीर्त्तिताः । मुनिभिरिति शेषः । यदाह नारदः-"ईशाजपादाहिर्बुध्न्यपूषाश्वियमवह्नयः । धातृचन्द्रादितीज्याख्यविष्ण्वर्कत्वष्टृवायवः ॥ " इति ॥

## मुहूर्तलक्षणं तत्फलं च-

मुहूर्त्तलक्षणं कश्यपेनोक्तम्-“ अह्नः पञ्चदशो भागो मुहूर्त्तोऽथ तथा निशि ” इति ॥ प्रयोजनमाह नारदः-“यस्मिन्नृक्षे हि यत्कर्म कथितं निखिलं च यत् । तद्दैवत्ये तन्मुहूर्ते कार्यं यात्रादिकं सदा ॥ ” इति ॥ यात्रेत्युपलक्षणं देवस्थापनाद्यं कार्यम् । ‘ धिष्ण्ये प्रोक्तं स्वामितिथ्यंशकस्य ’ इति ग्रन्थकृताप्युक्तम् ॥ ५३ ॥

## निषिद्धमुहूर्ताः-विवाहे-

**रवावर्यमा ब्रह्मरक्षश्च सोमे कुजे वह्निपित्र्ये बुधे चाभिजित्स्यात् ॥ गुरौ तोयरक्षौ भृगौ ब्राह्मपित्र्ये शनावीशसापौं मुहूर्त्ता निषिद्धाः ॥ ५४ ॥**

अथावसरप्राप्तान्निषिद्धमुहूर्त्तान् भुजंगप्रयातेनाह-रवाविति ॥ रवेर्वारेऽर्यमा लक्षणया अर्यमस्वामिकचतुर्दशसंख्याको मुहूर्त्तो निषिद्धः । एवं सोमवारे ब्रह्मरक्षः । द्वंद्वैकवद्भावः । ब्रह्मरक्षःस्वामिकौ मुहूर्त्तौ निषिद्धौ । एवं सर्वत्र व्याख्येयम् । पदानि स्पष्टार्थानि । ईशो महादेवः । यदाह नारदः-अर्यमा राक्षसब्राह्मौ पित्र्याग्नेयौ तथाभिजित् । रक्षःसार्पौ ब्राह्मपित्र्यौ भौजंगेशाविनादिषु ॥ वारेषु वर्जनीयास्ते मुहूर्त्ताः शुभकर्मणि ॥ ” ननु दुर्मुहूर्त्तोपलक्षितास्तिथ्यंशाः ‘सूर्ये षट्स्वर्नाग’ इत्यादिनोक्ता इति पुनरत्राभिधानमयुक्तमिति चेत् । सत्यम् । अग्रे कुलिका अपि वक्तव्याः संति । तत्पुनरुक्तिपरिहारावसरे समाधास्ये ॥ ५४ ॥

## विहितर्क्षाणि-विवाहे-अभिजिन्मानं च-

**निर्वेधैः शशिकरमूलमैत्र्यपित्र्यब्राह्मांत्योत्तरपवनैः शुभो विवाहः ॥ रिक्तामारहिततिथौ शुभेऽह्नि वैश्वप्रांत्यांघ्रिश्रुतितिथिभागतोऽभिजित्स्यात् ॥ ५५ ॥**

वेधदोषं विवक्षुर्विहितनक्षत्रादिकमभिजिन्मानं च प्रहर्षिण्याह-निर्वेधैरिति ॥ मृगशिरोहस्तमूलानुराधामघारोहिण्युत्तराफाल्गुन्युत्तराषाढोत्तराभाद्रपदास्वातीनक्षत्रैः निर्वेधैःवेधाख्यदोषरहितैः विवाहः शुभः शुभफलप्रदः । यदाह वसिष्ठः-“स्वात्यां मघायां निर्ऋतौ ध्रुवांत्यामित्रेंदुहस्तेषु च कन्यकानाम् । पाणिग्रहस्त्विष्टफलप्रदः स्यादविद्धभेष्वेव गुणान्वितानाम् ॥ ” इति ॥ नारदोपि-“पौष्णधात्र्युत्तरामैत्रमरुच्चंद्रार्कपित्र्यभैः । समूलभैरविद्धैस्तैः स्त्रीकरग्रह इष्यते ” इति ॥ स्त्रीग्रहणं मुख्यत्वसूचनार्थम् । गृहस्थाश्रमस्य तदायत्तत्वात् ।

## निषिद्धतिथिवारादयः-

रिक्तेति । रिक्तामाः प्रसिद्धाः । आभिर्वर्जिततिथिषु शुभेऽह्नि शुभग्रहवासरेऽपि विवाहः शुभः । यदाह वसिष्ठः-“शुक्लद्वितीयादित एव कृष्णे पक्षे दशम्यंतगताः प्रशस्ताः । तास्वष्टमीस्कन्दगणेशदुर्गाचतुर्दशी चापि तिथिर्विवर्ज्या ॥ वाराः प्रशस्ताः शुभखेचराणां सूर्यार्कि-

वारौ खलु मध्यमौ तौ । त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषौ ॥" इति ॥ तौ सूर्यार्किवारौ त्रयोदशीद्वादश्योः प्रदोषौ प्रकृष्टदोषावित्यर्थः । गणेशश्चतुर्थी ।

## चतुर्थीकर्मान्तं श्राद्धं यथा नापतेत्तथा लग्नावश्यकता विवाहादौ-

अत्र यदि विचारितविवाहादिनमारभ्य चतुर्थीकर्मपर्यन्तं पित्र्याद्यावश्यकश्राद्धदिनममावास्या वा भवति तदा विवाहो न कार्यः॥ उक्तं च-"विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् । वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात् ॥" इति ॥ अन्यच्च-"विवाहमध्ये यदि तत्क्षयाहस्तत्राश्रमाख्याः पितरो न यांति ॥ वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् ॥" इति ॥

## पुनः अभिजिन्मानम्-

वैश्वेति ॥ वैश्वमुत्तराषाढा तस्यांत्यांघ्रिः चतुर्थचरणः श्रुतेः श्रवणस्य पंचदशांशो मिलित्वाऽभिजिद्भोगः स्यात् । यदाह वसिष्ठः-"अभिजिद्भोगमेतद्वै वैश्वदेवांत्यपादमखिलं तत् । आद्यचतस्रो नाड्यो हरिभस्यैतच्च रोहिणीविद्धम् ॥" प्रयोजनमप्यधुनैव वक्ष्यति ॥ ५५ ॥

## पञ्चशलाकावेधदोषः-

**वेधोऽन्योन्यमसौ विरिंच्यभिजितोर्याम्यानुराधर्क्ष-**
**योर्विश्वेंद्वोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः ॥**
**स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोपांत्ययोः**
**खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयो द्वयोः ॥ ५६ ॥**

वेधदोषं पंचशलाकाचक्रोद्धारनिरपेक्षं स्पष्टार्थं शार्दूलविक्रीडितेनाह-वेध इति ॥ विरिंचिः रोहिणी रोहिण्यभिजितोर्ग्रहैः क्रूराक्रूरैः कृतो वेधोन्योन्यं परस्परं भवेत् । रोहिणीस्थे ग्रहे अभिजिद्विद्धः अभिजित्स्थे रोहिणीविद्धः ॥ एवं सर्वत्र व्याख्येयम् । पदानि स्पष्टार्थानि ॥

## पंचशलाकावेधचक्रम्-

यदाह नारदः-"तिर्यक्पंचोर्ध्वगाः पंच रेखे द्वे द्वे च कोणयोः । द्वितीयशंभुकोणेऽग्निधिष्ण्यं चक्रे च विन्यसेत् ॥ भान्यतः साभिजित्येकरेखाकोणे च विद्धभम् ॥" इति । चक्रोद्धारो यथा-"चक्रे तस्मिन्नेकरेखास्थितेन तद्विद्धक्ष खेचरेण प्रदिष्टम् । क्रूरैर्विद्धं सर्वधिष्ण्यं विवर्ज्य सौम्यैर्विद्धं नाखिलं पाद एव ॥" इति ॥ नन्वष्टाविंशतिनक्षत्राणि चक्रे तत्र द्वयोः परस्परवेधे चतुर्दश युग्मानि वक्तव्यानि स्युः, कथमष्टावेवाभिहितानि ॥ उच्यते ॥ विवाहे ह्येकादशनक्षत्राणामेव प्राशस्त्याभिधानात्तद्वेधोपयोगीन्येतावंत्येव युग्मानि संभवंतीति तावतामेवाभिधानम् । अतएव दैवज्ञमनोहरे-"रोहिण्यभिजितोर्मूलादित्ययोर्मृगवैश्वयोः । रेवत्युत्तरफल्गुन्योर्मघाश्रवणयोर्भवेत् ॥ हस्तोत्तराभाद्रपदोः स्वातीवारुणयोर्मिथः । अनुराधाभरण्योश्च वेधोयं पंचरेखजः ॥" इति ॥

## प्रत्येकं वेधफलानि-

वाराहीयविवाहपटले प्रत्येकं वेधफलानि-"रविवेधे च वैधव्यं पुत्रशोको भवेत्कुजे ॥ वंध्या

पंडितवेधे दीक्षाकरणं करोति गुरुवेधे । भृगुसुतवेधे पुत्री दासी रविजेंदुराहुसंभूते ॥'' इति ॥ पंडितो बुधः दीक्षाकरणं प्रव्रज्या । चरणवेधमाह—खेट इति ॥ तत्र तस्मिन्नक्षत्रे विद्यमाने ग्रहे सति यदि चतुर्थपादेऽस्ति तदा परनक्षत्रस्य प्रथमपादे वेधः । यदि तृतीयपादे तदा द्वितीयचरणस्य वेधः एवं यदि द्वितीयपादे तदा तृतीयपादस्य वेधः । यदि प्रथमपादे तदा चतुर्थपादस्य वेध इत्यर्थः॥ यदाह वसिष्ठः—“अतोंत्यपादमादिगो द्वितीयगस्तृतीयकं तृतीयगो द्वितीयकं चतुर्थगस्तु चादिमम् । भिनत्ति वेधकृद्ग्रहो न चान्यपादमादरात् ॥ ” एतद्यद्यपि शुभाशुभग्रहसाधारणं प्रतीयते । तथापि सौम्यग्रहपरं द्रष्टव्यम् ॥ यतो वसिष्ठेनैव खार्जूरदोषाभिधानावसरे—“विषप्रदिग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षताद्दते । तथैव पादो न शुभो वसिष्ठः पादाः शुभाश्चेति पितामहेन ॥ ” इत्याशंक्य समाहितं—“पाद एव न शुभग्रहैर्विद्ध इत्यखिलशास्त्रसंमतम् । क्रूरविद्धमयुतं न शोभनेषु गदितं न पादतः ॥” इति ॥ नारदः— “पादमेव शुभैर्विद्धमशुभैर्नैव कृत्स्नतः” इति॥ कश्यपोपि—“क्रूरविद्धं युतं धिष्ण्यं क्रूराक्रांतं च कृत्स्नभम् । मणिहेममयं हर्म्यं भूताक्रांतमिव त्यजेत् ॥” इति ॥ कृत्स्नभं सकलनक्षत्रम् । तस्मात्क्रूरग्रहविद्धे संपूर्णनक्षत्रत्यागः शुभविद्धे चरणत्याग इति सिद्धांतः । तत्र विवाहे पंचशलाकावेध एव ॥ यदाह वसिष्ठः—“पंचशलाकाचक्रे पाणिग्रहणे भवेद्वेधविधिरुक्तः । शस्तः शुभमित्रकृतः सप्तशलाकाज इतरत्र ॥” इति ॥ श्रीपतिः—“वधूप्रवेशने दाने वरणे पाणिपीडने। वेधः पंचशलाकाख्योऽन्यत्र सप्तशलाककः ॥ ” इति ॥ ५६ ॥

## पंचशलाकाचक्रम् ।

कृ रो मृ आ पु पु

## सप्तशलाकावेधदोषः—

**शाक्रेज्ये शतभानिले जलशिवे पौष्णार्यमर्क्षे वसु-**
**द्वीशे वैश्वसुधांशुभे हयभगे सार्पानुराधे तथा ॥**
**हस्तोपांतिमभे विधातृविधिभे मूलादितित्वाष्ट्रभाऽ-**
**जांघ्री याम्यमघे कृशानुहरिभे विद्धेद्रिरेखे मिथः ॥ ५७॥**

कश्चित्सप्तशलाकाचक्रे वेधमाहुः ॥ तदर्थं चक्रन्यासं विनैव वेधदोषं शार्दूलविक्रीडितेनाह—शाक्रेति ॥ अद्रिरेखे सप्तशलाकाख्ये चक्रे शाक्रे ज्येष्ठानक्षत्रे मिथः परस्परं क्रूराधिष्ठितत्वेन विद्धे ज्ञेये । एवं जलशिवे पूर्वाषाढार्द्रे विद्धे ज्ञेये एवं सर्वत्र व्याख्येयम् । वैश्ववसुधांशुभे उत्तराषाढामृगशिरसी हयभगे अश्विनीपूर्वाफाल्गुन्यौ उपांतिमभमंत्यस्य समीपमुपयाति उत्तराभाद्रपदा । अन्यत्स्पष्टम् । अत्र मूलवाक्यं वरोदयस्थं यज्ञोपवीतप्रकरणेऽभिहितम् । चक्रोद्धारो व्यवहारसमुच्चयेपि—"सप्त सप्त विनिपात्य रेखिकास्तिर्यगूर्ध्वमथ कृत्तिकादिकम् । लेखयेदभिजिता समन्वितं चैकरेखखगमेन विध्यते ॥"इति ॥ दीपिकायां—"यस्याः शशी सप्तशलाकाभिन्नः पापैरपापैरथवा विवाहे । उद्वाहवस्त्रेण तु संवृतांगी श्मशानभूमिं रुदती प्रयाति ॥" तथा च भोजः—"विद्धे सप्तशलाकाख्ये विधवा लग्नवाससा । पुनर्यात्यचिरान्नारी मुखाग्नौ मुखचंद्रिकाम् ॥ " वैधव्यं च नक्षत्रतुल्याब्दैर्भवति । तदुक्तं वराहेण—"नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत् " इति । अत्रापि तुल्यन्यायत्वात्क्रूरवेधे संपूर्णं नक्षत्रं त्याज्यं, शुभग्रहवेधे पादस्त्याज्यः इति ध्येयम् ॥ नन्वत्र प्रोक्तहेतोरष्टावेव नक्षत्रयुग्मानि वाच्यानि, किमर्थं चतुर्दशयुग्मानामभिधानम् ॥ उच्यते ॥ सप्तशलाकाज इतरत्रेति वचनात्सकलशुभकर्मसु विचार्यमाणत्वादेतावतामुक्तिः—"भुक्तं भोग्यं तथा क्रांतं विद्धं पापग्रहेण च । शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः ॥" इति स्वरोदयेपि सामान्यतोभिधानात् ॥ ९७ ॥

सप्तशलाकाचक्रम्—

कृ रो मृ आ पु पु आ

भ — म
अ — पू
रे — उ
उ — ह
पू — चि
श — स्वा
ध — वि

श्र अभि उ पू मू ज्ये अनु

## क्रूराक्रान्तादिनक्षत्रदोषाः सापवादाः—

**ऋक्षाणि क्रूरविद्धानि क्रूरमुक्तादिकानि च ॥**
**भुक्त्वा चंद्रेण मुक्तानि शुभार्हाणि प्रचक्षते ॥ ९८ ॥**

क्रूराक्रांतादिनक्षत्रदोषं सापवादमनुष्टुभाह—ऋक्षाणीति ॥ क्रूरग्रहैर्विद्धानि ऋक्षाणि तथा क्रूरमुक्तानि त्यक्तानि आदिशब्दात्क्रूरैराक्रांतानि क्रूरगंतव्यानि च । चकारस्यानुक्तसमुच्चयार्थत्वात् । त्रिविधोत्पातैः दूषितानि ऋक्षाणि दूषितानि ज्ञेयानि । तानि यदि चंद्रेण भुक्त्वा

मुक्तानि तदा शुभार्हाणि । प्रचक्षते वदंतीति शेषः । यदाह वात्स्यः-भुक्तं भोग्यं तथा क्रांतं विद्धं पापग्रहेण भम् । मंगलेषु च कार्येषु यत्नतः परिवर्जयेत् ॥ " इति ॥ वसिष्ठोपि-"उत्पातभं ग्रहणभं क्रूरविद्धस्थितं च यत् । दहत्येव शुभं कर्म राघवाग्निशरोंबुधिम् ॥" इति ॥ शार्ङ्गीये-"क्रूराश्रितं क्रूरविमुक्तविद्धं गंतव्यधिष्ण्येषु कुमारिकाणाम् । वदंति पाणिग्रहणे मुनींद्रा वैधव्यमब्दैस्त्रिभिरेवमाहुः ॥" इति ॥

## क्रूरोत्पाताद्याक्रान्तस्य भस्य चन्द्रेण भोग न दोषो विवाहे-

अस्यापवादमाह केशवार्कः-"उत्पातपापग्रहदूषितं भं यदींदुराक्रम्य पुनर्भुनक्ति । तदा तदर्हं किल मंगलेषु त्यजेत्समाक्रांतधनू रवींद्वोः ॥ " इति ॥ अयमवधिराक्रांतनक्षत्रभिन्नविषयो वेदितव्यः ॥ तत्र हि चांडालधृतहस्तस्नानवच्चंद्रभोगस्य निर्णेजकत्वात् ॥ तदुक्तं शार्ङ्गीये-"यद्धिष्ण्यं दोषसंयुक्तं स्यात्तथापींदुसंयुतम् । शुभकार्येषु तत्त्याज्यमन्यकर्मसु सिद्धिदम् ॥ यथा हि चांडालधृतैकहस्तो मज्जन्नगाधेपि सरित्प्रवाहे । भवेन्न पूतः शशिभोगतोपि तथा न शुध्येदुडु पापयुक्तम् ॥ स्पृष्ट्वा गते तु चांडाले शुद्धिराप्लवनाद्यथा । तथा भुक्त्वा गते क्रूरे चन्द्रभोगाद्विशोधनम् ॥" इति ॥ अतएवोक्तं वसिष्ठेन-"गंतव्यधिष्ण्यं खलु भुक्तभं यत्क्रूरैर्महोत्पातविदूषितं च । चंद्रोपभोगादमलं तदानीं शुभेषु कार्येषु शुभप्रदं च ॥" इति ॥ एतच्च सामान्यन्यायत्वात् क्रूरविद्धे भे चंद्रभोगादपि शुद्धिर्नास्तीत्युक्तम् ॥ यत्तु नारदेनोक्तं-"ग्रहणोत्पातभं त्याज्यं मंगलेषु ऋतुत्रयम् । यावच्च राविणा भुक्त्वा मुक्तं तद्दग्धकाष्ठवत् ॥ " इति ॥ तद्यद्वाचं वाचनिकमिति न्यायेन ग्रहणोत्पातभयोः षण्मासपर्यंतं निषेधस्ततोपि यावद्राविणा भुक्त्वा न त्यक्तं तावत्त्यजेत् । तत्रापि चन्द्रग्रहण एव । सूर्यग्रहणीयनक्षत्रस्य तु षण्मासानंतरं सूर्यभोगासंभव एवाऽऽवर्षमतो न क्रूरमुक्तादौ रविभोगापेक्षा । उत्पातभस्य तु चन्द्रोपभोगोप्यावश्यकः । वसिष्ठवाक्यालोचनात् । अत्र क्रूरवेधे निखिलं भं त्याज्यं न चरण एव ॥ तदुक्तं कश्यपेन-"क्रूरविद्धयुतं धिष्ण्यं निखिलं नैव पादतः । अन्यैरपि गुणैर्युक्तं सर्वदोषविवर्जितम् ॥ त्यजेदनर्घ्यमाणिक्यं कलंकोपहतं यथा ॥" इति ॥ अयं च क्रूराधिष्ठितत्वदोषः क्रूरग्रहचन्द्रयोरेकराशिस्थत्वे वेदितव्यः । यदा तु चंद्रः प्रथमपादे क्रूरग्रहश्च तृतीयपादे एवं सति राशिभेदो जायते तदा क्रूरग्रहाधिष्ठितत्वदोषो नास्तीति ध्येयम् ॥ उक्तं च ज्योतिर्निबंधे-" एकस्मिन्नधिपे धिष्ण्ये भिन्ने राशौ खलग्रहे शशिनि । तच्चन्द्रर्क्षे कुर्याद्विवाहयात्रादिकं सर्वम् ॥" इति । यथा मृगशिरसि प्रथमे पादे चन्द्रः तृतीये क्रूरग्रहः तत्र सत्यप्येकनक्षत्रत्वे राशिभेदो द्वयोरिति ॥ ५८ ॥

## लत्तादोषः-विवाहे-

**ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि ॥**
**संलत्तयंतेऽर्कशनीज्यभौमाःसूर्याष्टतर्काग्निमितं पुरस्तात् ॥५९॥**

अथ लत्तादोषमुपजातिकयाह-ज्ञेति ॥ सप्त प्रसिद्धाः गावो नव जातयो द्वाविंशतिः शराः पंच एतैर्मितं भं स्वाक्रांतनक्षत्राज्ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे संलत्तयंते । यथा बुधः सप्तमं राहुर्नवमं पूर्णेंदुः पूर्णिमांते चंद्रो द्वाविंशम् । तच्च गतकृष्णपक्षे पंचमीषष्ठीसप्तमीनामन्यतमस्यां संभवति । शुक्रः पंचमं स्वपृष्ठे लत्तयतीत्यर्थः । अर्कशनीज्यभौमाः क्रमेण पुरस्तादग्रे सूर्याष्टतर्का

ग्निमितं लत्तयन्ते तथा सूर्यः स्वाक्रांतनक्षत्राद्द्वादशं शनिरष्टमं गुरुः षष्ठं भौमस्तृतीयम् अग्रतो लत्तयतीत्यर्थः ।। यदाह नारदः–" पुरतः पृष्ठतोऽर्काद्या दिनर्क्षं लत्तितं च यत् । अर्काकृतिगुणांगर्तुबाणाष्टनवसंख्यभम् ।। " इति ।। सूर्यः पुरतश्चंद्रः पृष्ठतः एवं क्रमेण भौमादयोपि पुरतः पृष्ठतश्च लत्तयंतीत्यर्थः ।। वराहोपि–" सूर्यो द्वादशमृक्षं षष्ठं गुरुरवनिजस्तृतीयं तु । संलत्तयति दिवाकरपुत्रोऽष्टममग्रतः पादैः ।। पश्चाद्द्वाविंशतिभं पौर्णिमचंद्रस्तु पंचमं शुक्रः । स्वर्भानुरपि नवमं सप्तममृक्षं शशांकसुतः ।।" इति ।।

## वेधफलं पृथक्–

प्रत्येकं वेधफलमाह स एव–" रविलत्ता वित्तहरी नित्यं कौजी विनिर्दिशेन्मरणम् । चांद्री नाशं कुर्याद्बौधी नाशं वदत्येव ।। सौरी मरणं कथयति बंधुविनाशं बृहस्पतेर्लत्ता । मरणं लत्ता राहोः कार्यविनाशं भृगोर्वदंतीति ।। " नन्वग्रलत्ता वा पृष्ठलत्ता वा वक्तव्या, किमिति द्वैरूप्यकथनम् ।। अत्र समाधत्ते केशवार्कः–" इति सति ह्युसदामभिलत्तने यदनुलत्तनमुक्तमृषिव्रजैः । तदुडुपश्चिमपूर्वविभागयोरनधिकाधिकदोषविवक्षया ।। " इति ।। अनधिकः स्वल्पः । अत्र राहोः सदा वक्रित्वान्नवमगणना क्रमेणैव ग्राह्या । यथाश्विन्यां राहुः आश्लेषां लत्तयति सम्मुखलत्तावादिमतेऽपि वक्रगामिना राहुणा सम्मुखमश्विनीरेवतीत्यादिगणनया विंशतिभमाश्लेषैव न त्वन्यथाश्रयितव्यमिति सांप्रदायिकाः ।। ५९ ।।

## पातदोषः–विवाहे–

**हर्षणवैधृतिसाध्यव्यतिपातकगंडशूलयोगानाम् ।।**
**अंते यन्नक्षत्रं पातेन निपातितं तत्स्यात् ।। ६० ।।**

### क्रांतिसाम्यचक्रम्.

कुं. मी. मे.

पातदोषं सुबोधं पद्यार्ययाह–हर्षणवैधृतीति ।। व्यतिपातकः इति । स्वार्थे कः । हर्षणेत्यादिषड्योगानामंते यच्चंद्रनक्षत्रं भवेत्तत्पातेन चंडीशचंडायुधाख्येन निपातितं स्यात् । यदाह त्रिविक्रमः–" साध्यहर्षणशूलानि वैधृतिव्यतिपातयोः। षड्भं गंडस्य चांते स्यात्तत्पातेन निपातितम् ।।" इति ।। नारदेन प्रकारांतरेणैतत्प्रकारसंपादकः पातोभिहितः । " सूर्यभात्सार्पपित्र्यांत्यत्वाष्ट्रमित्रोडुविष्णुभे । संख्यया दिनभे तावदाश्विभात्पातदुष्टभम् ।। " वसिष्ठेनापि–"रविभादहिपितृमित्रत्वाष्ट्रभहरिपौष्णभेषु गणितेषु।आश्विनभादिंदुयुतौ तावति वै पतति गणनया पातः ।। अयमपि पातो दोषश्चंडीशचंडायुधाह्वयो ज्ञेयः । अखिलेषु मंगलेष्वपि व

यस्माद्विनाशदः कर्तुः ॥ " इति पद्येषु यद्यपि हर्षणादीनामुपादानं नास्ति ॥ तथाप्यभिहिताश्लेषादिनक्षत्रसाहित्येन पाताभिधानात्तत्तुल्यसंख्याकेष्वेव योगेषु पातसंभवो जायते इति मत्वा हर्षणादीनामुक्तिः । यद्येवं व्यतीपातवैधृतिभ्यां स्वीयभोगघटिकात्मकाभ्यां तिथिनक्षत्रादिकं सर्वमेव सामान्यतो निंद्यमुक्तं तत्किमत्रानयोर्योगयोः पुनर्ग्रहणेन ॥ उच्यते ॥ यदा नक्षत्रयोगयोस्तुल्यकाले एव प्रवृत्तिनिवृत्ती तदाऽनयोर्योगयोरुपादानं व्यर्थमेव । यदा तु सूर्योदयादारभ्य कियद्धटिकत्वं दुष्टयोगयोर्नक्षत्रभोगस्तु सूर्योदयादेव बहुकालव्यापी तदा पातासंभवे तावत्कालस्यैव निषेधः । सामान्यवाक्यात् । पातसंभवे हि संपूर्णस्य नक्षत्रस्य निषेधो यथा स्यादिति तयोर्दुष्टयोगयोः पुनरुपादानं कृतम् । एवमन्येष्वपि योगेषु पातसंभवे संपूर्णनक्षत्रस्य निषेधो यथा स्यादित्यनयोर्दुष्टयोगयोः पुनरुपादानं त्याग इत्यर्थः ॥ अयं च सर्वोपि विचार एकार्गलदोषेपि द्रष्टव्यः ॥ यदा तु पातैकार्गलौ न स्तस्तदा दुष्टयोगानामुक्तादिमघटीत्यागः कर्तव्य इति ॥ ६० ॥

## महापातदोषः-( सूर्यचन्द्रक्रान्तिसाम्यदोषः ) विवाहे-

**पंचास्याजौ गोमृगौ तौलिकुंभौ कन्यामीनौ कर्क्यली चापयुग्मे ॥**
**तत्रान्योन्यं चंद्रभान्वोर्निरुक्तं क्रांतेः साम्यं नो शुभं मंगलेषु॥६१॥**

सूर्यचंद्रक्रांतिसाम्यापरपर्यायं महापातदोषं शालिन्याह-पंचेति ॥ पंचास्याजौ सिंहमेषौ । अन्ये प्रसिद्धाः । एषु राशियुग्मेषु चंद्रभान्वोः पाठक्रमेण व्युत्क्रमेण वा स्थितयोः क्रांतिसाम्यं निरुक्तं तन्मंगलेषु नो शुभं स्यात् । अत्र पंचास्याजावित्येवमादीनां ग्रहणमुदाहरणदिक्प्रदर्शनार्थत्वात्सर्वथा सूर्याचंद्रमसोः सायनयोर्योगः षड्राशिमितो द्वादशराशिमितो वा विवक्षितः । तदैव क्रांतिसाम्यस्य संभवात् । अतः संमतिवाक्यस्यानवसरः ॥ नन्वेतावंत एव षडाशियोगा वा संभवंतीति चेन्न ॥ राश्यंतावच्छेदस्थित्याधिकानामपि संभवात्॥ तथाहि ॥ प्रत्यंशकलाविकलांतस्थितत्वेनानंतभेदसंभवाच्च । अतः प्रागुक्तं व्याख्यानं न्यायः । क्रांतिसाम्यस्य च महापात इति नाम ॥ एतस्य निंद्यतामाह वसिष्ठः-"दोषो महापात इति प्रसिद्धः स वैधृतो हन्ति वधूं वरं च । तं रक्षितुं लग्नगुणास्त्वशक्ताः स्वबांधवास्तेऽशनितोपघातम् ॥ " अशनिर्वज्रम् । नारदोपि-"यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे" इति ॥ अतएव पातनात्पातः सकलशुभकर्मणामित्यन्वर्थतापि ॥ सा च स्पष्टा सोमसिद्धांते-"यच्छुभानां विनाशाय नदन्निव पतत्ययम् । व्यतीपातः प्रसिद्धोऽत्र संज्ञाभेदेन वैधृतिः ॥ " इति ॥ महापातशब्दस्य रूढिस्तु रवींदुक्रांतिसाम्य एव न त्वन्येषां ग्रहाणां क्रांतिसाम्ये । यथा जलजशब्दस्य रूढिः कमले न तु भेकादौ । क्रांतिर्नाम ग्रहाणां दक्षिणोत्तरवृत्ते गमनम् । या च सूर्यस्य क्रांतिः सा यदा चंद्रक्रांत्या तुल्या स्यात्स पातमध्यकालः । तत्रोत्सर्गतो रवींदुक्रांत्योः समानत्वं भुजसाम्ये सति भवति । भुजो नाम-"न्यूनं भुजः स्यात्त्र्यधिकेन हीनं भार्द्धं च भार्द्धादधिकं विभार्द्धम् । नवाधिकेनोनितमर्कभं च ॥", इति लक्षणलक्षितः। तत्साम्यं तु सूर्याचंद्रमसोर्योगे षड्राशितुल्ये द्वादशराशितुल्ये वा सति भवति । अत एव ग्रंथकृता तादृशा योगा एव पठिताः । यदा तु भुजस्य न्यूनाधिकत्वं तदा-' दिवौकसोरंतरलिप्तिकोत्थाद्गत्योर्वियोगेन हृतादि ', इत्यादिना

प्रकारेण ग्रहयुतिवत्तु भुजसाम्यमानेयम् ॥ ननु भुजसाम्यमेव क्रांतिसाम्यसाधकं चेत्किं गणितग्रंथोक्तेन बह्वायाससाध्येन पाताध्यायेन ॥ उच्यते ॥ “विक्षेपाय क्रमैकत्वे क्रांतिर्विक्षेपसंयुता । दिग्भेदे वियुता स्पष्टा भास्करस्य यथागता ॥ ” इति सूर्यसिद्धांतवाक्यात्सूर्यव्यतिरिक्तानां ग्रहाणां शरसंस्कृता क्रांतिः स्पष्टेत्युच्यते ॥ तादृशी चंद्रक्रांतिश्चेत्सूर्यक्रांत्या समा यस्मिन्काले स्यात्स स्पष्टः पातमध्यकालः । तत्र तादृशक्रांतिसाम्यानयनस्यातिकष्टसाध्यत्वात्तदध्यायोक्तिः सार्थिकैव । एवं ग्रंथकर्त्रा सूर्याचंद्रमसोः क्रांतिसाम्यमेव दोषोभिहितः–‘पंचास्याजौ’ इत्यादिकथनं किमर्थमिति चेदुच्यते ॥ “विनाशपातेंदुमिहायनांशकैर्युतो रविः शीतकरश्च गृह्यते। समायनत्वे व्यतिपातवैधृताह्वयास्तदैक्ये रसभेर्कभे क्रमात् ॥” इति भास्कराचार्योक्तिमंगीकृत्य सामान्यतः क्रांतिसाम्यदिवसस्य शीघ्रोपस्थित्यर्थं भुजसाम्यप्रतिपादकत्वात् । नन्वेवं भुजसाम्यमेव चेत्क्रांतिसाम्योत्पादकं भवेत्तर्हि यत्र सूर्यचंद्रयोः षड्राशिमितमंतरं द्वादशराशिमितमंतरं वा यथा मेषतुलयोर्मेषयोर्वा तत्रापि भुजसाम्यस्य तादवस्थ्यात्क्रांतिसाम्यं भवत्येवेति मासमध्ये महापातचतुष्टयं वक्तव्यं स्यात् । तत्कुतो हेत्वोर्नोक्तं ग्रंथकृतेति चेत् ॥ अत्रोच्यते ॥ योगोत्पन्ने हि पाते मुनिभिः स्नानदानादिकफलमुक्तम् । अतः स एव महापातो गृह्यते न तु वियोगोत्पन्ने उक्तम् । अतः स न गृह्यते ॥ तदुक्तं वसिष्ठेन स्वसिद्धांते–“ चक्रे चक्रार्द्धतुल्ये वा कियद्भागाधिकोणके । सायनार्केंदुयोगे चेत्तदा पातस्य संभवः ॥ शुभमंगलकर्माणि लोकानां च विनाशयेत् । स्नानदानादिकास्तत्र जपश्राद्धादिकाः क्रियाः ॥ कदापि कुरुते मर्त्यः सुमहत्फलमश्नुते । सूर्यग्रहे कुरुक्षेत्रे कोटिस्वर्णार्पणे फलम् ॥ तत्फलं लभते पाते स्नानश्राद्धजपादिना । उत्पत्तौ लक्षगुणितं भ्रमणे कोटिसंगुणम् ॥ पातेथार्बुदसंगुण्यं पतिते दत्तमक्षयम् ॥”इति ॥ तथा सूर्यसिद्धांतेपि–“एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा । तद्युतौ मंडले क्रांत्योस्तुल्यत्वे वैधृताभिधः ॥ विपरीतायनगतौ चंद्रार्कौ क्रांतिलिप्तिकाःसमास्तदा व्यतीपातो भगणार्द्धे तयोर्युतौ ॥ तुल्यांशजालसंपर्कात्तयोस्तु प्रवहाहतः । तादृक्क्रोधोद्भवो वह्निर्लोकाभावाय जायते ॥ ” इति ॥ अतएवांतरोत्पन्नक्रांतिसाम्ये महापातदोषो नास्त्येव । तदुक्तं गणेशदैवज्ञैः–“पूर्वं तत्स्यात्पातमध्यं द्वितीयं पूर्वैर्नोक्तं तद्यतो नातिदुष्टम् ” इति ॥ अनेनैवाशयेन वसिष्ठेन स्वसंहितायामुक्तं–“शास्त्रात्समानीय महातिपातः सवैधृतो हंति वधूं वरं च । त्रिःसप्तवारानिव जामदग्न्यात्क्रोधोऽचिरात्क्षात्रकुलं समस्तम् ॥” इति ॥ शास्त्राद्गणितशास्त्रोक्तान्महापाताधिकारादित्यर्थः ॥ तत्र हि योगादेव महापातस्यानित्यत्वात्तस्यैव दोषत्वं नान्यस्येत्यर्थादुक्तं भवति ॥ किं च पंचांगीयोपि योगः सूर्याचंद्रमसोर्योगादेव साधितः । स्पष्टाधिकावेकतस्तस्मादेव महापातोपि साधयितुमुचित एव ॥ अत्र ज्ञाते क्रांतिसाम्येप्येकस्मिन्काले मंगलकृत्यं निषिद्धमित्येष विशेषविचारो “न्यूनाधिमासकुलिकप्रहरार्द्धपाताः ” इत्यत्रास्माभिरभिहितोस्ति । स तत एवावगंतव्य इत्यलमतिप्रसंगेन ॥ ६१ ॥

## खार्जूरदोषः–

**व्याघातगंडव्यतिपातपूर्वे शूलांत्यवज्रे परिघातिगंडे ॥**
**एकार्गलाख्यो ह्यभिजित्समेतो दोषः शशी चेद्विषमर्क्षगोर्कात् ॥६२॥**

खार्जूरदोषं सुबोधमिंद्रवज्रयाह–व्याघातेति ॥ अंत्यो वैधृतिः । अन्ये प्रसिद्धाः । यस्मिन्दिने व्याघातादिके विरुद्धे दुष्टयोगे सति अर्कादर्कनक्षत्राच्छशी चंद्रोऽभिजित्समेतो विषमे विषमसंख्याके ऋक्षे नक्षत्रे स्यात्तदा खार्जूरचक्रोत्पन्न एकार्गलाख्यो दोषः स्यात् । यदा समे स्यात्तदा न दोष इत्यर्थः ॥ तदाह त्रिविक्रमः–" विरुद्धनामयोगेषु साभिजिद्विषमर्क्षगः ॥ अर्कादिंदुस्तदा योगो निंद्य एकार्गलाभिधः ॥" इति ॥ केशवार्केणापि–'न्यस्ते सहाभिजिति' इत्यादिनाऽभिजिद्गणनोक्ता ॥

## खार्जूरचक्रम्–

वसिष्ठेन त्वत्र चक्रमभिहितम्–"अत्यातिगंडपरिघव्यतिपातपूर्वे व्याघातगंडवरशूलमहाशनीषु । चित्रानुराधपितृपन्नगदस्रभेषु साहित्यमूलशशिसूरिषु मूर्द्धभेषु ॥ रेखामेकामूर्ध्वगां षट् च सप्त तिर्यक् कृत्वाप्यत्र खार्जूरचक्रे । तिर्यग्रेखासंस्थयोश्चन्द्रभान्वोर्दृक्संपातो दोष एकार्गलाख्यः ॥ "

## खार्जूरचक्रोद्धारप्रकारः साभिजित्कः–

चक्रोद्धारो यथा–"हरकरतुहिनांश्वोर्दृष्टिसंपातजन्मा अनलभयशरीरी सूद्गिरन्नग्निसंघान् । भुवि पतति जनानां मंगलध्वंसनाय गुणगणशतसंवैरप्यवार्योऽग्निकोपः ॥ " इति ॥ अत्र वसिष्ठवाक्येभिजित्साहित्यमस्ति न वेति सन्देहः ॥

## निरभिजित्कः खार्जूरचक्रोद्धारः–

नारदस्त्वभिजिद्वर्जितं चक्रमाह–"व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि । गंडातिगण्डकुलिशवैधृत्या सहितेषु च ॥ अदितीन्दुमघाद्याद्यमूलमैत्रेज्यभानि च । ज्ञेयानि सह चित्राभिर्मूर्ध्नि भानि यथाक्रमम् । लिखेदूर्ध्वगतामेकां तिर्यग्रेखास्त्रयोदश । तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भं न्यसेत् ॥ भान्येकरेखागतयोः सूर्याचंद्रमसोर्मिथः । एकार्गलो दृष्टिपातश्चाभिजिद्वर्जितानि वै । लांगले कमठे चक्रे फणिचक्रे त्रिनाडिके ॥ अभिजिद्गणना नास्ति चक्रे खार्जूरिके तथा ॥ " इति ॥ कश्यपेनापि–"एकार्गलो दृष्टिपातश्चाभिजिद्रहितानि वै"इति ॥ तत्र त्रिविक्रमकेशवार्कवाक्ययोः समूलत्वस्य शिष्टसंमतत्वान्नारदादिवाक्यैः सह विकल्पः । ततोऽनयोः पक्षयोर्यथादेशाचाराद्व्यवस्थेति युक्तं प्रतीमः ॥ ६२ ॥

## उपग्रहदोषः–

**शराष्टदिक्छक्रनगातिधृत्यस्तिथिर्धृतिश्च प्रकृतेश्च पंच ॥**
**उपग्रहाःसूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम् ॥ ६३ ॥**

अथोपग्रहदोषमुपेंद्रवज्रयाह–शरेति ॥ सूर्यभतः सूर्याक्रांतनक्षत्रादब्जताराश्चंद्रनक्षत्राणि पंचाष्टदशचतुर्दशसप्तैकोनविंशतिपञ्चदशाष्टादशैकविंशतिचतुर्विंशतिद्वाविंशतिपंचविंशतिसंख्याकाश्चेत्स्युस्तदोपग्रहनामका दोषाः स्युः ॥ प्रकृतिरेकविंशतिः ॥ यदाह नारदः–"भूकंपः सूर्यभात्सप्तमर्क्षे विद्युच्च पंचमे । शूलोऽष्टमे च नवमे शनिरष्टादशे ततः ॥ केतुः पंचदशे दंडश्चोल्का एकोनविंशतिः । निर्घातपातसंज्ञश्च ज्ञेयः स नवपंचमे ॥ मोहनिर्घातकंपाश्च कुलिशं परिवेषकम् । विज्ञेयाश्चैकविंशाख्यादारभ्य च यथाक्रमम् । चंद्रयुक्तेषु भेष्वेषु शुभकर्म न कारयेत् ॥ " इति ॥ वराहः–"उपग्रहर्क्षेषु विवाहिता स्त्री सूर्यर्क्षतो दुर्भगतामुपैति ॥ "

अन्यत्रापि—"गृहप्रवेशे दारिद्र्यं विवाहे मरणं भवेत् । प्रस्थाने विपदः प्रोक्ता उपग्रहदिने यदि ॥ " इति ॥ एवं सामान्यतो निषेधमभिधाय देशभेदेन परिहारमाह—शुभा इति ॥ स्पष्टार्थमेतत् । " बाह्लीके कुरुदेशे च वर्जयेद्भमुपग्रहम्" इति कश्यपोक्तेः ॥ ६३ ॥

## पातोपग्रहलत्तापवादवारदोषभेदाऽर्द्धयामाः—

**पातोपग्रहलत्तासु नेष्टोंघ्रिः खेटपात्समः ॥**
**वारस्त्रिघ्नोऽष्टभिस्तष्टः सैकः स्यादर्धयामकः ॥ ६४ ॥**

अथोपग्रहापवादप्रसंगात्पातोपग्रहलत्तास्वपवादं वारदोषभेदमर्द्धयामं चानुष्टुप्छंदसाह—पातेति ॥ पातश्चंडीशचंडायुधाख्यो दोषः । उपग्रहः प्रागुक्त एव । लत्ता ' ज्ञराहुपूर्णेन्दु' इत्यादिनोक्ता । तत्र खेटपातसमः ग्रहचरणतुल्यो नक्षत्रचरणो नेष्टः ॥ अस्यार्थः ॥ पाते उपग्रहे च रविर्यस्मिन्नंघ्रौ स्यात्तत्संख्यचरणस्तस्य नक्षत्रस्य वर्ज्यो नान्यः । लत्तायां तु ये लत्ताकारिणो ग्रहा यच्चरणे स्युस्तत्संख्य एव चरणो वर्ज्यो नान्यः । उक्तं च मुहूर्त्तदीपिकायाम्—"उपग्रहेषु लत्तायां तथा चण्डायुधाह्वये । ग्रहोस्ति यत्प्रमाणांशे विद्धांशस्तत्प्रमाणतः ॥ " इति ॥ उपग्रहचण्डायुधयोः सूर्यकृतोंघ्रिर्ग्राह्यः । तस्यैव संभवात् । अयं च परिहारस्तुल्यन्यायत्वात् खार्जूरिकेपि द्रष्टव्यः ॥ सूर्यो यस्मिन् पादे भवेत्तत्समसंख्यश्चरण एकरेखावस्थितचन्द्रनक्षत्रस्य वर्ज्य इत्यर्थः ॥ ' खार्जूरिकसमांघ्रिभम्' इति नारदोक्तेः । ज्योतिर्निबंधे गर्गः—" पूर्वाह्णे दण्डदोषः स्यादपराह्णे तु मोहजः । उल्कायामर्द्धरात्रे तु कंपोऽहोरात्रदूषकः ॥" ' कंपोल्कादंडमोहानामंघ्रिभम्' इति नारदोक्तेः ॥ 'स्वरमासदशत्तत्रः ७ । १२ । १० । ६ ॥ आदितो घटिकास्तेषु वर्जनीयाः पराः शुभाः'इति ॥ वार इष्टो वारस्त्रिघ्नः सैकोष्टभिस्तष्टः शेषितो योंकः सोर्द्धयामाख्यो दोषः स्यात् । स्वार्थे कः । यदाह श्रीपतिः—"मनीषिणार्द्धप्रहराद्द्वितीयादारभ्य सर्वेष्वपि मङ्गलेषु । भौमे भृगौ सूर्यबुधार्किचंद्रसुरेज्यवारेषु विवर्जनीयाः ॥ " इति ॥ अत्र कथनं समानार्थमिति चेत् प्रथमार्द्धप्रहरः कस्यापि वर्ज्यो नास्ति । तत्र सूर्यस्य वारे तावत्प्रथमादर्द्धप्रहरादारभ्य तृतीयोर्द्धप्रहर उक्तः । अतः त्रिगुणः सैक इत्युपपन्नः । ततस्तृतीयः चंद्रस्य वारे सूर्योदयात्सप्तम इति वारस्त्रिघ्नः सैक इत्यत्रापि सिद्धम् । ततस्तृतीयो भौमस्य वारे सूर्योदयाद्दशमः । रात्रौ चार्द्धयामानुक्तेरिति दिवसस्याष्टावर्द्धयामा इत्यष्टाभिः शेषित इत्युपपन्नम् । एवं बुधवारादिष्वपि द्रष्टव्यम् । अत्र पुनरुक्तपरिहारमग्रेनैव वक्ष्यामः ॥ कश्यपः—"शैलाक्षश्रुतयः सूर्ये चंद्रे षड्वेदपर्वताः। भौमे बाणाग्निनेत्राणि सौम्ये वेदाक्षिवायवः॥गुरुवारेग्निचन्द्रेभाः शुक्रे नेत्राद्रिवह्नयः । शनौ चन्द्रेभतर्काः स्युः कुलिको यमघंटकः ॥ अर्द्धप्रहरसंज्ञाः स्युर्मंगलेषु विवर्जयेत् ॥ वारदोषेण दुष्टं तल्लग्नं सर्वगुणान्वितम् ॥ त्यजेद्यथा पुरोडाशं वायसोपहतं तथा ॥ " इति ॥ फलमाह वसिष्ठः—" निधनं प्रहरार्द्धे तु निःस्वत्वं यमघंटके । कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥ " इति ॥ ६४ ॥

## वारदोषभेदाः—

**शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिका रवेः ॥**
**रात्रौ निरेकास्तिथ्यंशाः शनौ चांत्योपि निंदिताः ॥६५॥**

वारदोषभेदं कुलिकमनुष्टुभाह–शक्रेति ॥ रवेरिति ल्यब्लोपे पंचमी । रविमारभ्य सर्ववारेषु क्रमादुक्तसंख्यास्तिथ्यंशा मुहूर्त्ताः कुलिकाः स्युः । यथा दिवसे रवौ १४, सोमे १२, भौमे १०, बुधे ८, गुरौ ६, शुक्रे ४, शनौ २, रात्रावेते निरेकाः कार्याः । यथा रवौ १३, सोमे ११, भौमे ९, बुधे ७, गुरौ ५, शुक्रे ३, शनौ १, शनौ त्वंत्योपि रात्रेः पंचदशोपि मुहूर्तः कुलिकाः । एते कुलिका निंदिताः । यदाह श्रीपतिः–“ मन्वर्कदिग्वसुतुवेदपक्षैरर्कान्मुहूर्तैः कुलिका भवंति । दिवा निरेकैरथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु ॥ ”॥ रत्नकोशे– “दिवा द्वितीयः कुलिकोर्कजाते रात्रौ प्रदिष्टः प्रथमः स एव । रात्रेस्ततः पंचदशे विभागे एवं विवर्ज्यं कुलिकत्रयं च ॥ ” इति ॥ ननु सामान्यतः सूर्ये षट्स्वरनागेत्यादिना दुर्मुहूर्तार्द्धयामकुलिका उक्ताः । इदानीं किं पुनरुच्यते इति ॥ सत्यम् ॥ आवश्यकत्वद्योतनार्थम् ॥ तथाहि ॥ विवाहे एषां दोषाणां सर्वथैव त्यागः । ‘विवाहे विधवा नारी’ इत्यभिहितफलस्य दुस्सहत्वात् । भर्तुर्मरणे हि यावज्जीवं पत्न्याः सर्वप्रकारकदुःखानुभवसत्त्वात् । यज्ञोपवीतादिशुभकर्मणि तु संस्कार्यमरणे संबंधिनां तात्कालिकं दुःखम् । पित्रोस्तु पुत्रांतराभावे कियत्कालमेव, तत्सत्त्वे पुनः कियाद्दिनमात्रम् । सर्वथा विधवासदृशं दुःखं कस्यापि नास्ति । किंच वारप्रकरणे सामान्यतो मुनिभिर्दिनरात्रिसाधारण्येन कुलिकाद्युक्त्वा रात्रावेते न दोषदा इत्युक्तम् । तस्यापि बाधो यथा स्यात् । अत एव कश्यपो वारप्रकरणे कुलिककंटकार्द्धयामानभिधाय विवाहप्रकरणे पुनरप्यभिदधाति स्म । ग्रन्थकर्त्रा मुहूर्तत्वं कुलिकादीनामभिसंधाय दुर्मुहूर्त्तानामप्यभिधानं कृतम् ॥ किंच कुलिका अत्रावश्यं वक्तव्याः रात्रौ कुलिकज्ञानं यथा स्यात् । तत्र साधारण्येन दिनरात्रिविभागेन शीघ्रोपस्थित्यर्थं पद्येनाभिधानं–‘सूर्ये षट्स्वरनाग’ इत्यादिना मुहूर्त्तत्यागे कुलिककंटकार्द्धप्रहरा इति । पुनः संदेहे ‘ कुलिकः कालवेला च ’ इति पद्यस्मरणमपेक्षितमिति गौरवापत्तेश्च ॥ अत एव शिष्टा अप्यन्येषां दोषाणां यथासंभवत्यागपूर्वकं कुलिकार्द्धयामदुर्मुहूर्त्तानामवश्यं त्यागं विदधते । ग्रन्थकर्त्रापि पुनरुक्ता इति युक्तं प्रतीम इत्यलमतिप्रसंगेन ॥ ६५ ॥

## दग्धतिथिदोषः–मासदग्धास्तु मध्यदेश एव–

**चापांत्यगे गोघटके पतंगे कर्काजगे स्त्रीमिथुने स्थिते च ॥**
**सिंहालिगे नक्रधटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः ॥ ६६ ॥**

पञ्चांगदोषविशेषं दग्धतिथ्याख्यमिंद्रवज्रयाह–चापेति ॥ तत्तद्राशियुग्मस्थिते पतङ्गे सूर्ये स्थिते द्वितीयाप्रमुखाः शुक्लकृष्णपक्षसाधारणाः समास्तिथ्यो दग्धाः स्युरिति वाक्यार्थः । यथा चापांत्यगे धनुर्मीनगते सूर्ये द्वितीया दग्धा गोघटगे सूर्ये चतुर्थी कर्काजगे कर्कमेषगे सूर्ये षष्ठी स्त्रीमिथुने कन्यामिथुनस्थिते सूर्येऽष्टमी सिंहालिगे सूर्ये दशमी नक्रधटे मकरतुलागते सूर्ये द्वादशी दग्धेत्यर्थः । यदाह वसिष्ठः–“एकांतरा दिनपतौ दिवसे द्वितीया पूर्वांत्यचापघटयोर्घटमौक्षयोश्च । कर्काजयोर्मिथुनकन्यकयोश्च कीटहर्योस्तुलामकरयोः खलु मासदग्धाः ॥ मासदग्धासु तिथिषु कृतं यन्मंगलादिकम् । तत्सर्वं नाशमायाति ग्रीष्मे कुसरितो यथा ॥ ” इति ॥ पूर्वांत्येत्यत्र पूर्वा अंत्येत्याद्यपेक्षितम् । तत्र “ न मु ने ”

इत्यत्र नेति योगविभागादसिद्धत्वाभावे संधिः ॥ औक्षयोरित्ति ॥ उक्षा वृषस्तस्यायं वृषराशि-रौक्षः । "औक्षमनपत्ये" इत्यकारांतो निपातितः । अस्यापवादमाह कश्यपः-"मासदग्धाश्च तिथयो मध्यदेशे विवर्जिताः" इति ॥ ६६ ॥

## २-जामित्रदोषः-विवाहे जामित्रस्वरूपं च-

**लग्नाच्चंद्रान्मदनभवनगे खेटे न स्यादिह परिणयनम् ॥**
**किंवा बाणाशुगमितलवगे जामित्रं स्यादशुभकरमिदम् ॥ ६७ ॥**

जामित्रदोषं भ्रमरविलसितेनाह-लग्नादिति ॥ विवाहलग्नाच्चंद्राद्वा सप्तमभवनं गृहं तत्र गते खेटे परिणयनं न स्यात् ॥ उक्तं च-"जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः ॥ तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्जयेत् ॥ " इति ॥ तत्स्वरूपमाह महेश्वरः-"लग्नाच्छीतकराद्ग्रहा द्युनगता नेष्टा विवाहे स्मृताः" इति ॥ वसिष्ठो लग्नप्रकरणे-'सर्वे जामित्रसंस्था विदधति मरणम्' इत्याह स्म ॥ लल्लः-"पापात्सप्तमगः शशी यदि भवेत्पापेन युक्तोथवा यत्नेनापि विवर्जयेन्मुनिमते दोषोपि संकथ्यते । उद्वाहे विधवा व्रते तु मरणं शूलं च पुंस्कर्मणा यात्रायां विपदो गृहेषु दहनः क्षौरेपि रोगो महान् ॥ " ॥ भुजबलः-"चंद्रात्सप्तमराशिगे दिनकरे त्यक्ता धनैः कन्यका भौमे च प्रमदा प्रयाति विलयं सौरेण वंध्या सरुक् । जीवः शुक्रशशांकजौ शुभकराः केचिद्वदंति क्षमाढ्रर्तृप्रेप्सितदीक्षितास्तभवने नित्यं प्रवासान्विता ॥ " इति ॥

## जामित्रदोषापवादः-

अस्यापवादमाह-किंवेति ॥ किंवाशब्दो विकल्पे । पूर्वं ग्रहाधिष्ठितराशेः सप्तमराशिस्थितत्रिंशद्भागात्मके लग्नेपि चन्द्रो निषिद्ध इत्युक्तम् । इदानीं तदधिष्ठितराशिनवांशमारभ्य बाणाशुगाः पंचपंचाशन्मितनवांशगे लग्नचंद्रे सति जामित्रं स्यात् । यथा मेषराशौ पंचमनवांशे भौमोस्ति । तस्मात्तुलायां पंचनवांशस्थं लग्नम् । तत्र चंद्रो निषिद्धः । अन्येष्टौ नवांशाः शुभाः । एवंविधं सूक्ष्मं जामित्रमिदमशुभकरं स्यात् । यदाह महेश्वरः-"हिमरश्मिनवांशकात्खलो यदि चंद्रोपि स्वलव्धसायकांशे । अयमन्यगुणैर्न हन्यते निविडं रत्युपसर्गडम्बरः ॥ " इति ॥

## अपवादान्तरं-तत्रैव-

अपवादांतरमाह राजमार्तंडः-"तुंगत्रिकोणभवने भवने निजे वा सौम्याधिमित्रगृहगोपि तदीक्षितो वा । जामित्रवेधजनितानपहृत्य दोषान्दोषाकरः सुखमनेकविधं विधत्ते ॥ " इति ॥ व्यवहारसमुच्चयेपि-"स्वोच्चेथवा स्वभवने स्फुरदंशुजालः सौम्यालये हितगृहे शुभवर्गगो वा । जामित्रकारिपरिसंचितदोषराशिं हत्वा ददाति बहुशः सुखमेव चन्द्रः ॥ " इति ॥ कालखंडे वात्स्यायनः-"गुरुश्चंद्रस्य जामित्रे तिष्ठेद्यदि बलान्वितः । धनसौभाग्यपुत्रांश्च लभते नात्र संशयः॥ मणिमुक्ताप्रवालैश्च सुवर्णाभरणैः शुभैः । शोभिता तु सदा तिष्ठेद्गुरुणापि निरीक्षिते ॥ सा तु भर्तुः प्रिया नित्यं बुधे चन्द्रस्य सप्तमे ॥ " इति ॥ ६७ ॥

## एकार्गलादिदोषापवादः-

**एकार्गलोपग्रहपातलत्ताजामित्रकर्त्तर्युदयास्तदोषाः ॥**
**नश्यंति चंद्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा ॥६८॥**

अथैकार्गलादिमहादोषाणामुक्तानां लग्नांतराभावे सत्यपि अपवादभूतमिंद्रवज्रालक्षणाक्रांतं साक्षाद्वसिष्ठवचनमेवाह--एकार्गलेति । एकार्गलः खार्जूरचक्रे । उपग्रहः शराष्टेत्यादिनोक्तः । पातश्चण्डीशचंडायुधम् । लत्ता 'ज्ञराहु' इत्यादिनोक्ता । जामित्रमधुनोक्तम् । कर्त्तरी 'लग्नांत्यापात्' इत्याद्युक्ता । उदयास्तदोषा वक्ष्यंते । एवंविधा दोषा नश्यंति ॥ कदा ॥ विवाहलग्ने चन्द्रार्कबलं स्वोच्चमित्रादिराशिस्थितत्वरूपं विहितस्थानस्थितत्वं च तेनोपपन्ने सहिते सति ॥ अत्र दृष्टांतमाह-यथेति ॥ अर्कस्य सूर्यस्याभ्युदये दोषा रात्रिर्यथा नश्यतीत्यर्थः ॥ गाढांधकारयुक्तापि रात्रिरेकाकिना सूर्यस्योदयेन स्वयमेव नश्यति ॥ अतएव दोषापदं प्रयुक्तम् । निशादिप्रयोगे तु साधारण्येन शुक्लपक्षीयाया अपि रात्रेः संभवाच्चंद्रेणैव कियत्तमसो निरस्तत्वादवशिष्टांधकारनाशे सूर्यस्यापुरुषार्थत्वापत्तेरिति कैमुतिकन्यायमपि सूचयति दोषापदम् । वसिष्ठवाक्यस्य मन्वादिवाक्यवत्प्रामाण्यान्न संमत्यंतरापेक्षा ॥ ६८ ॥

## देशभेदेन केषाञ्चिद्दोषाणां परिहारः-

**उपग्रहर्क्षं कुरुबाह्लिकेषु कलिंगवंगेषु च पातितं भम् ॥**
**सौराष्ट्रशाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं किल सर्वदेशे॥६९॥**

केषांचिद्दोषाणां देशभेदेन परिहारभूतमुपजातिलक्षणाक्रांतं वसिष्ठपद्यमेवाह-उपग्रहर्क्षमिति ॥ कुरवो बाह्लीकाश्च पश्चिमदेशास्तेषूपग्रहदोषाक्रांतभं त्यजेत् । तदतिरिक्तसर्वदेशेषु शुभमेवेत्यर्थः ॥ कलिंगा वंगाश्च प्राग्देशौ । बहुवचनान्मगधांगादयोपि । तेषु चंडीशचंडायुधापरपर्यायं पातं त्यजेत् । न तु क्रांतिसाम्यरूपं पात इति व्यवहारात् ॥ सौराष्ट्रशाल्वदेशौ पश्चिमदेशविशेषौ । बहुवचनाद्ग्रामबाहुल्यं, तेषु लत्तितं लत्ता संजातास्य तद्भं परित्यजेत् । विद्धं क्रूरेण शुभेन वा पंचशलाकादिचक्रद्वारा भिन्नं भं भूतलवर्तिसर्वदेशेषु त्यजेत् । किल निश्चयेन । न त्वस्य देशभेदेन परिहारः । एतदपि वाक्यं संमत्यंतरं नार्हति । विवाहपटलेपि "लत्तां मालवके देशे पातं कोसलके तथा । एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥" इति वराहः ॥ "युतिदोषो भवेद्गौडे जामित्रस्य च यामुने । वेधदोषस्तु विंध्याख्ये देशे नान्येषु केषु च ॥" इति ॥ एषां वाक्यानां यथादेशाचारं व्यवस्था ॥ ६९ ॥

## दशयोगदोषाः-

**शशांकसूर्यर्क्षयुतेर्भशेषे खं भूयुगांगानि दशेशतिथ्यः ॥**
**नागेदवोंकेन्दुमिता नखाश्चेद्भवंति चैते दशयोगसंज्ञाः ॥७०॥**

दशयोगदोषानुपजातिकयाह-शशांकेति ॥ चेद्यदि चंद्रसूर्यनक्षत्रयोर्युतेर्योगांकः सप्तविंशत्या भक्ताद्यः शेषस्तस्मिन् शून्यैकचतुःषड्दशैकादशपंचदशाष्टादशैकोनविंशतिसंख्याके सति एते

अंका दशयोगसंज्ञा भवन्ति ॥ नान्ये इत्यर्थः ॥ शिष्टानां दशानामंकानामभिहितत्वाद्दशयोग इत्यन्वर्थसंज्ञा । तदुक्तं दीपिकायाम्—" तिथ्यंगवेदैकदिगूनविंशमेकादशाष्टादशविंशसंख्याः । इष्टोडुना सूर्ययुतोडुना वा योगादमी चेद्दशयोगदोषाः ॥ " ॥ लल्लोपि—'यस्मिन्नृक्षे रविस्तिष्ठेद्यस्मिन्नृक्षे शशी तथा । द्वयोर्योगहृते धिष्ण्ये शेषः स्यात्खादितो दश ॥ शून्यवेदर्तुरूपाणि दिग्रुद्रतिथयो धृतिः । ऊनविंशा नखाश्चेति दशयोगाः प्रकीर्तिताः ॥" इति ॥ ७० ॥

## दशयोगदोषफलानि—

**वाताभ्राग्निमहीपचोरमरणं रुग्वज्रवादाः क्षति-**
**र्योगांके दलिते समे मनुयुतेऽथौजे तु सैकेऽर्धिके ॥**
**भं दास्रादथ संमितास्तु मनुभी रेखाः क्रमात्संलिखे-**
**द्वेधोऽस्मिन्ग्रहचन्द्रयोर्न शुभदः स्यादेकरेखास्थयोः ॥७१॥**

दशयोगानां फलं तदपवादं च शार्दूलविक्रीडितेनाह—वातेति ॥ शून्यशेषे वातदोषः स्यात् । एकशेषेऽभ्रान्मेघात् चतुर्ष्ववशिष्टेष्वग्नेः षट्सु महीपाद्राज्ञः दशसु चौरात् मरणम् एकादशसु मरणं द्वयोरन्यतरस्य वा पंचदशसु रुक् अष्टादशसु वज्रम् एकोनविंशेषु वादः कलिर्झकटक इति यावत् विंशतिशेषे क्षतिर्द्रव्येण नाशः स्यात् । यदाह लल्लः—"मरुन्मेघाग्निभूपालचौरमृत्युरुजोऽशनिः । कलिर्हानिर्दशोद्वाहे दोषास्त्याज्याः सदा बुधैः । विवाहादौ प्रतिष्ठायां व्रते पुंसवने तथा । कर्णवेधे च चूडायां दशयोगं विवर्जयेत् ॥" इति ॥

## तदपवादद्वयम्—

अथापवाद उच्यते ॥ योगांक इति ॥ ( १ )—खशून्ययुगांगादिरूपे योगांके समे युग्मसंख्याके सति दलिते सत्यर्द्धीकृते मनुभिश्चतुर्दशभिर्युते योगांके तदा दास्रादश्विनीतो भं नक्षत्रं स्यात् । यथा समांशके दशयोगः १० अर्द्धितः ५ मनुयुतः १९ मूलनक्षत्रं जातम् । योगांके अयुग्मसंख्याके सति सैके एकयुक्ते ततोर्द्धिते अश्विनीतो भं स्यात् । यथा विषमांकः पंचदशयोगः १५ सैकः १६ अर्द्धितः ८ पुष्यनक्षत्रं जातम् । अथेत्यनंतरं मनुभिः संमिताश्चतुर्दश रेखास्तिर्यक् क्रमात्संलिखेत् ॥ तद्यथा ॥ अनेन प्रकारेण यन्नक्षत्रमागतं तत आरभ्य साभिजिन्नक्षत्रवृंदमस्मिंश्चक्रे लेख्यम् । तत्र स्वाक्रांतनक्षत्रे स्थाप्याः दिननक्षत्रे च चंद्रे । एवं सति यदि ग्रहचंद्रावेकरेखास्थौ स्यातां तयोस्तादृशयोः परस्परावलोकनरूपो वेधो न शुभदः ॥ उक्तं च ज्योतिःसागरे—"योगांके विषमे सैके समे सवसुलोचने । दलीकृतेऽश्विनीपूर्वं दशयोगमुदाहृतम् ॥ दशयोगे महाचक्र प्रमादाद्यदि विध्यते । क्रूरैः सौम्यग्रहैर्वापि दंपत्योरेकनाशनम् ॥" इति ॥ ( २ )—दशयोगापवादान्तरमाह भरद्वाजः—" गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेन्द्रगे । दश दोषा विनश्यन्ति यथाग्नौ तूलराशयः ॥ " ॥ तूलं कार्पासः व्यासोपि—"शुक्रेण गुरुणा वापि संयुतं दृष्टमेव च । दशयोगसमायुक्तमपि लग्नं शुभावहम् ॥ " इति ॥ ७१ ॥

## बाण ( पञ्चक ) दोषः—सर्वकार्येषु—

**लग्नेनाढ्या याततिथ्योंकतष्टाः शेषे नागद्व्यब्धितर्केंदुसंख्ये ॥**
**रोगो वह्नी राजचौरौ च मृत्युर्बाणश्चायं दाक्षिणात्यप्रसिद्धः७२**

बाणदोषं शालिन्याह—लग्नेनेति ॥ शुक्लपक्षप्रतिपदमारभ्य लग्नेनाढ्या गततिथ्योंकैर्नवभिस्तष्टाः शेषे नागसंख्ये रोगाख्यो बाणः एवं द्विसंख्ये शेषे वह्न्याख्यः चतुःसंख्ये शेषे राजाख्यः । तर्काः षट् तत्संख्ये शेषे चौराख्यः । एकसंख्ये शेषे मृत्युसंज्ञो बाणः । अयं च दाक्षिणात्येषु महाराष्ट्रदेशीयेषु लोकेषु प्रसिद्धः । तेन देशाचारव्यवस्थया बाणस्य त्यागः, न तु प्राच्योदीच्यपाश्चात्यानाम् । तदुक्तं सप्तर्षिमते विवाहपटले—" गततिथियुतलग्नं पंचधा स्थापनीयं तिथि १५ रवि १२ दश १० नाग ८ वेद ४ युक्तं क्रमेण । नव ९ हृतशर ५ शेषे बाणसंज्ञा क्रमेण रुगनलनृपचौराः पंचमो मृत्युसंज्ञः ॥" इति ॥ ७२ ॥

३—बाणस्यापवादः-बाणान्तरं च—

**रसगुणशशिनागाब्ध्याढ्यसंक्रांतियातांशकमितिरथ तष्टां-कैर्यदा पंच शेषाः ॥ रुगनलनृपचोरा मृत्युसंज्ञश्च बाणो नवहृतशरशेषे शेषकैक्ये सशल्यः ॥ ७३ ॥**

प्राच्यमतेन बाणं सापवादं मालिनीच्छंदसाह—रसेति ॥ अथशब्दः पादपूरणे । रसगुणशशिनागाब्धिभिराढ्या चासौ संक्रांतियातांशकमितिश्चेति कर्मधारयसमासः । स्पष्टनिरयनांशसूर्यसंक्रांतिभुक्तांशानां मितिः संख्या पंचधा स्थाप्या । कलादिकमुपेक्ष्यम् । सा क्रमेण षड्द्व्येकाष्टचतुर्भिराढ्या संयोज्यांकैर्नवभिस्तष्टा सती यदा पंच शेषा यस्मिन्स्थले पंचावशिष्यंते तत्र क्रमेण रुगादिर्बाणः ॥ यथा आदौ पंचशेषे रोगबाणः द्वितीये पंचशेषेऽग्निबाणः, तृतीये पंचशेषे राजबाणः चतुर्थे पंचशेषे चौरबाणः पंचमे पंचशेषे मृत्युबाणः तस्मात्तस्माद्भयं भवतीत्यर्थः ॥ यदाह कश्यपः—" संक्रातियातांशकनंदशेषस्तर्काग्निरूपाष्टयुगैः समेतः । तष्टो ग्रहे रोगहुताशभूपस्तेनो मृतिश्चेति च पंच बाणाः ॥ " इति ॥ पंचेति पृथक् पदम् । पंच शिष्यंते तदा बाणाः स्युरित्यर्थः । तत्र बाणो द्विविधः एकः काष्ठशल्योऽपरो लोहशल्यः । तत्राभिहितो बाणः काष्ठशल्य उच्यते । अस्य नाम प्राच्याख्यो बाण इत्याहुः तेन तादृशे बाणे लग्ने तथा पीडा न भवेत्तदर्थं तदपवादभूतो लोहशल्यसहितो बाण उच्यते ॥ नवेति ॥ यानि प्रागागतानि शेषाणि तेषामैक्ये नवहृते पश्चाच्छरशेषे पंचशेषे सति सशल्यः लोहसहितो बाणः स्यात् । पंचव्यतिरिक्ते शेषे शल्यरहितो दुष्टबाणः । अयं तुल्यन्यायत्वात्प्राक् पद्योक्तेपि बाणे सशल्यो बाणो ज्ञेयः ॥ ज्योतिश्चिंतामणावन्यथा बाणोभिहितः—" तिथिवारभलग्नांको रसाग्न्यंब्वष्टवेदयुक् ६ । ३ । १ । ८ । ४ ॥ नन्दाप्तपंचशेषे रुग्वह्निराट्चौरमृत्युकृत् ॥ " इति ॥ ७३ ॥

त्रिविधो बाणदोषः—

**रात्रौ चौररुजौ दिवा नरपतिर्वह्निः सदा संध्ययो-र्मृत्युश्चाथ शनौ नृपो विदि मृतिर्भौमेऽग्निचौरौ रवौ ॥ रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे वर्ज्याश्च क्रमतो बुधै रुगनलक्ष्मापालचौरा मृतिः ॥ ६४ ॥**

समयभेदेन वारभेदेन कार्यभेदेन वा त्रिविधं बाणपरिहारं शार्दूलविक्रीडितेनाह—रात्राविति ॥ तत्र तावत्कालभेदेन परिहारः। रात्रौ चौररुजौ बाणौ त्याज्यौ। दिवा दिवसेऽग्निनृपतौ वह्निराजबाणौ त्याज्यौ। संध्ययोः प्रातःसायंसंध्ययोः सदा मृत्युबाणस्त्याज्यः। अर्थवशाद्विभक्तिविपरिणामः। तदुक्तं ज्योतिःप्रकाशे—"रोगं चौरं त्यजेद्रात्रौ दिवा राजाग्निपंचकम् ॥ उभयोः संध्ययोर्मृत्युमन्यकाले न निंदितः ॥" इति ॥

## बाणदोषापवादः—

वारभेदेन परिहारः—अथेति ॥ अथ शनौ शनिवारे नृपबाणः। विदि बुधवारे मृतिबाणः भौमेऽग्निचौरबाणौ। रवौ रोगबाणः। त्याज्यस्त्याज्याविति यथायोग्यं संबंधः। उक्तं च दैवज्ञमनोहरे—"रवौ रोगं कुजे वह्निं शनौ च नृपपंचकम्। वर्ज्यं पुनः कुजे चौरं बुधवारे च मृत्युदम् ॥" इति ॥ कार्यभेदेन परिहार उच्यते—अथेति ॥ क्रमतः एतेषु शुभकर्मसु एते बाणा वर्ज्याः। यथा व्रते यज्ञोपवीते रुक्, गेहं गृहं तस्य गोप आच्छादनं तत्रानलोऽग्निः, नृपसेवायां क्ष्मापालो राजा, याने यात्रायां चौरः, पाणिग्रहे मृतिर्बाणो वर्ज्यः इत्यर्थः ॥ तदुक्तं ज्योतिःप्रकाशे—"नृपाख्यं राजसेवायां गृहगोपेऽग्निपंचकम्। याने चौरं व्रते रोगं त्यजेन्मृत्युं करग्रहे॥" इति ॥ केचिदेवं पाठमाहुः—"व्रते विवर्जयेद्रोगं गृहगोपेऽग्निपंचकम्। यात्रायां राजचौराख्यौ विवाहे मृतिपंचकम् ॥" इति ॥ ७४ ॥

## ग्रहाणां दृष्टयः—

**त्र्याशं त्रिकोणं चतुरस्रमस्तं पश्यंति खेटाश्चरणाभिवृद्ध्या ॥**
**मन्दो गुरुर्भूमिसुतः परे च क्रमेण संपूर्णदृशो भवंति ॥ ७५ ॥**

उदयास्तशुद्धिं विवक्षुस्तदुपयोगिनीं ग्रहदृष्टिमुपजातिकयाह—त्र्याशमिति ॥ खेटा ग्रहा यस्मिन् स्थाने तिष्ठंति तस्मात्कथ्यमानाः चरणाभिवृद्ध्या पादवृद्ध्या पश्यंति ॥ तद्यथा—त्र्याशं तृतीयं दशमं चैकचरणदृष्ट्या पश्यंति। त्रिकोणं नवमं पंचमं द्विचरणदृष्ट्या पश्यंति। चतुरस्रं चतुर्थमष्टमं त्रिचरणदृष्ट्या पश्यंति। अस्तं सप्तमस्थानं चतुश्चरणदृष्ट्या पश्यंति। अनेन तत्तद्ग्रहोद्भवशुभफलं चरणाभिवृद्ध्यैव भवतीत्यसूचि। तदुक्तं वराहेण—"दशमतृतीये नवपंचमे चतुर्थाष्टमे कलत्रं च ॥ पश्यंति पादवृद्ध्या फलानि चैवं प्रयच्छंति ॥" इति ॥ मन्द इति ॥ मंदः शनैश्चरः स्वस्थानात् त्र्याशं संपूर्णदृक् चतुश्चरणदृष्टिः। एवं गुरुस्त्रिकोणं भूमिसुतः चतुरस्रं परे चंद्रबुधसूर्यशुक्राः संपूर्णदृश इत्यर्थः ॥ यदाह गार्गिः—"दुश्चिक्यदशमान्सौरिस्त्रिकोणस्थान्बृहस्पतिः। चतुर्थाष्टमगान्भौमः शेषाः सप्तमसंस्थितान् ॥ भवंति वीक्षणान्नित्यमेवाधिकफलग्रहाः ॥" इति ॥ वराहोऽपि—"पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः। चतुरस्रं भूमिसुतः सितार्कबुधहिमकराः कलत्रं च ॥" इति ॥ ७५ ॥

## ४ उदयास्तशुद्धिः—तत्फलानि च—

**यदा लग्नांशेशो लवमथ तनुं पश्यति युतो भवेद्वायं वोढुः शुभफलमनल्पं रचयति ॥ लवद्यूनस्वामी लवमदनभं लग्नमदनं प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम्॥७६॥**

अथावसरप्राप्तामुदयास्तशुद्धिं शिखरिणीभुजंगप्रयाताभ्यामाह—प्रथमपद्यस्यायमर्थः ॥ यदेति ॥ यदा लग्नेशो लग्नांशस्तस्येशः स्वामी लवं नवांशं पश्यति वा अथवा नवांशेन सह युतो वा भवेत्तदा वोढुर्वरस्यानल्पं बहुशुभफलं रचयति ॥ यथा मेषलग्ने मिथुनांशस्तदीशो बुधः तुलायां मिथुनं पश्यति तत्र तिष्ठति वा ॥ अयमुदयशुद्धेः प्रथमः कल्पः ॥ 'तनुफलं हि बलवान बलवंतः' इति केशवार्कोक्तन्यायात् । तदलाभे तु लग्नांशेशस्तनुं लग्नं पश्यति लग्नेन सह युतो वा भवेत्तदापि वोढुः शुभफलमनल्पं स्यात् तथा मेषलग्न एव मिथुननवांशस्वामी बुधो मकरे स्वनवांशं न पश्यति किंतु लग्नं पश्यति मेष एव तिष्ठति ॥ अयमस्तशुद्धेः द्वितीयः प्रकारः ॥ लवेति । लवद्यूनस्वामी बलवान्नवांशात् द्यूनं सप्तमनवांशस्तत्स्वामी लवमदनभं लवान्मदनभं सप्तमनवांशं पश्यति तेन सह युतो वा भवेत्तदा वध्वा अनल्पं शुभं रचयति ॥ तथा मिथुननवांशात् सप्तमो धनुरंशस्तदधीशो गुरुर्मेषे धनुः पश्यति तत्र तिष्ठति वा ॥ अयमस्तशुद्धेः प्रथमः प्रकारः । तदलाभे तु लवद्यूनस्वामी लग्नमदनं सप्तमभवनं पश्यति युतः सप्तमभवनेन सह युतो वा भवेत्तदा वध्वाः शुभम् ।यथा गुरुः कर्के स्वनवांशं न पश्यति किंतु सप्तमभवनं तुलां पश्यति अथवा तुलायामेवास्ति ॥ अयमस्तशुद्धेर्द्वितीयः प्रकारः ॥ इतरथेति ॥ इतरथा यदा लग्नांशेशो लवं तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा वरस्याशुभं मृत्युः स्यात् । यदा त्वस्तांशेशोऽस्तांशमस्तभवनं लवं तनुं वा न पश्यति तत्र युतो वा न स्यात्तदा कन्याया अशुभं मृत्युरित्यर्थः ॥ यदाह कश्यपः—"स्वस्वेशेनोदयास्तांशौ वीक्षितावथ संयुतौ । लग्नं वास्तगृहं तत्तदंशेशेनेक्षितं युतम् ॥ " इति ॥ वसिष्ठः— "इष्टोदयांशे निजपत्यदृष्टे वरस्य मृत्युस्तनुसंयुते च । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥ " इति ॥ तुल्यन्यायत्वाल्लग्नेऽप्यस्तलग्नेपि उदयनलवात् अस्तांशस्वामिनोर्दृष्ट्यभावेऽप्येतदेव फलं ध्येयम् ॥ ७६ ॥

सैव—तानि च—

**लवेशो लवं लग्नपो लग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य ॥ लवद्यूनपोंशं द्युनं लग्नपोस्तं मिथो वेक्षते स्याच्छुभं कन्यकायाः ॥ ७७ ॥**

द्वितीयपद्यस्यायमर्थः ॥ लवेश इति॥ नवांशस्वामी नवांशं प्रपश्येल्लग्नस्वामी लग्नं प्रपश्येत्तदा वरस्य शुभं स्यात् । अथवा मिथः परस्परं लवस्वामी लग्नं लग्नेशो लवं च पश्येत्तदापि वरस्य शुभं स्यात् । एवं लवद्यूननवांशात्सदा मदननवांशस्वामी अंशं द्यूनमंशं सप्तराशिमीक्षते लग्नपो लग्नस्वामी अस्तं लग्नात्सप्तमभवनमीक्षते तदा कन्यायाः शुभं स्यात् । वा अथवा मिथः सप्तमाधीशो लग्नसप्तमं वीक्षते लग्नात्सप्तमाधीशश्चांशसप्तममीक्षते तदापि कन्यायाः शुभं स्यात् । अत्रोदाहरणं स्पष्टत्वान्नोक्तमस्माभिः । अन्यथात्वे दंपत्योरशुभमित्यर्थः ॥ यदाह नारदः—"लग्ननवांशकौ स्वस्वपतिना वीक्षितौ युतौ।न चेद्वान्योन्यपतिना शुभमित्रेण वाथवा ॥ वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ । एवं तावीक्षितौ युक्तौ मृत्युर्वध्वाः करग्रहे ॥ " ॥ वसिष्ठोपि—"उदयांशः स्वनाथेन मित्रसौम्येन वा युतः । प्रेक्षितो वा तथास्तांशो दंपत्योः पुत्रपौत्रदः ॥" इति ॥ परस्परवीक्षणेप्येतदेव फलं ध्येयम् ॥ नारदवाक्यस्वरसात् ॥ ७७ ॥

### तृतीयप्रकारः सतमशुद्ध्यभावे-विवाहे-

**लवपतिशुभमित्रं वीक्षतेंशं तनुं वा परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम् । मदनलवपमित्रं सौम्यमंशं द्युनं वा तनुमदनगृहं चेद्वीक्षते शर्म वध्वाः ॥ ७८ ॥**

पूर्वोक्तप्रकारेणोदयास्तशुद्धेरभावेपि तृतीयप्रकार उच्यते ॥ लवपतीति ॥ शुभमित्रं शुभं च तन्मित्रं चेति कर्मधारयः । लवपतेर्लग्ननवांशेशस्य शुभग्रहः सोमबुधगुरुशुक्राणामन्यतमश्चेन्मित्रं स्यात्स चेदंशं स्वनवांशं तनुं लग्नं वा वीक्षते तदा परिणयनकरस्य शास्त्रदृष्टं वसिष्ठोक्तं पुत्रपौत्रादिप्राप्तिरूपं शुभं फलं स्यात् । एवं मदनलवस्यास्तांशेशस्य मित्रं सौम्यं चेत्स्यात्तच्चांशं द्यूनमंशाल्लग्ननवांशात् द्यूनं सप्तमनवांशं चेद्वीक्षितं वा अथवा तनुमदनगृहं लग्नात्सप्तमभवनं चेद्वीक्षते तदा वध्वाः शास्त्रदृष्टं शर्म स्यात् । यद्युभयत्रापि नवांशस्वामिनो मित्रं पापग्रहश्चेत्तस्य दृष्टिरशुभैवेति फलितोर्थः ॥ यदाह वराहः—"शुद्धस्त्वहः स्यान्न यदोदयांशो लग्नेन चास्तांशमुपैति सिद्धिम् । तदा सुहृत्सौम्यनिरीक्षितो यः शुभाय स स्यात्प्रवदंति संतः ॥" इति ॥ नन्वत्र वाक्ये सुहृत्सौम्यनिरीक्षित इति पदे सुहृच्चासौ सौम्यश्चेति कर्मधारयांगीकारे भवदुक्तं व्याख्यानं सत् । यदा तु सुहृच्च सौम्यश्चेति द्वंद्वः तदा सुहृत्पापग्रहोपि स्यादिति चेन्न ॥ प्रागुक्तवसिष्ठवाक्ये मित्रे सौम्येन वा युते इति तृतीयैकवचनांतस्य पार्थक्योपादानात् । मित्रं चासौ सौम्यश्च मित्रसौम्यस्तेन मित्रशब्दस्य विशेषणत्वात्पूर्वनिपातः द्वंद्वांगीकारे तु मित्रसौम्याभ्यामिति भवितव्यम् । तथा सति छंदोभंगोपि स्यात् ॥ समाहारद्वंद्वो भविष्यतीति चेत् ॥ न किंचित्प्रमाणम् । अतः कश्यपेनाप्येवमेवोक्तं—"राश्यंशौ मित्रसौम्येन वीक्षितौ वाथ संयुतौ । उदयास्तांशयोः शुद्धिस्त्रिविधा मंगलप्रदा ॥" इति ॥ अतो वराहवाक्येपि कर्मधारय एवेति युक्तं प्रतीमः । वसिष्ठः—"लग्नास्तशुद्ध्या रहितः सरोषः करोति मृत्युं वरकन्ययोश्च । त्रातुं यथा लग्नगुणास्त्वशक्तास्तं बंधुवर्गा इव सर्पदष्टम्॥" इति ॥ केचित्तु विवाहादौ वज्रयोगं निषिद्धमाहुः ॥ तल्लक्षणं—"तिथिं वारं च नक्षत्रं नवभिश्च समन्वितम् । सप्तभिस्तु हरेद्भागं शेषांके फलमादिशेत् ॥ त्रिशेषे तु जलं विद्यात्पंचशेषे प्रभंजनः । सप्तशेषे वज्रपातो ज्ञेयं वज्रस्य लक्षणम् ॥" इति टोडरानन्दे ॥ ७८ ॥

### सूर्यसंक्रमाख्यदोषेषु त्याज्यदिनघटिका विवाहादौ-

**विषुवायनेषु परपूर्वमध्यमान्दिवसांस्त्यजेदितरसंक्रमेषु हि ॥ घटिकास्तु षोडश शुभक्रियाविधौ परतोपि पूर्वमपि संत्यजेद् बुधः ॥ ७९ ॥**

सूर्यसंक्रमणाख्यं दोषं मंजुभाषिण्याह—विषुवेति ॥ विषुवं तुलामेषसंक्रांती । अयने कर्कमकरसंक्रांती । एवं चतसृषु विषुवायनाख्यासु संक्रांतिषु परपूर्वमध्यमान् गतागामिवर्त्तमानान्दिवसान्बुधः शुभक्रियाविधौ विवाहयज्ञोपवीतादिशुभकार्येषु त्यजेत् । इतरेष्वष्टसंक्रमेषु संक्रमकालात्परतोग्रेपि पूर्वं प्रागपि षोडश घटिका मिलित्वा द्वात्रिंशद्घटिकास्त्यजेत् ॥ यदाह

वसिष्ठः-"विषुवतोरयनयोर्दिनत्रयं हरिपदे षडशीतिमुखेषु च । पूर्वतोपि परतोपि संक्रमान्नाडिकाश्च खलु षोडश त्यजेत् ॥ संक्रांतिदोषे त्वचिरात्कृतं यदुद्वाहपूर्वाखिलमंगलाद्यम् । लाक्षासमूहो ज्वालिताग्निमध्ये विलीयते तद्वदशेषमेतत् ॥" इति ॥ उद्वाहादिग्रहणात्स्नानादानिषेधः । तद्वाक्यानि संक्रांतिप्रकरणेस्माभिरुक्तानि ॥

## तत्र व्यवस्था-सायनसंक्रमेपि-

किं तद्दिनत्रयं त्याज्यं किं संक्रांतिकालात् प्राग्दिनत्रयमुत तदनंतरमुत मध्यमं वेति पक्षत्रयसंभवे निर्णयमाह गुरुः-"अयने विषुवे पूर्वं परं मध्यदिनं त्यजेत् । अन्यसंक्रमणे पूर्वापराः षोडश नाडिकाः ॥" इति ॥ अयं च निषेधः सायनसंक्रांतिष्वपि ध्येयः ॥ यदाह वसिष्ठः-"यदायनप्रवेशः स्यात्तदा तद्राशिसंक्रमः । तस्मिन्नपि दिने त्याज्या नाड्यः षोडश षोडश॥" इति ॥ शौनकः-"अयनद्वये समूढा भर्त्तारं नाभिनदंते नारी। विषुवद्द्वयेऽपि विधवा षडशीतिमुखेषु सा म्रियते । विष्णुपदेषु विगीता कन्या विकलेंद्रिया व्यतीपाते । वैधृतिविष्ट्योर्भ्रष्टा सुभगा शेषेषु करणेषु ॥" इति ॥ विगीता पुंश्चलीत्याद्यभिशापेन प्रसिद्धा ॥ ७९ ॥

## संक्रांतिषु ग्रहाणां त्याज्यघट्यः-

**देवद्व्यंकर्तवोष्टाष्टौ नाड्योंकाः खनृपाः क्रमात् ।**
**वर्ज्याः संक्रमणेऽर्कादेः प्रायोर्कस्यातिनिन्दिताः ॥ ८० ॥**

संक्रांतिप्रसंगात्सकलग्रहाणां-संक्रांतिघटीरनुष्टुभाह-देवेति ॥ अर्कादेः सूर्यादेर्ग्रहसमूहस्यैता घटिकास्त्याज्याः । यथा सूर्यस्य संक्रमणकालात्प्राक् पश्चाच्च मिलित्वा त्रयस्त्रिंशद्घटिकास्त्याज्याः । एवं चंद्रस्य द्वे घटिके भौमस्य नव बुधस्य षट् गुरोरष्टाष्टौ अष्टाशीतिः । शुक्रस्यांकाः नव शनेः खनृपाः षष्ट्यधिकशतघटिका वर्ज्याः । तत्रार्कस्य घटिकाः प्रायो बाहुल्येनातिनिन्दिताः । अत्र संमतिवाक्यं वासनासहिताविवरणं संक्रांतिप्रकरणेऽभिहितमस्माभिः ॥ तत एवावधार्यम् ॥ ८० ॥

## लग्नदोषाः पंग्वन्धकाणबधिराख्याः-

**घस्रे तुलाली बधिरौ मृगाश्वौ रात्रौ च सिंहाजवृषा दिवान्धाः।**
**कन्यानृयुक्कर्कटका निशान्धा दिने घटोंत्यो निशि पंगुसंज्ञः॥८१**

पंग्वंधकाणबधिराख्यान् लग्नदोषानुपजातिकयाह-घस्रे इति ॥ घस्रे दिवसे तुलाली तुलावृश्चिकौ बधिरौ स्मृतौ । मृगाश्वौ मकरधनुषौ रात्रौ बधिरौ न तु दिवसे । सिंहाजवृषा दिवांधा दिवसेंधा उक्ता न तु रात्रौ । कन्यानृयुक्कर्कटा निशांधा रात्र्यंधा न तु दिवांधाः । घटः कुंभो दिने पंगुसंज्ञो न तु रात्रौ । अंत्यो मीनो निशि पंगुसंज्ञो नतु दिने ॥ यदाह वसिष्ठः-"मेषादिरन्धकं षट्कं चत्वारो बधिराः स्मृताः । द्वौ पंगू वेति विज्ञेयावित्येतद्राशिलक्षणम् ॥ मेषो वृषो मृगेंद्रश्च दिवसेंधाः प्रकीर्तिताः । नृयुक्कर्कटकन्याश्च रात्रावंधाः प्रकीर्तिताः ॥ तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा । धनुश्च मकरश्चैव बधिरौ निशि कीर्तितौ ॥ कुंभमीनौ च पंगू द्वौ दिवारात्रौ यथाक्रमम् ॥" इति॥कुंभो दिवा पंगुः । मीनो रात्रौ पंगुः । अनेन यस्मिन् काले लग्नस्य योंधपंग्वादिदोष उक्तस्तस्मिन्नेव काले तल्लग्नं दोषावहं न कालांतरे इत्युक्तं भवति ॥ ८१ ॥

## पंग्वन्धलग्नदोषाः-

**बधिरा धन्वितुलालयोऽपराह्णे मिथुनं कर्कटकोऽगना निशांधाः ॥
दिवसांधा हरिगोक्रियास्तुकुब्जामृगकुंभांतिमभानिसंध्ययोर्हि॥८२॥**

परमते पंग्वंधाँद्यलग्नदोषानाह-बधिरेति ॥ धन्वितुलालयो धनुस्तुलावृश्चिका अपराह्णे दिवसस्यांतिमे तृतीयविभागे बधिराः स्मृताः ॥ मिथुनकर्कटकन्या निशांधाः स्मृताः । हरिगोक्रियाः सिंहवृषमेषास्तु दिवसंधाः स्मृताः । मृगकुंभांतिमभानि मकरकुंभमीनाः संध्ययोः प्रातःसायंसंध्ययोर्हि निश्चयेन कुब्जाः पंगवः स्मृताः । अत्र मूलवाक्यं नोपलभ्यते ॥ ८२ ॥

## पंग्वन्धलग्नदोषफलानि तद्दोषापवादश्च-

**दारिद्र्यं बधिरतनौ दिवांधलग्ने वैधव्यं शिशुमरणं निशांधलग्ने ॥ पंग्वंगे निखिलधनानि नाशमीयुः सर्वत्राधिपगुरुदृष्टिभिर्न दोषः ॥ ८३ ॥**

अथैषां प्रयोजनं सापवादं प्रहर्षिण्याह-दारिद्र्यमिति ॥ स्पष्टार्थं पद्यम् । पंग्वंगे पंगुलग्ने । यदाह वसिष्ठः-" अंधे वैधव्यमाप्नोति दारिद्र्यं बधिरे तथा । अर्थनाशो भवेत्पंगाविति धात्रा विनिश्चितम् ॥ " इति ॥ सर्वत्रेत्यस्य संमतिः । बादरायणः-मासशून्याह्वयास्तारा राशयो बधिरादयः । गौडमालवयोस्त्याज्यास्त्वन्यदेशे न गर्हिताः ॥ " इति नारदवाक्यं ग्रन्थकृतैव प्रागुक्तम् ॥ ८३ ॥

## विहितनवांशाः-विवाहे-

**कार्मुकतौलिककन्या युग्मलवे झषगे वा ॥
यर्हि भवेदुपयामस्तर्हि सती खलु कन्या ॥ ८४ ॥**

अथोदयास्तशुद्धिः प्रागुक्ता तत्रावसरप्राप्तान्विहितनवांशांश्चित्रपदाच्छंदसाह-कार्मुकेति ॥ कार्मुकं धनुः । तौलिकं तुला । कन्या प्रसिद्धा । युग्मं मिथुनम् । एषांमंशे नवांशे झषगे वा मीननवांशे वा विकल्पेन । वाशब्दः स्वकीयमतसूचनार्थः । धनुरादिनवांशाः सर्वमुनिसंमता इत्यर्थः । तेष्वंशेषु यर्हि यदा उपयामो विवाहो भवेत्तर्हि कन्या विवाहोत्तरं सती पतिव्रता खलु निश्चयेन स्यात् ।

## नवांशलग्नेषु विवाहे फलानि-

यदाह वसिष्ठः-" लग्ने हि सर्वे शुभराशयश्च शुभेक्षिता वाऽथ युताः शुभाः स्युः । नवांशकास्तौलिनृयुग्युवत्यश्चापाद्यभागः शुभदो न चान्ये ॥ द्विभर्तृका मेषनवांशके स्याद्भृशांशके सापि सुशीलयुक्ता । धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाप्यजस्रम् । सिंहांशके सा पितृमंदिरस्था कन्यांशके वित्तयुता सुशीला । तुलांशके सर्वगुणास्पदा सा कीटांशके निःस्वतरा विशीला ॥ चापांशकाद्ये धनिनी द्वितीये भागेन्यसक्ता मलिना गदाढ्या ॥ निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा ॥ मीनांशके भर्तृयुतार्थहीना शुभग्रहैर्युक्तानिरीक्षिते वा । तस्मात्सदैवोक्तनवांशकेषु कुर्याद्विवाहं गुणसंप्रवृद्ध्यै ॥ नवांश-

द्दोषः सकलं गुणौघं लग्नोत्थसौम्यग्रहसंभवं च । ध्रुवं निहंतीव वृकोऽजसंघं षड्वर्गजं सौम्यवियच्चराणाम् ॥ ” इति । पशुशीलयुक्ता पश्वाचारपरा ॥ गदो रोगः । स्वं धनम् । एते एव च नवांशाः सकलमुनिभिरुक्ताः ॥ “ तुलामिथुनकन्यांशा धनुरर्द्धार्द्धसंयुताः । एते नवांशाः शुभदा यदि नांत्यांशकाः खलु ॥ ” इति नारदोक्तेः ॥

## मीनांशकस्य गुणवद्ग्रोपलब्ध्यनतिक्रमविषयता-

शौनकस्तु मीनांशकमपि शुभमाह-“सुदती सौभाग्यवती प्रहसितवदना च मीनांशे” इति। तत्र निषेधस्तु बलत्वात्षोडशीग्रहणाग्रहणवद्विकल्पः इत्याहुः ॥ तन्न ॥ ‘ एकबाधेनोपपत्तावनेकबाधो न न्याय्यः ’ इति बहुमुनिवचनप्रामाण्यान्मीनांशत्याग एवोचितो न त्वेकतरमुनिवचनानुरोधात्पाक्षिको बाधः पाक्षिको विधिश्च ॥ विकल्पस्याष्टदोषग्रस्तत्वात् ॥ का तर्हि शौनकवाक्यस्य गतिरिति चेत् ॥ गुणवद्ग्रोपलब्धौ लग्नांतरासंभवे मीनांशको निषिद्धोपि प्रशस्त इत्येवं युक्ता गतिः ॥ यर्हीति ॥ “अनद्यतने र्हिलन्यतरस्याम् ” इति किंयत्तद्भ्योऽनद्यतने काले र्हिल्प्रत्ययः । उपयामः “ यमः समुपनिविषु च ” इति भावे घञ् । “ विवाहोपयमौ समौ । तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ” इत्यमरसिंहः ॥ ८४ ॥

## अन्त्यनवांशादयस्त्याज्याः-ग्राह्यनवांशाश्च-

**अंत्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा ॥**
**नो चरलग्ने चरलवयोगं तौलिमृगस्थे शशभृति कुर्यात्॥८५॥**

अथ विहितनवांशे क्वचिन्निषेधं श्रीच्छंदसाह-अंत्येति । विहितनवांशेष्वपि यथा मेषलग्ने धनुर्नवांशोंतिम इत्येवं विषये लग्नांतिमनवांशे काचन कन्या न परिणेया न विवाह्या । परंतु वर्गोत्तममपि नवांशं हित्वा तत्र विवाह उचित एव । तथा मिथुनलग्ने मिथुनांशांतिमोपि वर्गोत्तमः शुभः । यदाह कश्यपः-“अंत्यांशका अपि श्रेष्ठा यदि वर्गोत्तमाह्वयाः । अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः ॥ ” इति ॥ वसिष्ठोपि वर्गोत्तमं विनांत्यांशो विवाहे न शुभप्रदः । वर्गोत्तमश्चेदंत्यांशः पुत्रपौत्रादिवृद्धिदः ॥ ” इति ॥ अन्यच्च । नो चरलग्ने इति । तौलिमृगस्थे तुलामकरस्थे शशभृति चंद्रे सति चरलग्ने विहितचरलवयोगे नो कुर्यात् यथा मेषलग्ने तुलांशः । उक्तं च केशवार्केण-“चरलवं चरवेश्मगमुत्सृजेन्मृगतुलाधरगे मृगलक्ष्मणि । युवतिरत्र भवेत्कृतकौतुका मदनवत्यनवत्यजनोन्मुखी ” इति ॥ अनवो जीर्णो भर्त्ता तस्य त्यजने उन्मुखी परपुरुषरता स्यादित्यर्थः ॥ ८५ ॥

## विवाहलग्नादौ वर्ज्या द्वादशशन्यादयः-

**व्यये शनिः खेऽवनिजस्तृतीये भृगुस्तनौ चंद्रखला न शस्ताः ॥ लग्नेट् कविग्लौश्च रिपौ मृतौ ग्लौ लग्नेट्शुभाश्च मदे च सर्वे ॥ ८६ ॥**

सर्वथा लग्नभंगयोगमुपजात्याह-व्यये इति ॥ व्यये द्वादशस्थाने स्थितः शनिः न शस्तः ॥ “सोमकुलेपि हि जातां द्वादशगो मद्यपां कुरुते” इति शौनकोक्तेः । अत्र रविसुते इत्यनुवर्त्तते ॥

## दशमे मङ्गलो वर्ज्यः विवाहलग्नात्-

खे दशमेऽवनिजो मंगलो न शस्तः ॥ "शाकिनी व्योम्नि वक्रे" इति केशवार्कोक्तेः ॥

## तृतीये शुक्रो वर्ज्यः विवाहलग्नात्-

तृतीये भृगुः शुक्रः न शस्तः ॥ "धन्या धनगे शुक्रे कृपणत्वं प्राप्नुयान्नारी। दुश्चिक्यगते कन्या त्र्यब्दाद्भर्तुः कनीयांसं भजते" ॥ इति शौनकोक्तेः ॥

## विवाहलग्ने वर्ज्या ग्रहाः-

तनौ लग्ने चंद्रः खलाः पापग्रहा न शस्ताः ॥ "लग्नस्थेर्के कन्या विधवा संवत्सरेऽष्टमे भवति। लग्नस्थो हिमरश्मिर्मृत्युं कुर्यात्त्रयोदशे मासे ॥ भौमः सद्यो विधवां लग्नस्थोऽब्दान्न सौम्यदृग्योगात्। कामयति नीचवर्णाल्लग्नस्थे रविसुते बहून्पुरुषान् ॥ शनिवद्विधुंतुदस्य तु विज्ञेयं सदसदेति विज्ञैः ॥" इति शौनकोक्तेः ॥

## षष्ठे लग्नपशुक्रचन्द्रा वर्ज्या विवाहलग्नात्-

लग्नेट् लग्नस्वामी कविः शुक्रः ग्लौश्चन्द्रश्च रिपौ षष्ठस्थाने न शस्तः। "रंध्रे कुजे सौम्यखगे च मृत्युः षष्ठाष्टगे लग्नपतौ च मृत्युः" इति ज्योतिर्निबन्धकारोक्तेः। "भृगुषट्काह्वयो दोषो लग्नात्षष्ठगते सिते। उच्चगे शुभसंयुक्ते तल्लग्नं सर्वदा त्यजेत् ॥" इति नारदोक्तेः ॥ "अब्दचतुष्कान्मृत्युर्दंपत्योः षष्ठगे चंद्रे" इति शौनकोक्तेः ॥ ग्लौश्चंद्रः ॥

## अष्टमे लग्नपेन्दुबुधेज्यशुक्रारा वर्ज्या विवाहलग्नात्-

लग्नेट् शुभाश्चंद्रबुधगुरुशुक्राः आरो भौमश्चैते मृतावष्टमस्थाने न शस्ताः। "मासत्रयेण विधवा निधनस्थश्चंद्रमाः कुरुते। मासत्रयेण कन्या निधनस्थे याति पंचत्वम् ॥" बुध इत्यनुवर्तते। पंचत्वं मरणम्। दंपत्योर्निधनस्थः सप्तदशाब्दाद्वियोगदो जीवः। पंचत्वं नयति भृगुर्निधनस्थः सप्तभिर्वर्षैः ॥" इति शौनकोक्तेः। नारदः-"कुजाष्टमो महादोषो लग्नादष्टमगे कुजे। शुभत्रययुतं लग्नं त्यजेत्तुंगगे यदि ॥" अत्र संमतिः प्रागुक्ता ॥

## सप्तमे लग्नात्सर्वथा शुद्धिरपेक्षिता-विवाहे-

लग्नेट् च पुनः सर्वे सूर्यादयो ग्रहा मदे सप्तमस्थाने न शस्ताः निषिद्धाः। 'सर्वे जामित्रसंस्था विदधति मरणम्' इति वसिष्ठोक्तेः। कश्यपोपि-"सप्तमस्थानगाः सर्वे ग्रहाः कुर्वंति शीघ्रतः। दंपत्योर्मरणं यत्स्यादेकस्य च न संशयः ॥" इति ॥ अर्थादन्येषु स्थानेषु ग्रहाः समीचीनास्तत्र केषुचित्स्थानेषु शुभा एव केषुचिन्मध्यमा एवेत्येतदपि वक्ष्यति। अतोमुमर्थमतिसंक्षिप्य त्रिविक्रमेण निषिद्धस्थानान्येवोक्तानि-"त्याज्या लग्नेऽब्धयो मंदात्षष्ठे शुक्रेंदुलग्नपाः। रंध्रे चंद्रादयः पंच सर्वेऽस्तेऽब्जगुरू समौ ॥" इति ॥

## सप्तमे विधौ गुरौ वा दोषफलं-विवाहलग्नात्-

अब्जगुर्वोः समत्वं शौनकमतेन ॥ तादृशविरुद्धफलाभावात्। यदाह-"कन्यारतिस्रो जनयाति सापत्न्यं चैव सप्तमे शशिनि। शीलचरित्रोपेतां करोति पत्युः कलत्रगो द्रव्याम् ॥" इति ॥ गुरुरित्यनुवर्त्तते। अत्र वचनद्वयप्रामाण्याद्विकल्पः ॥

## चन्द्राद्गुरुबुधशुक्राः सप्तमे विवाहे शुक्लपक्षे शुभाः-

यत्त्वत्रिणोक्तं-"जामित्रगो यदि भवेदुशना बुधो वा गीर्वाणनाथसचिवः सितचंद्रपक्षे। कन्याविवाहसमये परिहृत्य दोषान्सौभाग्यपुत्रसहितां वनितां करोति ॥ " इति-तच्चंद्रजामित्रविषयम् ॥ तथा च भुजबलः-"स्त्रीणां विवाहे तु बलैरुपेताः पत्युः प्रणाशं विहगा विदध्युः। त्यक्त्वा बुधं दैत्यगुरुं च मन्दं निशाकरादस्तगृहं प्रपन्नाः ॥" इति। दैत्यगुरुं शुक्रम्। अतएव दीपिकायां-"रविं मंदं कुजाक्रांतं मृगांकात्सप्तमं त्यजेत्। विवाहयात्राचूडासु गृहकर्मप्रवेशने ॥ " इति ॥ ८६ ॥

## विवाहलग्नापेक्षया शुभाशुभा ग्रहाः स्थानविशेषेषु-

**त्र्यायाष्टषट्सु रविकेतुतमोर्कपुत्रास्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽब्जः ॥ सप्तव्ययाष्टरहितौ ज्ञगुरू सितोष्टत्रिद्यूनषड्व्ययगृहान्परिहृत्य शस्तः ॥ ८७ ॥**

अथैवं निषिद्धस्थानान्यभिधायेदानीं रेखादातॄन् ग्रहान्वसंततिलकयाह-त्र्यायेति ॥ तृतीयैकादशाष्टमषष्ठस्थानेषु रविकेतुतमोर्कपुत्राः शस्ताः शुभफलदातारः ॥

## तृतीयाष्टमषष्ठस्थानेषु रविकेतुराहुशनयो योगविशेषः- विवाहलग्नात्-

यदाह शौनकः-"बंधुजनेभ्यः पूजां त्रिंशद्वर्षाणि सहजगे त्वर्के। प्राप्नोति धनं षष्ठे त्र्यब्दादूर्ध्वं सुतांश्चैव ॥ दंपत्योः सहमरणं निधनस्थेर्केऽष्टसप्तत्या । कारयति धनविवृद्धिं त्र्यब्दादूर्ध्वं तथायगः सविता ॥ " इति ॥ धनधान्यपुत्रयुक्तां पञ्चमसंवत्सरात्तृतीयस्थः। षष्ठः षड्भिर्मासैरसपत्नीं कन्यकां कुरुते ॥ निधनगतार्किः कुर्यादामरणादामयवियुक्ताम्। आयगतोर्किः कन्यां त्रिवर्गयोग्यां करोति षण्मासात् ॥" इति ॥ [ अर्कस्यापत्यमार्किः। "अत इञ्" । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावः । सत्यां वा वृद्धौ "नमुने" इति नेतियोगविभागादसिद्धत्वाभावात्संधिर्दीर्घः। 'आयगतार्किः' इति पाठः । आयगतश्चासौ आर्किश्चायगतार्किः इत्येकं पदं वा ] अत्र राहुकेत्वोश्च फलं शनिवदेवेति । 'स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे । ' इति वसिष्ठोक्तेः ॥

## विवाहलग्नात् त्र्यारिगो भौमो योगविशेषकारकः-

त्र्यायारिगः तृतीयैकादशषष्ठस्थानस्थितः क्षितिसुतो भौमः शस्तः । " सहजस्थो भूमिसुतः सौभाग्यकरस्तु यावदायुष्यम् । संवत्सरेण विपुलं धनागमं शत्रुसंस्थस्तु ॥ मणिकांचनरत्नाढ्यामेकादशगः कुजोऽब्दषट्केन ॥ " इति शौनकोक्तेः ॥

## विवाहलग्नाद्द्वित्र्यायस्थश्चंद्रो योगविशेषकारकः-

अब्जश्चन्द्रो द्विगुणायगो द्वितीयतृतीयैकादशस्थः शस्तः ॥ " अब्दाद्धनसंयुक्तां करोति चंद्रो धनेनार्याः । चन्द्रस्तृतीयराशौ सौभाग्यकरस्तु यावदायुष्यम् ॥ लग्नादेकादशगः कन्यामिंदुर्धनान्वितां कुरुते ॥ " इति शौनकोक्तेः ॥

## विवाहलग्नात्सप्तमाष्टमद्वादशातिरिक्तस्थानेषु ज्ञगुरू शुभफलदौ–

ज्ञगुरू बुधबृहस्पती सप्तमद्वादशाष्टमातिरिक्तस्थानस्थितौ शस्तौ ॥ उक्तस्थानानामशुभत्वादनुक्तस्थानानां च शुभदातृत्वात्। यदाह वसिष्ठः–"प्रीतिर्वृद्धिः सगुणनिरतिर्बंधुपूजा सुताप्तिः सद्बैपक्ष्यं तनयविरहं त्वन्यथा भर्तृनाशः। धर्मे बुद्धिर्भवति धरणीलब्धिरत्येव बुद्धिहानिः स्त्रीणां हिमकरसुते लग्नभावादिसंस्थे ॥" इति ॥ "लक्ष्मीप्राप्तिर्भवति सुयशः प्रीतिरन्योन्यवृद्धिरिष्टप्राप्तिर्बहुविधमयं चाश्रमाणां विरक्तिः। पापासक्तिः सुकृतनिरतिर्भूरिलाभः सुरेज्ये स्त्रीणां सौख्यं रिपुकृतभयं लग्नभावादिसंस्थे ॥" इति ॥ अयं शुभदैवम् 'अयः शुभावहो विधिः' इत्यमरः। क्लीवत्वं त्वार्षम् ॥ केचिद्बहुविधमयमित्यत्र बहुविधभयमिति पठंति तन्मकारे भशब्दभ्रांतेः। "उभयकुलानंदकरीं करोति नचिराद्गुरुः षष्ठे" इति षष्ठस्थानस्थितगुरोः शौनकेनापि सम्यक्फलाभिधानाच्च ॥

## विवाहलग्नादष्टत्रिसप्तषड्द्वादशातिरिक्तस्थानेषु शुक्रः शुभफलदः–

सित इति। अष्टमतृतीयसप्तमषड्द्वादशस्थानानि परिहृत्य त्यक्त्वान्येषु स्थानेषु सितः शुक्रः शस्तः। तदुक्तं वसिष्ठेन–"भोगप्राप्तिर्विविधविभवं स्वैरवृत्तिर्महत्त्वं द्युम्नाधिक्यं भवति निधनं सर्वनाशोऽवसुत्वम् ॥ तथ्यप्रीतिर्बहुविधगुणाः सर्वसंपत्समृद्धिरस्वं स्त्रीणामुशनसि तथा लग्नभावादिसंस्थे ॥" इति ॥ द्युम्नं द्रविणम् ॥ "हिरण्यं द्रविणं द्युम्नम्" इत्यभिधानात्।

## विवाहलग्नाद् ग्रहाणामुत्तमत्वं मध्यमत्वं च–

अतो बुधगुरुशुक्राणां शुभाशुभस्थानोक्तेः शुभाशुभफलत्वमेव न कदाचिन्मध्यमत्वम्। अन्येषां तु शुभाशुभस्थानातिरिक्तस्थानसद्भावान्मध्यमत्वमप्यस्ति। उत्कृष्टशुभाशुभफलानभिधानात्। किंतु किंचिन्मध्यमफलाभिधानम्। तदुक्तं वसिष्ठेन–(रविः)–"मृत्युर्नैःस्व्यं बहुविधधनं भ्रातृहानिः प्रजानां व्याधिः सौख्यं बहुविधमतो भर्तृहानिश्चिरायुः। श्रेयोहानिर्भवति हृदयव्याधिरर्थागमश्च भानौ स्त्रीणामतिशयरुजा लग्नभावादिसंस्थे ॥"(विधुः)–"नाशः संपद्बहुविधयशो बन्धुवृद्धिः प्रजाप्तिः शस्त्रान्मृत्युर्भवति नचिरादीर्घसापत्न्यबाधा। प्रव्रज्यात्वं दुहितृजननं वर्धनं भोगभाक्त्वं दास्यं स्त्रीणां तुहिनकिरणे लग्नभावादिसंस्थे ॥" इति ॥ अत्र चतुर्थचन्द्रस्य प्रजाप्तिः फलमभिहितम्। तथैव श्रीपतिनापि तद्वाक्ये–'सुखे तु कथितो बन्धुक्षयः कैश्चन' इत्येकीयमतमनुसृत्य ग्रंथकृता चतुर्थस्थानस्य मध्यमत्वमंगीकृतम्। "बंधुश्वशुरवियुक्ता चतुर्थः शशी त्वाष्ट्रात्" इति शौनकोक्तेश्च ॥ विरुद्धार्थयोः शौनकवसिष्ठवाक्ययोः का गतिरिति चेत् ॥ बालचन्द्रविषयमशुभफलम्–तद्भिन्नचन्द्रविषयं शुभफलम्। उक्तं च केशवार्केण–"बालोऽब्जः प्रियविरहं शनिः स्तनांभःशून्यत्वं सृजति सुखे सुवासिनीनाम्" इति ॥" मृत्युः शोको बहुविधधनं भ्रातृवैरं कुबुद्धिर्लक्ष्मीप्राप्तिर्भवति मरणं वोभयोर्वंशनाशः। स्त्रीणां द्वेषो व्यसननिरतिः पुत्रपौत्रादिसिद्धिर्भीतिर्भूमेर्बलिनि तनये लग्नभावादिसंस्थे ॥ स्वच्छंदत्वं कदशनरतिर्वल्लभत्वं विशीलं व्याधिः सुश्रीर्भूतिरथ सुखं गर्भपातप्रवृत्तिः। द्यूतासक्तिर्भवति रविजे वैभवं वक्त्ररोगं स्वर्भानौ वाप्यथ शिखिनि वा लग्नभावादिसंस्थे ॥" इति ॥ ८७ ॥

## कर्तर्यादिमहादोषापवादः-विवाहलग्नापेक्षया-

पापौ कर्तरिकारकौ रिपुगृहे नीचास्तगौ कर्तरी-
दोषो नैव सितेऽरिनीचगृहगे तत्षष्ठदोषोऽपि न ॥
भौमेऽस्ते रिपुनीचगे न हि भवेद्भौमोष्टमो दोषकृन्नीचे-
नीचनवांशके शशिनि रिःफाष्टारिदोषोपि न ॥ ८८ ॥

लग्नभंजककर्त्तर्यादिमहादोषाणामपवादं शार्दूलविक्रीडितेनाह-पापाविति । ( १ )-तत्र कर्त्तर्यपवाद उच्यते । कर्त्तरीयोगलक्षणं "लग्नात्पापौ" इत्यादिनोक्तम् । यौ ग्रहौ क्रूरौ कर्त्तरीकारकौ रिपुगृहे शत्रुगेहे स्थितौ नीचास्तगौ स्वनीचराशिस्थितौ अस्तंगतौ वा तदा कर्त्तरी नैव स्यात् । यदाहुः कश्यपनारदवसिष्ठाः-" पापयोः कर्त्तरीकर्त्रोः शत्रुनीचगृहस्थयोः।यदा-चास्तगयोर्वापि कर्त्तरी नैव दोषदा।।"इति ॥ इदं विशेषणं शत्रुगृहस्थत्वादिकं समुच्चितं व्यस्तं समस्तं वा ध्येयम् । ( २ ) -अपवादांतरमुक्तं दैवज्ञमनोहरे गर्गेण-"क्रूरकर्त्तरिसंयुक्तं लग्नं चन्द्रं च न त्यजेत् । केंद्रत्रिकोणसंस्थेषु गुरुभार्गववित्सु चेत् ॥ " ननु कर्त्तरिकारकावित्यत्र कथं ह्रस्वत्वम् । यावता कर्त्तरीशब्दः " उणादयो बहुलम्" इति बहुलग्रहणसिद्धारीचप्रत्ययान्तः 'कृती छेदने' इत्यस्माद्धातोर्निष्पन्नः ॥ तत्र यदीकारांतस्तदा ङ्यंतत्वाभावात् "ङ्यापोः संज्ञाछंदसोर्बहुलम्" इति ह्रस्वत्वं न प्राप्नोति । यदपि-"कृदिकारादक्तिनः " इति ङ्यंतत्वं तदा संज्ञाछंदस्त्वाभावाद्ध्रस्वो न स्यात् ॥ उच्यते ॥ बहुलवचनादसंज्ञायामप्येवंविधे प्रयोगे ह्रस्व इति दुर्घटवृत्तिकृत् । अतएव ' विधे हि बंधो हृदयं विद' इति कालिदासः । ' स्यादेतदेव प्रमदवनमंतःपुरोचितम्' इत्यमरसिंहोपि प्रयुक्तवान् । कचिदन्यत्रापि दृश्यते-" विधौ धनोपगे शुभग्रहेथवांत्यगे गुरौ न कर्त्तरी भवत्यहो जगाद बादरायणः" इति । " क्रूरद्वयस्यांतरगं विलग्नं मृतिप्रदं चंद्रमसं च रोगदम् । शुभैर्धनस्थैरथवांत्यगे गुरौ न कर्त्तरी स्यादिह भार्गवा विदुः ॥" इति ॥

## भृगुषट्कदोषो न-विवाहलग्नात्-

षष्ठशुक्रापवाद उच्यते । सिते शुक्रेऽरिनीचगृहगे शत्रुगृहे स्वनीचगृहे वा सति तत्षष्ठदोषो भृगुषट्कदोषोपि न स्यात् । यदाह कश्यपः-""नीचराशिगते शुक्रे शत्रुक्षेत्रगतेपि वा । भृगुषट्कोत्थितो दोषो नास्ति तत्र न संशयः ॥ " इति ॥

## अष्टमभौमदोषो न विवाहलग्नात्-

अष्टमभौमदोषापवाद उच्यते । भौमेस्ते· अस्तंगते रिपुनीचगे शत्रुगृहगे वा स्वनीचगृहगे सत्यष्टमो न दोषकृत्स्यात् । उक्तं च कश्यपेन-"अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेपि वा । कुजाष्टमोद्भवो दोषो न किंचिदपि विद्यते ॥" इति ॥

षडष्टद्वादशचन्द्रदोषो न-विवाहलग्नात्-

षडष्टद्वादशस्थानचंद्रापवाद उच्यते। शशिनि चंद्रे नीचनवांशके वा सति रिःफाष्टारिदोषो द्विर्द्वादशाष्टमशत्रुस्थानस्थितचंद्रदोषो न स्यात्। "नीचराशिगते चन्द्रे नीचांशकगतेपि वा। चंद्रे षष्ठारिरिःफस्थे दोषो नास्ति न संशयः॥" इति कश्यपोक्तेः॥ ८८॥

अनेकदोषापवादः-विवाहलग्नात्केन्द्रे शुभग्रहे स्थिते-

**अब्दायनर्तुतिथिमासभपक्षदग्धतिथ्यंधकाणबधिरांगमुखाश्च दोषाः॥ नश्यंति विद्गुरुसितेष्विह केंद्रकोणे तद्वच्च पापविधुयुक्तनवांशदोषः॥ ८९॥**

विवाहे अष्टदोषाद्यनेकदोषाणामपवादं वसंततिलकयाह-अब्देति॥ (१) अब्ददोषः (२) अयनदोषः (३) ऋतुदोषः (४) तिथिदोषो रिक्तादिः (५) मासदोषः (६) भं नक्षत्रदोषः क्रूरादिः (७) पक्षदोषस्त्रयोदशदिनात्मकादिः (८) दग्धतिथिः प्रसिद्धा चांपात्यगेत्यादिनोक्ता (९-१०-११)-अंधकाणबधिराख्यान्यंगानि लग्नानि तन्मुखास्तदादयोऽन्ये (१२)-अकालवृष्ट्याद्या दोषाः। विद्गुरुसितेषु केंद्रकोणे, केंद्रं सप्तमस्थानरहितं विवाक्षितं, जामित्रदोषस्य सत्त्वात्। अतएवोक्तमग्रे 'त्रिकोणे केंद्रे वा मदनरहिते' इति। कोणे नवपञ्चमे सत्सु नश्यंति। उक्तं च कश्यपेन-"अब्दायनर्तुमासोत्थाः पक्षातिथ्यृक्षसंभवाः। ते सर्वे नाशमायांति केंद्रसंस्थे शुभग्रहे॥ काणांधबधिरोद्भूता दग्धलग्नतिथेर्भवाः। ते दोषा नाशमायांति केंद्रसंस्थे शुभग्रहे॥" इति॥ "अकालजाश्च नीहारविद्युत्पांस्वभ्रसंभवाः। परिवेषप्रतिसूर्यशक्रचापध्वजादयः॥ दोषप्रदा मङ्गलेषु कालजा श्चेन्न दोषदाः। गुरुरेकोपि केंद्रस्थः शुक्रो वा यदि वा बुधः॥ हरेः स्मृतिर्यथा हंति तद्वद्दोषानकालजान्। लत्तोपग्रहचंडीशचंद्रजामित्रसंभवान्॥ तत्केंद्रगो गुरुर्हंति सुपर्णः पन्नगानिव॥" इति॥ अकालजत्वनिर्णयं यात्राप्रकरणे 'पौषादिचतुरो मासान्' इत्यादिना वक्ष्यति॥

पापविधुयुक्तनवांशदोषो न-

तद्वच्चेति॥ तथा यदि पापः क्रूरो विधुयुक्तराशेर्नवांशे स्याद्यथा चन्द्रो मेषे सूर्यनवांशः। तद्दोषाभिधानं यज्ञोपवीतप्रकरणे। तदा तत्कृतदोषो नश्यति। उक्तं च संहिताप्रदीपे-"स चंद्रराशेरशुभो नवांशः प्रोक्तः सपापोपि विलग्नसंस्थः। त्रिकोणकेंद्रेषु गुरुः सितो वा यदा तदासावशुभोपि शस्तः॥" इति॥ ९८॥

उक्तदोषाणामपवादाः-केन्द्रे कोणे वा जीवे बुधशुक्रयोर्वा सतोः-

**केंद्रे कोणे जीव आये रवौ वा लग्ने चन्द्रे वापि वर्गोत्तमे वा॥ सर्वे दोषा नाशमायांति चंद्रे लाभे तद्वद्दुर्मुहूर्तांशदोषाः॥९०॥**

अथोक्तानुक्तदोषाणां बहून्परिहाराञ्छालिन्याह केंद्र इति॥ (१) केंद्रे कोणे। केंद्रं प्रसिद्धम्। कोणं नवपञ्चकम्। तत्र च जीवो गुरुः स्यात्तदा सर्वे दोषा नाशमायांति। उपलक्षणत्वाद् बुधशुक्रावपि। यदाह नारदः-"उक्तानुक्ताश्च ये दोषास्तान्निहंति बली गुरुः।

केंद्रसंस्थः सितो वापि पन्नगान्गरुडो यथा ॥ " इति ॥ सित इति बुधस्याप्युपलक्षणम् । उक्तं च कश्यपेन-"काव्ये गुरौ वा सौम्ये वा यदा केंद्रत्रिकोणगे । नाशं यांत्यखिला दोषाः पापानीव हरिस्मृतेः ॥ " इति ॥ तत्रापि लग्नाख्यकेंद्रस्यातिबलत्वात्तत्र स्थितो जीवः सर्वारिष्टहरः । तदुक्तं वासिष्ठेन-"ये लग्नदोषाः कुनवांशदोषाः पापैः कृता दृष्टिनिपातदोषाः । लग्ने गुरुस्तान्विमलीकरोति फलं यथांभः कतकद्रुमस्य ॥ " इति ॥

## एकादशे रवौ नोक्तदोषाः-

( २ )-अथवा आये एकादशे रवौ सति दोषनाशः ॥ " यत्रैकादशगे सूर्ये दोषा नाशं ययुस्तदा । स्मरणादेव रुद्रस्य पापं जन्मशतोद्भवम् ॥ " इति ॥ ( ३ ) अथवा चंद्रे वर्गोत्तमे स्वनवांशयुक्ते । यथा मिथुने मिथुनांशश्चेत्तदा दोषनाशः ।

## लग्ने वर्गोत्तमे-चन्द्रे वर्गोत्तमस्थिते उपचयस्थिते वा नोक्तदोषाः-

अथवा चंद्रे वर्गोत्तमे स्वनवांशस्थिते वा सति दोषनाशः । द्वितीयवाशब्दस्यानुक्तसमुच्चयार्थत्वाच्चंद्रो लग्नादुपचयस्थाने चेत्स्यात्तदापि सर्वदोषनाशः । एवं क्रमेण परिहारत्रयमुक्तम् । यदाह कश्यपः-"वर्गोत्तमगते लग्ने वर्गदोषा लयं ययुः । चंद्रे वोपचये वापि ग्रीष्मे कुसरितो यथा ॥ " इति ॥

## चन्द्रे लाभे स्थिते नोक्तदोषाः-एवमन्योपि परिहारः-

( ४ )-चंद्रे इति ॥ तद्वत्तेनैव प्रकारेण । दुर्मुहूर्ता रवावर्यमेत्यादयः । अंशदोषाः पापग्रहनवांशाख्यास्ते सर्वे चंद्रे लाभे एकादशस्थानस्थिते सति नाशमायांति ॥ "मुहूर्तलग्नषड्वर्गकुनवांशग्रहोद्भवाः । ये दोषास्तान्निहंत्येव यत्रैकादशगः शशी ॥ " इति ॥ अन्यदप्याह कश्यपः-"लग्नाद्दुःस्थानगव्योमचरोत्थं दोषसंचयम् ॥ शुभः केंद्रगतो हंति दावाग्निर्विपिनं यथा ॥ " इति ॥ ९० ॥

## दोषसामान्यस्यैकोऽपवादः सप्तमातिरिक्ते केन्द्रे चन्द्रे सति-

**त्रिकोणे केंद्रे वा मदनरहिते दोषशतकं हरेत्सौम्यः शुक्रो द्विगुणमपि लक्षं सुरगुरुः ॥ भवेदाये केंद्रेऽगप उत लवेशो यदि तदा समूहं दोषाणां दहन इव तूलं शमयति ॥ ९१ ॥**

अथैवं विशिष्य दोषाभिधानपूर्वकं विशेषपरिहारानभिधायेदानीं सामान्यतो दोषसमुदायस्यैकपरिहारं शिखरिण्याह-त्रिकोण इति ॥ ( १-२-३ )-त्रिकोणे ९ । ५ । केंद्रे सप्तमरहिते १ । ४ । १० यदि सौम्यो बुधस्तिष्ठेत्तदा दोषशतकं हरेत् ॥

## दोषसामान्यस्यैकोऽपवादः-गुरौ शुक्रे वा केन्द्रे सति-

उक्तस्थानस्थितः शुक्रोपि द्विगुणं दोषशतकं दोषद्विशतं हरेत् । तथोक्तस्थानस्थितो गुरुरपि लक्षं दोषान् हरेत् । यदाह नारदः-"दोषाणां हि शतं हन्ति बलवान्केंद्रगो बुधः । अपहाय द्युनं शुक्रो द्विगुणं लक्षमङ्गिराः ॥" अत्र शतशब्देनानेकसंख्या विवक्षिता । अत एवाह कश्यपः-"बलवान्केंद्रगः सौम्यो हंति दोषशतत्रयम् । द्यूनं विहाय दैत्येज्यः सहस्रं लक्षमंगिराः ॥ " इति ॥

लग्नपो लग्नांशपो वा आये सप्तमवर्जिते केन्द्रे सति नोक्तदोषः-

भवेदिति । अंगपो लग्नस्वामी । उतशब्दो वार्थे । लग्नेशो लग्नगतांशनाथो वा आये ११ । केंद्रे १ । ४ । १० यदा भवेत्तदा स दोषणां समूहं शमयति । तत्र दृष्टांतः-दहनोग्निस्तूलं कार्पासमिव शमयति । तदुक्तं नारदेन-" लग्नेड् लग्नांशनाथो वा चापगः केंद्रगोपि वा । राशिं निहंति दोषाणामिन्धनानीव पावकः ॥ " इति ॥ जातकेपि-" लग्नाधिपो यदा केंद्रे लग्नादेकादशालये । सर्वग्रहकृतं रिष्टमेकोपि विलयं नयेत् ॥" इति ॥ ९१ ॥

लग्नविंशोपकः-

द्वौ द्वौ ज्ञभृग्वोः पंचेंदौ रवौ सार्द्धत्रयो गुरौ ॥
रामा मंदागुकेत्वारे सार्द्धैकैकं वि ( विं ) शोपकाः ॥ ९२ ॥

लग्नविंशोपकाननुष्टुभाह-द्वाविति ॥ ज्ञभृग्वो रेखाप्रदयोः सतोर्द्वौ विंशोपकौ । यथा बुधस्य २ । शुक्रस्य २ । एवंविधे चंद्रे पंच ५ । तादृशे सूर्ये सार्द्धत्रयः ३ । ३० ॥ गुरौ रामास्त्रयः ३ । एकमेकमेकैकं सार्द्धं च एकैकं सार्द्धैकैकम् । एकशब्दस्य " नित्यवीप्सयोः " इति द्विर्वचने " एकं बहुव्रीहिवत् " इति बहुव्रीहिवद्भावात् " सुपो धातु" इति विभक्तेर्लुकि सार्द्धशब्देन कर्मधारयः ॥ तथा सति प्रत्येकं सार्द्धैकैकमित्यर्थः । यथा-मंदे शनौ सार्द्धैकं १ । ३० ॥ अगौ राहौ १ । ३० ॥ केतौ १ । ३० ॥ आरे भौमे १ । ३० ॥ एते विंशोपका रेखादातृग्रहाणां ज्ञेयाः, न मध्यमानां निषिद्धानां च । यदाह वराहः-"रवौ सार्द्धास्त्रयो भागाश्चंद्रे पंच गुरौ त्रयः । द्वौ शुक्रे द्वौ बुधे चैव प्रोक्ता ह्येते विशोपकाः ॥ मंदे भौमे तथा राहौ सार्द्धं प्रत्येकमुच्यते । बलाबलवशादेवं विज्ञातव्या विशोपकाः ॥ " इति ॥ अत्र पद्ये राहोरुपलक्षणत्वात्केतोरपि सार्द्धैकमेव बलं ग्राह्यम् ॥ अतएव मूले केत्वभिधानम् ॥ नन्विदमयुक्तम् । यतो नवग्रहप्राबल्ये सार्द्धैकविंशति २१ । ३० विंशोपकात्मको योगो भवेत् । स चासंभवादनुपपन्नः । अत्युत्कृष्टे हि लग्ने विंशतिविंशोपकात्मकमेव बलं स्यान्न ततोधिकमिति ॥ उच्यते । न विवाहादिलग्ने द्वयोरपि राहुकेत्वोर्युगपत्समीचीनत्वस्य गगनकुसुमायमानत्वात् ॥ यदैकस्य शुभत्वमपरस्याशुभत्वमिति तदैव विंशतिर्विंशोपका लग्ने संभवंति । द्वयोरप्यनिष्टत्वे सार्द्धाष्टादश । एवं यस्य यस्य ग्रहस्य रेखादातृत्वहानिस्तस्य तस्य तद्विंशोपकहानिरित्यर्थः । तत्र पंचभ्यो विंशोपकेभ्यो हीनं लग्नं त्याज्यमेव । पञ्चभ्योधिकं दशभ्यो हीनं निकृष्टफलं लग्नान्तराभावे हितम् । दशभ्योधिकं पंचदशभ्यो हीनं मध्यमम् । ततोधिकं तूत्तममेवेति निष्कृष्टोर्थः ॥ ९२ ॥

श्वश्रूश्वशुरपत्यादिसुखज्ञानं-विवाहे अन्योपि विषयः-

श्वश्रूः सितोर्कःश्वशुरस्तनुस्तनुर्जामित्रपःस्याद्दयितो मनःशशी॥
एतद्बलं संप्रतिभाव्य तांत्रिकस्तेषांसुखं संप्रवदेद्विवाहतः ॥९३॥

ग्रहवशेन श्वशुरादिविभागज्ञानं सप्रयोजनमुपजात्याह-श्वश्रूरिति ॥ शुक्रः श्वश्रूः ।

सूर्यः श्वशुरः । अत्र कन्यानिमित्तशुभाशुभस्य विचारास्पदत्वात्तस्याः कन्यायाः श्वश्रूर्वर-माता, श्वशुरो वरपिता, तनुर्लग्नं, तनुः स्वशरीरं, जामित्रपः सप्तमाधीशः, दयितो भर्त्ता ज्ञेयः । शशी मनो ज्ञेयम् ॥ एतद्बलम् एतेषां शुक्रादीनां बलं विचार्य तांत्रिकः-तंत्रं सिद्धांतः 'तंत्रं प्रधाने सिद्धांते सूत्रवाये परिच्छदे' इत्यमरः । तं वेत्ति तांत्रिकः सिद्धांतवेत्ता ज्योतिर्वित् विवाहतो विवाहानंतरं तेषां श्वश्वादीनां सुखं स्यादिति प्रवदेत् । यदाह शौनकः- "श्वशुरः सहस्रकिरणः श्वश्रूर्भृगुनन्दनो विनिर्दिष्टः । होरागमार्थकुशलैर्जामित्रपतिः पतिः स्त्रीणाम् ॥ स्वशरीरं लग्नवशात्सुखदुःखं मानसं शशांकवशाद् ॥" इति॥शार्ङ्गीयेपि-"श्वशुरोर्कः सितः श्वश्रूः स्त्रीणामस्तपतिः पतिः । एभिरुच्चोपगैरेषां शुभं नीचारिगैर्न सत् ॥" इति ॥ विशेषांतरमप्युक्तं शार्ङ्गीये-" सूर्यात्पातिः स्त्री च विधोस्तथाराद्वित्तं सुतो ज्ञाच्छ्वशुरं गुरोश्च । धर्मः सितादर्कसुताच्च वेश्म ब्रूयात्समुद्वाहविधौ स्वयुक्त्या ॥ एतैर्नीचस्थितैः शत्रुगैर्विवाहादिकं न सत् । स्वगृहोच्चत्रिकोणस्थैः शुभमेषां यथोदितम् ॥ " इति ॥ ९३ ॥

## संकीर्णजातीयानां विवाहे कालविशेषः-

**कृष्णे पक्षे सौरिकुजार्केपि च वारे वर्ज्ये नक्षत्रे यदि**
**वा स्यात्करपीडा ॥ संकीर्णानां तर्हि सुतायुर्धनलाभ-**
**प्रीतिप्राप्त्यै सा भवतीह स्थितिरेषा ॥ ९४ ॥**

संकीर्णजातीनां विवाहे नियतं कालविशेषं मत्तमयूरच्छंदसाह-कृष्ण इति॥ कृष्णपक्षे शनिभौमार्कवारे विवाहोक्तनक्षत्रादिभिन्ननक्षत्रेषु चकारात् 'व्याघातशूल' इत्यादिदुष्टयोगेष्वपि यदि संकीर्णानामनुलोमप्रतिलोमजानां करपीडा विवाहः स्यात् । तर्हि सा करपीडा सुतायुर्धनलाभप्रीतिप्राप्त्यै भवति । एषा स्थितिराचारोस्ति । अनुलोमजा मूर्द्धावसिक्तादयः ॥ प्रतिलोमजाश्चाण्डालादयः ॥ तल्लक्षणानि धर्मशास्त्रे इति तत एवावधार्याणि ॥

## एतेषां विवाहे गौणकालाः-

वाग्रहणमेतदभावे विवाहाद्यावश्यकत्वे च प्रागुक्तदिनेपि कार्यमिति सूचनार्थम् । तदुक्तं शार्ङ्गीये-"कृष्णे पक्षे भानुभौमार्कजानां वारे योगे चापि धिष्ण्ये निषिद्धे । संकीर्णानां दारकर्म प्रशस्तं प्रीत्यर्थायुःप्राप्तये शौनकाद्याः ॥ " इति ॥ केशवार्कोपि-"प्रायेण संकरभुवामशुभर्क्षपक्षक्रूरक्षणेषु शुभकृत्करपीडनं स्यात् ॥ " इति ॥ ९४ ॥

## गान्धर्वादिविवाहे ब्रह्मविष्णुरुद्रपद्मचक्राभिधत्रिपदीचक्रे नक्षत्र-शोधनम्-

**गांधर्वादिविवाहेर्काद्रुद्र ४ नेत्र २ गुणं ३ दवः १ ॥**
**कु १युगां४गा६ग्नि३भू१रामा३स्त्रिपद्यां न शुभाः शुभाः॥९५॥**

गांधर्वादिदुष्टविवाहे त्रिपदीचक्रे नक्षत्रशोधनमनुष्टुभाह-गांधर्वादीति ॥ गांधर्वादिविवाहाः

सलक्षणाः प्रागस्माभिरभिहिताः। तेषु अर्कात् सूर्याक्रांतनक्षत्रमारभ्य चत्वार्यशुभानि। ततो द्वे शुभे। ततस्त्रीण्यशुभानि। ततः एकं शुभम्। ततः एकमशुभम्। ततश्चत्वारि शुभानि। ततः षडशुभानि। ततस्त्रीणि शुभानि। तत एकमशुभम्॥ ततस्त्रीणि शुभानि॥ एतान्यष्टाविंशतिभानि त्रिपद्यामशुभान्येव ज्ञेयानि। त्रयाणां पदानां समाहारस्त्रिपदी तत्र। ब्रह्मविष्णुरुद्रपद्माभिधचक्रत्रये इत्यर्थः। सम्मतिर्ग्रंथानुपलंभः॥ ९५॥

## विवाहोपनयनादौ प्राग्दलनकण्डनवारकगृहांगणवेदिकामण्डपकार्येषु दिनशुद्धिः-

**विधोर्बलमवेक्ष्य वा दलनकंडनं वारकं गृहांगणविभूषणान्यथ च वेदिकामंडपान्॥ विवाहविहितोडुभिर्विरचयेत्तथोद्वाहतो न पूर्वमिदमाचरेत्त्रिनवषण्मिते वासरे॥ ९६॥**

अथैवं महता ग्रंथसंदर्भेण विवाहे सकलमहादोषरहितां दिनशुद्धिमभिधायेदानीं ततः प्राक्कर्तव्यानामावश्यककर्मणां दिनशुद्धिं पृथ्वीछंदसाह-विधोरिति। अत्र विधोः चंद्रस्य बलमवेक्ष्य गृहीत्वा, वाग्रहणात्तस्यवकाशे चन्द्रबलं ग्राह्यम्। दलनं गोधूमादेः पिष्टीकरणम्। कंडनं तंडुलादेः मुसलाद्याघातादिना शोधनम्। द्वंद्वैकवद्भावः। वारको मंगलकलशः। गृहांगणविभूषणानि गृहभूषणानि चूर्णगैरिकाचित्रादिलेखादीनि। अंगणभूषणं संमार्जनगोमयाद्यालेपः। अथानंतरं वेदिकाचत्वरं वधूवरयोरुपवेशनार्थं स्थलविशेषः। मंडपो गृहाच्छादनं कटादिना वितानादिना वा। बहुवचनात्कटाद्यारोहणहरिद्राचन्दनकांजिकाधारणादिसकलशुभप्रारंभान्। एतानुद्वाहतः पूर्वं विवाहोक्तैरुडुभिर्नक्षत्रैः पंचांगशुद्धिसहिते दिने रचयेत्। उपलक्षणत्वाद्यज्ञोपवीतादावपि। ततः पूर्वं विवाहविहितनक्षत्रैरेतानभिहितशुभकर्मप्रारंभान् विरचयेत्।

## विवाहात्प्राक्त्रिनवषण्मिते दिने उक्तकार्याणि न कुर्यात्-

तथा इदमुक्तकार्यजातं त्रिनवषण्मिते तृतीयनवमषष्ठे वासरे दिने पूर्वं नाचरेत्। तदुक्तं शार्ङ्गीये-" दलनकंडनमंडपवेदिकागृहसुमार्जनवारकमंडपाः। करतलग्रहमध्यगतागतं तदखिलं विदधीत विवाहभे॥ विवाहकृत्यं निखिलं विवाहभे विलोकयेन्नात्र बलं हिमद्युतेः। नवत्रिषष्ठेहि विवाहपूर्वतो नवर्णको मंडपतैलमंगलम्॥ " इति॥

## तत्र निषिद्धनक्षत्राणि-

दैवज्ञमनोहरे निषिद्धभान्युक्तानि-" चित्रा विशाखा शततारकाश्विनी ज्येष्ठाभरण्यौ शिवभाचतुष्टयम्। हित्वा प्रशस्तं फलतैलवेदिकाप्रदानकं कण्डनमंडपादिकम्॥ " इति॥

## काञ्जिकाधारणमपि विवाहविहितनक्षत्र एव कार्यम्-

कांजिकाधारणमुहूर्तोऽपि तत्रैव-" मूलेंदुरुद्रश्रवणार्कपौष्णविश्वेशचित्रानलरेवतीषु। संस्थापनं कांजिककुंडिकाया वारे रवेर्भूमिसुतस्य शस्तम्॥ " इति॥

## वेदिकांकुरार्पणमण्डपमुहूर्ताः-

वेदिकायां विशेषमाह केशवार्कि:-" वादकां विरचयेद्यथा तथा स्यादियं प्रविशतः प्रदक्षिणा ॥ स्युर्जनाश्रययवोप्तिवर्णकाः षण्णवत्रिद्विवसेषु नाग्रतः ॥ " इति ॥ यवोप्तिरंकुरार्पणाख्यं कर्म । जनाश्रयो मंडपः ॥ ' मंडपोऽस्त्री जनाश्रयः ' इत्यमरोक्तेः ॥ ९६ ॥

## वेदिकालक्षणं मण्डपोद्वासनादिदिननियमश्च-

**हस्तोच्छ्राया वेदहस्तैः समंतात्तुल्या वेदिः सद्मनो वामभागे ॥**
**युग्मे घस्रे षष्ठहीने च पंचसप्ताहे स्यान्मंडपोद्वासनं सत्॥९७॥**

अवसरप्राप्तवेदिकालक्षणं मंडपोद्वासनादिदिननियमं च शालिन्याह-हस्तोच्छ्रायेति । सद्मनो गृहस्य वामभागे हस्तोच्छ्राया एकहस्तमितोच्चा समंतात्सर्वतः चतुर्भिर्हस्तैस्तुल्या समाना तादृशी वेदिः विवाहादिमंगलकृत्ये स्यात् । शोभाकारिस्तंभसोपानादियुक्ता चेत्यनुक्तमपि ध्येयम् । तदुक्तं नारदेन-" हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समंततः । स्तंभैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः ॥ समंडपां चतुर्दिक्षु सोपानैरुपशोभिताम् । प्रागुदक्प्रवणारंभां स्तंभैर्हंसशुकादिभिः ॥ विचित्रितां चित्रकुम्भैर्विचित्रैस्तोरणांकुरैः ॥ एवंविधां समारोहेन्मिथुनं साग्नि वेदिकाम् ॥ " इति ॥ साग्नीति भिन्नं पदं मिथुनस्य विशेषणम् । वसिष्ठः-"षोडशारत्निकां कुर्याच्चतुर्द्वारोपशोभिताम् । मंडपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ॥ अष्टहस्तं च रचयेन्मंडपं वा द्विषट्करम् ॥ " इति । द्विगुणिताः षट्करा यस्य तं द्वादशहस्तम् ॥

## उत्तममध्यमाधममण्डपाः गृहमानत एव भवन्ति-

उत्तमः षोडशहस्तो मध्यमो द्वादशहस्तोऽधमोऽष्टहस्तः ॥ अयं वैकल्पिको मंडपो गृहमानत एव कार्यो न तु स्वेच्छया । तदुक्तं सप्तर्षिमते विवाहपटले-"मंगलेषु च सर्वेषु मंडपो गृहमानतः । कार्यः षोडशहस्तो वा द्विषड्ढस्तो दशावधि ॥ स्तंभैश्चतुर्भिरेवात्र वेदिर्मध्ये प्रतिष्ठिता । शोभिता चित्रिता कुंभैरासमंताच्चतुर्दिशम् ॥ द्वारविद्धा बलीविद्धा कूपवृक्षव्यधा तथा। न कार्या वेदिका तज्ज्ञैः शुभा मंगलकर्मसु ॥ " बली काष्ठपाषाणादिनिर्मितः स्तंभः ॥

## वेदिनिर्माणाय तन्मानदानेऽधिकारिणः-

व्रतबंधे संस्कार्यत्वात् बटुहस्तेन वेदिनिर्मितिः विवाहे तु कन्यागृहे एव वरपूजनस्योक्तत्वाद्गृहस्थाश्रमस्य तदायत्तत्वाच्च कन्याहस्तेनैव वेदिनिर्माणम् ॥

## मण्डपोद्वासने देवकोत्थापने च दिनशुद्धिः-

युग्मे इति ॥ विवाहोत्तरं युग्मे समे द्वितीयचतुर्थादिके घस्रे दिने षष्ठदिवसहीने तथा विषमे तु पंचमे सप्तमे चाहनि दिवसे मंडपोद्वासनं देवकोत्थापनं सच्छुभफलदात् स्यात् । यदाह नारदः-"समे तु दिवसे कुर्याद्देवकोत्थापनं बुधः । षष्ठं च विषमं नेष्टं मुक्त्वा पंचमसप्तमौ ॥" इति ॥ समेषु षष्ठं विषमेषु च पंचमसप्तमव्यतिरिक्तं दिनं नेष्टमित्यर्थः ॥ ९७ ॥

### मण्डपादौ स्तम्भोच्छ्रायमुहूर्त्तः–

**सूर्येङ्गनासिंहघटेषु शैवे स्तंभोलिकोदंडमृगेषु वायौ ॥ मीनाजकुम्भे निर्ऋतौ विवाहे स्थाप्योग्निकोणे वृषयुग्मकर्के ॥ ९८ ॥**

शिष्टसंमतं मण्डपादौ स्तम्भनिवेशनमिन्द्रवज्रयाह–सूर्येति ॥ कन्यातुलासिंहस्थिते सूर्ये शैवे ईशानकोणे वृश्चिकधनुर्मकरस्थिते सूर्ये वायौ वायुकोणे मीनमेषकुम्भस्थिते सूर्ये निर्ऋतिकोणे वृषमिथुनकर्कस्थिते सूर्येऽग्निकोणे स्तम्भः स्थाप्य इत्यर्थः ॥ यदाह शिल्पशास्त्रे विश्वकर्मा- "कन्यासिंहे तुलायां भुजगपतिगृहं शम्भुकोणेग्निखातं वायव्ये स्यात्तदास्यं मकरधनुरलावीशखातं वदंति । कुम्भे मीने च मेषे निर्ऋतिदिशि मुखं वायुकोणे हि खातं वह्नेः कोणे मुखं वै वृषमिथुनगते कर्कटे दक्षखातम् ॥ " इति ॥ एतद्यद्यपि गृहविषयमुक्तम् । तथापि वेदिनिर्माणाश्रयणे ॥

### तत्र विशेषः–

स्तम्भनिवेशनं वृषादित्रिराशिगतसूर्यवशेनाग्निकोणे सर्पास्यं, शिवकोणे खातम् एवमन्यत्र राशिगते सूर्येऽन्यकोणेषु स्तम्भनिवेशनमूह्यम् । यदाह विश्वकर्मा–"वेद्यां वृषाद्गृहे सिंहात्त्रिकं मीनात्सुरालये । ईशानतो व्यस्तगत्या पृष्ठं तस्य शुभावहम् ॥" इति ॥ तस्य भुजगपतेः ॥९८॥

### गोधूलिलग्नप्रशंसा–सर्वकार्येषु–

**नास्यामृक्षं न तिथिकरणं नैव लग्नस्य चिंता**
**नो वा वारो न च लवविधिर्नो मुहूर्तस्य चर्चा ॥**
**नो वा योगो न मृतिभवनं नैव जामित्रदोषो**
**गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता ॥ ९९ ॥**

एवं लग्ननिर्णयमभिधायेदानीं घटिकालग्नसाधनं बहुगणितसाध्यं गोधूलिकथनं च गणितप्रयासरहितं वक्तुमवशिष्यते । तत्र सूचीकटाहन्यायेन गोधूलिप्रशंसां मन्दाक्रांतयाह–नेति ॥ स्पष्टार्थमिदं पद्यम् । यदाह भागुरिः–" गोपैर्यष्ट्याहतानां खुरपुटदलिता याति धूली दिनांते सोद्वाहे सुन्दरीणां विविधधनसुतारोग्यसौभाग्यदात्री । तस्मिन् काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगाः ख्याताः पुंसां सुखार्थं शमयति दुरितान्युच्छ्रितं गोरजस्तु ॥"

### सत्यां घटिकालग्नशुद्धौ गोधूलिलग्नं न ग्राह्यम्–

ननु सकलदोषनिराकरणेनातिप्रशंसनाद्गोधूल्याः घटिकालग्नानां महादोषनिराकरणपूर्वकमभिहितानां वैयर्थ्यप्रसंगः ॥ न च गोधूल्यभावे घटीलग्नमवकाशवदिति वाच्यम् ॥ गोधूल्यभावे तस्य दोषत्वे सति स्यात्–"न ऋक्षं न च तिथिकरणम्" इत्यादिना स्थूलसूक्ष्मसकलदोषापवादार्थत्वात्तस्या दोषलेशो नास्ति ॥ उच्यते ॥ यदयं न ऋक्षमित्यादिः स्तुत्यर्थवादः तेन गोधूल्याः प्रशंसायां तात्पर्यं न तु विधिः । अन्यथा निषिद्धेषु अमावस्याभद्राभरण्यादिष्वपि गोधूलिलग्नं भवितुं युक्तं स्यात् । सामान्यवैयर्थ्यापत्तेरिष्टापत्तिरपि वक्तुमशक्या ।

तस्मादभिहिततिथ्यादिष्वेव यावच्छक्याखिलदोषपरिहारपूर्वकं घटीलग्नं कार्यम् । तदभावे गोधूलिलग्नं कार्यम् । यदाह लल्लः-"लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकं साधु तदा वदंति । लग्ने विशुद्धे सति वीर्ययुक्ते गोधूलिकं नैव फलं विधत्ते ॥ शुभाशुभयुतं सर्वं राशदोषं त्वनिंदितम् । विवाहलग्नवच्छ्रेष्ठं गोधूलिं प्राह भागुरिः ॥" इति ॥ किंच-"कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमः शशी । पञ्च गोधूलिके त्याज्यास्त्वन्ये दोषाः शुभावहाः" ॥ इति दैवज्ञमनोहरीयवाक्यस्यापि वैयर्थ्यापत्तः ॥

## गोधूल्यधिकारिणः-

गोधूल्यधिकारिण आह नारदः-"प्राच्यानां च कलिंगानां मुख्यं गोधूलिकं स्मृतम् । गांधर्वादिविवाहेषु वैश्योद्वाहे च योजयेत् ॥ चतुर्थमभिजिल्लग्नमुदयर्क्षात्तु सप्तमम् । गोधूलिकं हि भवति संपत्पुत्रादिसौख्यदम् ॥" इति ॥ दैवज्ञमनोहरे-"घटीलग्नं यदा नास्ति तदा गोधूलिकं शुभम् । शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन ॥ महादोषान्परित्यज्य प्रोक्तधिष्ण्यादिकेषु च । कारयेद्गोरजो यावत्तावल्लग्नं शुभावहम् ॥" इति ॥ "लग्नशुद्धिर्यदा नास्ति कन्या यौवनशालिनी । तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभम् ॥" इति ॥ अतएव भूपालवल्लभे-"विप्रेषु घटिकालाभे दातव्यं गोरजो बुधैः । संकीर्णे गोरजः शस्तं परेषु द्वितयं शुभम् ॥ इति ॥

## गोधूलिलग्ननिर्णयः-

तत्र गोधूलिसूक्ष्मकालसमयः केशवार्केणोक्तः-" अत्रोभयत्र घटिकादलमिष्टमाहुर्ग्राह्यं तदंबरमणेरपि चार्द्धबिंबात् ।" इति ॥ केचित्तु-" यावद्दिनांते दिशि पश्चिमायां पश्येत्तृतीयं रविबिंबभागम् । तस्मात्परं नाडिकयुग्ममेके गोधूलिकालं मुनयो वदंति ॥" इति ॥ तदेतयोः पक्षयोर्यथादेशाचारं व्यवस्था ॥ ९९ ॥

## गोधूलिलग्नभेदाः-

**पिंडीभूते दिनकृति हेमंततौं स्यादर्द्धास्ते तपसमये गोधूलिः ॥ संपूर्णास्ते जलधरमालाकाले त्रेधा योज्या सकलशुभे कार्यादौ १००**

शीतकालादिभेदेन गोधूलिभेदं जलधरमालाछन्दसाह-पिंडीभूते इति ॥ ( १ )-हेमंताख्ये ऋतौ हेमंतशब्देन शीतकाल उपलक्ष्यते । मार्गशीर्षादिमासचतुष्टये इत्यर्थः । तत्र दिनकृति सूर्ये पिंडीभूते ओदनगोलकसदृशसंध्यायां नीहाराद्यावृतत्वेन निष्प्रभे इत्यर्थः । तस्मिन्समये गोधूलिर्ज्ञेया ।( २ )-तथा तपसमये उष्णकाले चैत्रादिमासचतुष्टये सूर्येऽर्द्धास्ते अर्द्धबिंबस्य दृश्यत्वे च सति गोधूलिः ॥ ( ३ )-जलधरा मेघास्तेषां माला समूहस्तस्योत्पादके काले वर्षाकाले श्रावणादिमासचतुष्टये सूर्ये संपूर्णास्तमदर्शनमस्य तादृशे सति गोधूलिः । जलधरमालाशब्देन छंदोपि सूचितम् । न केवलमियं विवाहे एव किन्तु सकलशुभे समस्तशुभकार्यादिष्वपि ज्ञेया । यदाह वराहः-"गोधूलिं त्रिविधां वदंति मुनयो नारीविवाहादिके हेमंते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे । ग्रीष्मेऽर्द्धास्तमिते वसंतसमये भानौ गते दृश्यतां सूर्ये चास्तमुपागते भगवति प्रावृट्शरत्कालयोः ॥" इति ॥ १०० ॥

गोधूलिलग्नेऽवश्यवर्ज्यदोषाः-

**अस्तं याते गुरुदिवसे सौरे सार्के लग्नान्मृत्यौ रिपुभवने लग्ने चेंदौ ॥ कन्यानाशस्तनुमदमृत्युस्थे भौमे वोढुर्लाभे धनसहजे चंद्रे सौख्यम् ॥ १०१ ॥**

गोधूलिसमयेऽवश्यवर्ज्यदोषान् वैश्वदेवीछन्दसाह-अस्तं याते इति । (१)-गोधूलिरित्यनुवर्तते । गुरुदिवसे बृहस्पतिवारे सूर्येऽस्तं याते सूर्यास्तादनंतरं गोधूलिः शुभा स्यात् न तु सूर्यास्तात्पूर्वमर्द्धघटिकं गोधूलिलग्नं कार्यम् । अर्द्धयामसद्भावात् ॥ (२)-तथा सौरे सार्के सूर्यदर्शनसहिते गोधूलिः शुभा । न तु सूर्यास्तादनंतरम् । कुलिकसद्भावात् ॥ (३)-उपलक्षणत्वात् क्रांतिसाम्यमपि त्याज्यम् ॥ (४-५) तथा लग्नात्सायंकालीनलग्नान्मृत्यावष्टमे रिपुभवने षष्ठे वा लग्न एव वा चंद्रे सति कन्यानाशः स्यात् । तदुक्तं दैवज्ञमनोहरे-" कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमः शशी । पंच गोधूलिके त्याज्या अन्ये दोषाः शुभावहाः ॥" अत्र कुलिकशब्देन तत्कालसंभाव्यार्द्धयामाख्यो वारदोषो गृह्यते अन्येषां त्वसंभव एव ॥ केचित्त्वाद्यपादे-" सार्के शनौ रविविचित्रशिखंडिसूनौ तत्केवलं कुलिकयामदलोपलंभात् ॥" इति केशवार्कोक्तवाक्यसंमतिः कस्मान्न भवतीत्यूचुः ॥ तच्चिंत्यम् ॥ पूर्वापरग्रंथालोचनया तस्य पूर्वपक्षग्रन्थत्वात् अन्यथा पंचम्यंतहेतूपादानवाक्यमनर्थकं स्यात् । एतच्चाधुनैव निर्णेष्यते । (६-७) लग्ने इति ॥ लग्नस्थे मदनस्थे मृत्युस्थे वा भौमे सति वोढुर्वरस्य नाशो भवति । तदुक्तं ज्योतिःसंहितासारे-" षष्ठेऽष्टमे मूर्तिगते शशांके गोधूलिके मृत्युमुपैति कन्या । कुजेऽष्टमे मूर्तिगतेथवास्ते वरस्य नाशं प्रवदंति गर्गाः ॥ " इति ॥ (८) अन्योपि विशेषस्तत्रैव-"षष्ठाष्टमे चन्द्रजचन्द्रजीवे क्षोणीसुते वा भृगुनन्दने वा । मूर्तौ च चंद्रे नियमेन मृत्युर्गोधूलिकं स्यादिह वर्जनीयम् ॥ "इति ॥ (९)-"धिष्ण्यं क्रूरयुतं त्याज्यं मूर्तौ षष्ठाष्टमः शशी। गोरजस्तत्प्रशंसंति संतः शनिदिनं विना ॥ " इति ॥ नन्विदं न वक्तव्यम् ॥ सप्तमसूर्यस्य " अवीरामस्तेर्के ' इति फलमभिहितम् ।'अवीरानिष्पतिसुता ' इति कोशः । एवं सति दशदोषदूषितस्य गोधूलिलग्नस्य चेदिहादरस्तदा चंद्रशुद्धेरप्यादरः किमर्थम् ॥ किं च लग्नस्था अपि सूर्यभौमशनिराहुकेतवः पूज्याः स्युः । उक्तं च केशवार्केण-"गोधूलिकेपि विधुरष्टमषष्ठमूर्तौ यन्मोचयंति तदयं स्वरुचिं प्रपन्नः । पंचांगशुद्धिमयमेव विवाहधिष्ण्यैर्यस्मादिदं सततमस्तगते पतंगे ॥ नाशो न लग्नमिह दृष्टयुतं स्वभर्त्रा नार्कारसौरितमसामपि संगभंगः। किं चन्द्रचारभयमेकमिहास्तु किंच नात्र प्रमाणवचनं किमपि श्रुतं नः ॥ सार्के शनौ रविविचित्रशिखंडिसूनौ तत्केवलं कुलिकयामदलोपलंभात् ॥ " इति ॥ उच्यते ॥ विशेषविधेः सामान्यशास्त्रबाधकता न्यायसिद्धा । तत्र सामान्यतः पंचघटिकात्मकस्य सायंकालीनलग्नस्य सप्तमसूर्याख्यो महान्दोषः । तत्रापि पुनर्गोधूलिकाले सूर्यार्द्धबिंबरूपे सूक्ष्मे न सप्तमसूर्यदोषः ॥ विशेषवचनात् ॥ तत्राप्ययं विशेषः-यद्गोधूल्यां यथाशक्ति दोषहानिर्विधेया । घटिकालग्ने त्वखिलदोषहानिः ॥ अतएव गोधूलिलग्ने न ऋक्षमित्यर्थवादोपपत्तिः ॥ तस्याप्ययं षष्ठेष्टमे तिग

इत्यर्थवादः ॥ विशेषवचनात् ॥ नात्र प्रमाणवचनं किमपि श्रुतम् । किन्तु प्रौढवादमात्रम् । एतादृशानां मूलभूतवाक्यानामनुपलंभात् । 'साक शनौ' इत्यादि तु 'कुलिकं क्रांतिसाम्यं च' इति वाक्यात्कुलिकादित्यागे स्वयं हेत्वभिधानपरं न त्वेतत्तात्पर्यकम् । सप्तमसूर्यातिरिक्तसकलदोषनिराकरणप्रवृत्तत्वात्तस्य । किंच यदि गोधूल्यां कोपि दोषो नास्तीत्यभिमतं स्यात्तदैकविंशतिमहादोषनिरूपणात्प्राक् नारदोपि गोधूलिलग्नमभिदध्यात् । नच व्यतीपातादिष्वपि गोधूलिलग्नं स्यादिति वाच्यम् ॥ सामान्यवाक्यैरपि निषेधसत्त्वात् ॥ किंचैवं ब्रुवतस्तवेष्टापत्तिरेव स्यादित्यास्तां प्रसक्तानुप्रसक्तेन ॥

## चन्द्रे द्वित्र्येकादशस्थे दंपत्योः सुखम्-

लाभ इति ॥ चंद्र लाभस्थे वित्ते द्वितीयस्थे सहजस्थे वा सति स्त्रीपुरुषयोः सौख्यं स्यात् । तदुक्तं संहितासारे-"यत्रैकादशगश्चंद्रो द्वितीयो वा तृतीयगः । गोधूलिका तु विज्ञेया शेषा धूलिरिति स्मृता ॥ " इति ॥ १०१ ॥

## सूर्यस्पष्टगतिः-

**मेषादिगेर्केऽष्टशरा ५८ नगाक्षाः ५७ सप्तेषवः ५७ सप्तशरा ५७ गजाक्षाः ५८॥ गोक्षाः ५९ खतर्काः ६० कुरसाः ६१ कुतर्काः ६१ क्वंगानि ६१ षष्टि ६० र्नवपंच ५९ भुक्तिः ॥१०२॥**

अवसरप्राप्तां घटिकालग्नसिद्ध्यर्थप्रक्रियां वृत्तपंचकेन वक्तुकामस्तावत्सूर्यस्पष्टगतिमिंद्रवज्रयाह--मेषादीति ॥ स्पष्टार्थमिदं पद्यम् । मेषादिद्वादशराशिषु सूर्याक्रांतासु स्थूलकलात्मिका स्पष्टगतिरित्यर्थः । उक्त च.-" नागेषवो नगशरास्तुरगेषवोद्रिबाणा भुजंगविषयाः क्रियतो नवाक्षाः ॥ व्योमर्त्तवः शशिरसाः कुरसाः कुतर्काः षष्टिर्नवेषव इनस्य गतेः कलाः स्युः ॥ " इति ॥ इयं स्थूला गतिर्भावनासिद्धेति नार्षवचनापेक्षा ॥ १०२ ॥

## सूर्यस्य तात्कालिकीकरणम्-

**संक्रांतियातघस्राद्यगतिर्निघ्नी खषड् ६० हृता ॥**
**लब्धेनांशादिना योज्यं यातर्क्ष स्पष्टभास्करः ॥ १०३ ॥**

सूर्यस्य तात्कालिकीकरणमनुष्टुभाह·-संक्रांतीति ॥ संक्रांतयो मेषाद्याः पंचांगदृष्टाः यद्दिने स्युर्यस्यां घट्यां च स्युस्तत आरभ्य स्वाभीष्टस्थूलकालपर्यंतं यावद्दिनानि यावत्यो घटिकाश्च भवंति तैर्मेषादीष्टराशिस्थे सवितरि सति तत्सूर्यस्थूलस्पष्टगतिर्गुण्या ॥ खषड्भिः षष्ट्या ६० भक्ता यल्लब्धं तेंशाः । अवशिष्टं कलादि । येंशावयवास्ते आदिशब्दवाच्याः । तेन यातर्क्षमृक्षराशिः सूर्यभुक्तमेषादिराशिर्युक्तः सन् तात्कालिकस्थूलभास्करः स्यात् ॥ १०३ ॥

### इष्टकालिकलग्नानयनम्-

**तनोरिष्टांशकात्पूर्वं नवांशा दशसंगुणाः ॥**
**रामाप्ता लब्धमंशाद्यं तनोर्वर्गादिसाधने ॥ १०४ ॥**

अथेष्टकालिकलग्नानयनमनुष्टुभाह—तनोरिति ॥ ग्रहबलसहितस्य लग्नस्य यो विहितो नवांशः क्रियमृगास्यतौलिकेंदुभतो नवांशविधिरुच्यते बुधैरिति गणनया दोषरहितो विचारितः सः यावत्संख्याक आगच्छेत् तत्पूर्वनवांशा यावंतः स्युः ते दशभिः संगुण्याः। रामैस्त्रिभिराप्ता यल्लब्धमंशाद्यमंशकलाविकलात्मकं तत्तनोरिष्टकालिकं भुक्तं स्यात् ॥ तेन प्रागुक्तं 'कुजशुक्रसौम्य' इत्यादिप्रकारेण षड्वर्गसाधनं स्यात् ॥ अत्रोपपत्तिः। यदि नवभिर्नवमांशैस्त्रिंशदंशा लभ्यंते तदेष्टनवांशेन कियंत इति। अत्र 'प्रमाणमिच्छा च' इत्यादिना इष्टनवांशानां त्रिंशद्गुणको भाजको नवसंपन्नः। तत्र द्वयोरपि त्रिभिरपवर्ते दशगुणकः त्रयो भाजकः इत्युपपन्नं फलमिष्टांशाः स्युः। उक्तं च महेश्वरेण "इष्टात् पूर्वनवांशका दशहता रामैर्हृताः स्युर्लवाः ॥" इति ॥ १०४ ॥

### इष्टघटिकानयनम्-

**अर्काल्लग्नात्सायनाद्भोग्यभुक्तैर्भागैर्निघ्नात्स्वोदयात्खाग्निभक्तात् ॥ भोग्यं भुक्तं चांतरालोदयाढ्यं षष्ट्या भक्तं स्वेष्टनाड्यो भवेयुः ॥ १०५ ॥**

अथैवं साधिताभ्यां स्पष्टार्कलग्नाभ्यामिष्टघटिकानयनं शालिन्याह—अर्कादिति ॥ सायनादयनांशसहितात्सूर्याद्राशिभोग्यांशैः सायनांशसूर्याक्रांतराशेः स्वदेशीय उदयो मेषादिराशीनां पलात्मकं प्रमाणगुण्यं खाग्निभिस्त्रिंशता भक्तं लब्धानि पलानि स्युः ॥ एवं लग्नात्सायनांशाद्भुक्तांशैराक्रांतस्वदेशीयराश्युदयो गुण्यः। खाग्निभक्तो लब्धानि भुक्तपलानि ॥ एवं जातानां भोग्यभुक्तपलानामैक्यं कार्यम्। तत्सायनांशलग्नार्कयोरंतरालोदयपलैर्युक्तं कार्यम्। षष्ट्या भक्तं सूर्योदयादिष्टघटिका भवेयुः॥अत्रोदयज्ञानं भास्कराचार्येणोक्तं—"लंकोदया नागतुरंगदस्रा २७८ गोंकाश्विनो २९९ रामरदा ३२३ विनाड्यः। क्रमोत्क्रमस्थैश्चरखंडकैः स्वैः क्रमोत्क्रमस्थैश्च विहीनयुक्ताः। मेषादिषण्णामुदयाः स्वदेशे तुलादितो मीनषडुत्क्रमस्थाः ॥" इति ॥ स्वैः स्वदेशीयैः।

### चरखण्डानयनम्-

अत्र चरखंडानयनमपि तेनोक्तं—"अयनलवदिनैः प्राङ्मेषसंक्रांतिकालाद्भवति दिवसमध्ये या प्रभाक्षप्रभा सा। दशगजदशननिघ्नी साक्षभांत्यात्रिभक्ताप्रतिग्रहचरखंडा (?) नि" इति ॥ "अर्कस्य भोग्यस्तनुभुक्तयुक्तो मध्योदयाढ्यः समयो विलग्नात्" इति च ॥ १०५ ॥

## घटिकानयनविशेषः-

**चेल्लग्नार्कौ सायनावेकराशौ तद्विश्लेषघ्नोदयः खाग्निभक्तः ॥ स्वेष्टः कालो लग्नमूनं यदार्काद्रात्रौ शेषेऽर्कात्सषड्भं निशायाम् ॥ १०६ ॥**

घटिकानयनविशेषं शालिन्याह-चेल्लग्नेति ॥ लग्नार्कौ सायनौ अयनांशसहितौ यद्येकराशौ स्यातां तदा तयोर्लग्नार्कयोर्विश्लेषोंतरांशास्तैर्गुणितः स्वदेशीय उदयः कार्यः । खाग्निभिस्त्रिंशता भाज्यो लब्धमिष्टकालः सूर्योदयात्स्यात् । तत्र यदार्कात्सायनसूर्यादेकराशिस्थितं लग्नमूनं स्यात्तदा यच्चेत्-'लग्नार्कौ सायनौ' इत्युक्तदिशा स्वेष्टकाल आगतः सः सूर्योदयात्प्राक् रात्रिशेषो भवेत् ॥ अयमर्थः ॥ आनीत इष्टकालः षष्ट्यां पात्यः प्राग्दिनीयसूर्योदयादनंतरमेतावानिष्टकालः । अथवा राशिमानात्पात्यः प्राग्दिनीयसूर्यास्तादनंतरमेतावानिष्टकालः । एवमिष्टकाले सामान्यतो निर्णीते रात्रौ विशेष उच्यते । निशायां रात्रावर्कात्सषड्भाद्राशिषट्कयुक्तात्प्रागुक्तप्रकारेण 'अर्काल्लग्नात्'. इत्यादिनेष्टकालः साध्यः । स सूर्यास्तानंतरं भवेत् । यदाह भास्करः-" यदैकभे लग्नरवी तदा तद्भागांतरघ्नोदयखाग्निभक्तम् । स्यादिष्टकालो यदि लग्नमूनं शोध्यो द्युरात्रादथवा रजन्याः ॥ रात्रीपृकाले तु सषड्भसूर्याल्लग्नं ततोप्युक्तवदिष्टकालः ॥ " इति ॥ अत्रांशप्रवृत्तेः पञ्च पलानि पात्यंते । विहितनवांशप्रवेशसूचनार्थमिति दैवज्ञसंप्रदायः । एवमानीत इष्टकाले दंपत्योरन्योन्यवीक्षणं कार्यमित्याह कश्यपः-" अन्योन्यवीक्षणं सम्यक्सुलग्ने कारयेत्सदा" इति । नारदोपि-"एवं सुलग्ने दम्पत्योः कारयेत्सम्यगीक्षणम्" इति ॥ एतेन परस्परावलोकनं सुलग्ने कार्यम् । इतरत्तु समयांतरेपि विधेयमित्युक्तं भवति ॥

## इष्टकालं संसाध्य संस्कार्याचार्ययोरन्योन्यवीक्षणं कार्यम्-

तुल्यन्यायत्वादुपनयनादावपि साधितेष्टकाले संस्कार्याचार्ययोरप्यन्योन्यवीक्षणं करणीयम् । "शास्त्रोक्तमार्गेण सुलग्नकालं स्फुटं समानीय जलादियन्त्रैः । संलभ्य तं मंगलसूक्ष्मकालं संलोकयेत्तत्र मिथोर्ध्वदृष्टिः ॥ " इति सामान्यतो वसिष्ठेनाभिहितत्वात् ॥

## विवाहे निश्चितलग्ने कर्तव्यकर्माणि-

कश्यपोऽपि तथैवाह-"अन्योन्यवीक्षणं सम्यक् सुलग्ने कारयेत्सदा " इति ॥ अनेन सुलग्नकाले अन्योन्यवीक्षणमेव मुख्यम् । पाणिग्रहणादिगायत्र्युपदेशादिकं तदुत्तरकालकर्तव्यतया गौणमिति प्रतिभाति ॥

## इष्टकालज्ञानं-तदर्थं यन्त्रनिर्माणक्रमश्च-

स चेष्टकालः कथं साधनीय इत्यत आह कश्यपः-"एवं गुणगणान् वीक्ष्य लग्नं निश्चित्य यत्नतः । सिद्धांतोक्तेन मार्गेण लग्नकालं प्रसाधयेत् ॥ जलयन्त्रेण तल्लग्नं दद्यात्तेनार्चितो द्विजः । मुखं वृत्तं द्वादशभिरंगुलैश्च षडुन्नतम् ॥ घटार्द्धवत्ताम्रपात्रं कुर्यात्तद्दशभिः पलैः । षष्टि-

भेजेदहोरात्रे घटिकापात्रमुत्तमम् ॥ माषत्रयत्र्यंशयुतस्वर्णवृत्तशलाकया । चतुर्भिरंगुलरायातया विद्धं स्फुटं न्यसेत् ॥ रवेरर्द्धोदयं दृष्ट्वा वाप्यर्द्धास्तमयं तथा । पूर्वोक्तलक्षणं यंत्रं मंत्रेणानेन निःक्षिपेत् ॥" निःक्षिपेज्जलपूर्णपात्रमित्यर्थः । यदाह नारदः–" ताम्रपात्रे जलैः पूर्णे गन्धपुष्पैरलंकृते । तंडुलस्थे रत्नयुते शुचिभूमावहर्पतेः ॥ मंडलार्द्धोदयं वीक्ष्य जलपात्रं विनिःक्षिपेत् ॥" इति ॥

## तत्र मंत्रः–

मंत्रमप्याह स एव–"यंत्राणां मुख्ययंत्रं त्वमिति धात्रा पुराकृतम् । दंपत्योरायुर्वृद्ध्यर्थं पुत्रादिधनहेतवे ॥ जलयंत्रकमेतस्मादिष्टासिद्धिप्रदो भव ॥" इति ॥

## द्वादशांगुलशंकुनेष्टकालसाधनं–ताम्रघटिकाद्यभावे–

ताम्रघटिकाद्यभावे द्वादशांगुलशंकुना कालः साध्यः ॥ तदुक्तं कश्यपेन–"अथवा साधयेत्कालं द्वादशांगुलशंकुना" इति ॥

## तत्र शङ्कुलक्षणम्–

शंकुलक्षणमाह नारदः–"न्यग्रोधखदिराश्वत्थरक्तचंदनवृक्षजम् ॥ श्रीखंडागरुवृक्षस्य मंजुशंकुमकल्मषम् ॥ द्वादशांगुलमुत्सेधं परिणाहं षडंगुलम् । एवं लक्षणसंयुक्तं कल्पयेत्कालसाधने ॥" इति ॥

## शङ्कुना घटीज्ञानक्रमः–

शंकुना घटीज्ञानं तु करणकुतूहले भास्करेणाभिहितम् । यथा–"चरपलयुतहीना नाडिकाः पंचचंद्रा १५ द्युदलमथ निशार्धं याम्यगोले विलोमम् । द्युदलगतघटीनामंतरं तन्नतं स्यान्नतरहितदिनार्धं चोन्नतं जायतेऽत्र ॥ दिनदलं विशरं खहरो भवेन्नतकृतिः पृथगभ्रशराहता । खखनवाढ्यपृथक्स्थितया हृता खहरतः पतितोभिमतो हरः ॥ अथ नतं यदि पञ्चदशाधिकं दिनलवात्पतितं खहरस्तदा । प्रथमखंडहृतं दलितं चरं स्वगुणितं स्वषडंशविवर्जितम् ॥ दशयुतं पलकर्णहतं हतिर्हरहृतः श्रवणोंगुलपूर्वकः । रवियुतोनितकर्णहतेः पदं द्युतिरिनं द्युतिवर्गयुते श्रुतिः । श्रुतिविभक्तहृतिस्तु हरो भवेत्स पतितः खहरादवशेषकम् । पृथगिदं खखनंदहतं हरेत्खविषयैरवशेषविवर्जितैः ॥ फलपदं हि नतं यदि शेषकं दिगधिकं हर एव तदुन्नतम् ॥" इति ॥ १०६ ॥

## उक्तवर्ज्यदोषाणां संक्षिप्योक्तिः–

**उत्पातान्सह पातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा चंद्रेज्योशनसामथास्तमयनं तिथ्याः क्षयर्द्धी तथा ॥ गंडांतं च सविष्टि संक्रमदिनं तन्वंशपास्तं तथा तन्वंशेशविधूनथाष्टरिपुमान्पापस्य वर्गांस्तथा ॥ १०७ ॥ सेंदुक्रूरखगोदयांशमुदयास्ताशुद्धिचंडायुधान्खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम् ॥**

बाणोपग्रहपापकर्तरि तथा तिथ्यृक्षयोगोत्थितं दुष्टं योगमथार्द्धयामकुलिकाद्यान्वारदोषानपि ॥ १०८ ॥ क्रूराक्रांतविमुक्तभं ग्रहणभं यत्क्रूरगंतव्यभं त्रेधोत्पातहतं च केतुहतभं संध्योदितं भं तथा ॥ तद्वच्च ग्रहभिन्नयुद्धगतभं सर्वानिमान्संत्यजेदुद्वाहे शुभकर्मसु ग्रहकृतान् लग्नस्य दोषानपि ॥ १०९ ॥

विवाहादिशुभकार्येष्वावश्यकान्वर्ज्यदोषानविस्मरणार्थं शार्दूलविक्रीडितत्रयेणाह–उत्पातानिति ॥ उत्पातादीन्दोषानुद्वाहे विवाहे यज्ञोपवीतादिशुभकर्मसु च संत्यजेदिति तृतीयश्लोकगतेनान्वयः । उद्वाहग्रहणं गोबलीवर्दन्यायेन मुख्यत्वसूचनार्थम् ॥

## त्रिविधोत्पातादिषु वर्ज्यदिनानि–

उत्पातान् त्रिविधान् दिव्यांतरिक्षभौमान् लक्षणया तत्संबंधिसप्तवर्ज्यदिवसान् त्यजेत् । यदाह गुरुः–"दिग्दाहे वा महादारुपतने चांबुवर्षणे । उल्कापाते महावाते महाशनिनिपातने ॥ अनभ्राशनिपाते च भूकंपे परिवेषयोः । ग्रामोत्पाते शिवाशब्दे दुर्निमित्ते न शोभनम् ॥ केतवो यत्र दृश्यंते सधूमा वा पृथग्विधाः । चंद्रसूर्यग्रहे चैव वर्जयेद्दिनसप्तकम् ॥" पातो महापातः क्रांतिसाम्यमिति यावत् । तद्गणितप्रसिद्धम् ॥ दग्धतिथयः 'चापांत्यगे गोघटगे' इत्यादिनोक्ताः । एतैः सह त्यजेदिति संबंधः । तथा दुष्टान् व्यतीपातवैधृतिपारिघार्द्धादीन् । चंद्रेज्योशनसां चंद्रगुरुशुक्राणाम् अस्तमयनमस्तं च तिथ्याः क्षयर्द्धी तिथिवृद्धिं तत्क्षयं च पुनर्गंडांतं नक्षत्रतिथिलग्नैः त्रिविधं विष्टिर्भद्रा संक्रमदिनं–'देवद्र्यंक' इत्यानिदा संक्रमकालादुभयतो वर्ज्या घटिकाः । अयनेषु विषुवेषु च पूर्वापरं त्रिदिनमिति विशेषो ध्येयः । ताभ्यां सहितामिति पूर्वेण सम्बन्धः ॥ तन्वंशपास्तमिति ॥ तनुर्लग्नमंशो लग्नगतविहितनवांशः तौ पात इति तन्वंशपौ तयोरस्तं लग्नाधीशलग्ननवांशाधीशास्तं चेत्यर्थः ॥ तथा तन्वंशेशविधून् लग्नेशनवांशेशचन्द्रान् अष्टरिपुगान् अष्टमषष्ठस्थानगान् । तथा पापस्येत्येकत्वमविवक्षितम् । पापग्रहाणां वर्गान् । सेन्दुक्रूरखगोदयांशम् । इन्दुश्च क्रूरखगश्चेन्दुक्रूरखगौ उदयो लग्नं च अंशो नवांशश्च तदिति समाहारद्वंद्वैकवचनम् । इंदुक्रूरखगाभ्यां सहितमुदयांशम् । इंदुसहितं लग्नं लग्नांशं चेत्यर्थः ॥ उदयास्तशुद्धिचंडायुधान् उदयशुद्धिरस्तशुद्धिश्च–"इष्टोदयांशैर्निजपत्यदृष्टे वरस्य मृत्युस्तदसंयुते वा । अस्तांशकेऽप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥" इति वसिष्ठाद्युक्तम् ॥ इतरथा ज्ञेयमशुभमिति ग्रन्थकर्त्राप्युक्तं प्राक् । चंडायुधं–'हर्षणवैधृतिसाध्या' इत्यादिनोक्तं, खार्जूरम्–'व्याघातगंडे' इत्यादिनोक्तं, दशयोगः–'सूर्यर्क्षचन्द्रक्षयुतेः' इत्यादिनोक्तः । योगो ग्रहयुतिश्च तत्सहितम् । जामित्रलत्ताव्यधं–समाहारद्वंद्वैकवचनम् ॥ जामित्रं द्विविधं–लग्नजामित्रं चन्द्रजामित्रं च–'लग्नाचंद्रः' इत्यादिनोक्तम् । लत्ता–'ज्ञराहुपूर्णेंदुसिता' इत्युक्ता । व्यधं वेधं सप्तशलाकोक्तं पञ्चशलाकोक्तं च । बाणाः पञ्चकम् । उपग्रहः प्रसिद्धः–'शराष्टदिक् शक्र' इत्यादिनोक्तः । पापकर्तरि क्रूरग्रहकर्त्तरि । समाहारद्वंद्वैकवचनम् । तिथ्यृक्षवारोत्थितं दु-

ष्टं योगं तिथिनक्षत्रवारैः उत्थितमुत्पन्नं दुष्टयोगं, तथा तिथिनक्षत्रोद्भवं–'वैश्वमादिम' इत्यादि, तिथिवारोद्भवं 'सूर्येशपञ्च' इत्यादि, नक्षत्रवारोद्भवं ' याम्यं त्वाष्ट्रम् ' इत्यादि, तिथिनक्षत्रवारोद्भवं 'हस्तार्के पञ्चमी ' इत्यादि, अनेकं दुष्टयोगम् । अथार्द्धयामकुलिकाद्यान् वारदोषानपि ॥ स्पष्टाथम् ॥ आदिशब्देन दुर्मुहूर्तादिकान्, क्रूराक्रांतविमुक्तभं क्रूराक्रांतं क्रूरविमुक्तं च भं, ग्रहणभं यस्मिन् भे सूर्यचंद्रोपरागो जातस्तद्भं, यत् क्रूरगंतव्यभं क्रूरेण जिगमिषितं यद्भं नक्षत्रं, त्रेधोत्पातहतं च भं त्रिविधोत्पातैर्दिव्यभौमांतरिक्षैरुत्पातैर्हतं तन्मासषट्कं त्याज्यम् । एवं ग्रहनक्षत्रमपि केतुहतभं च केतुना हतं भं च ॥ ननु केतोर्दिव्यात्पातत्वात्त्रेधोत्पातहतमित्यनेनैव निषिद्धमिति किं पुनः विशेषानिषेधेन ॥ उच्यते ॥ अशुभफलदकेतोराधूमनैस्पर्शैश्च नक्षत्रांतरेपि दोषवत्त्वास्ति । तथा संध्योदितं भम् । अत्र सन्ध्याशब्देन सायंसंध्या गृह्यते । तत्रोदितं तत्काले यत्र नक्षत्रस्य क्षितिज उदयस्तत्तु सूर्यर्क्षाच्चतुर्दशं नक्षत्रमित्यर्थः ॥ ननु प्रातःसंध्यायाम् । तत्र हि सूर्येणाक्रांतभुक्तभान्यतमसत्त्वात् ॥ यदुक्तं केशवार्केण–" तरणितारकतोपि चतुर्दशं तदखिलेप्यखिलं शुभकर्माणि " इति ॥ तारकशब्दः क्लीबेपि । 'कनीनिकायां नक्षत्रे तारकं तारकेति च " इति विश्वः ॥ ननूपग्रहत्वादेव निषेधे सिद्धे पुनर्दोषाभिधानं किमर्थम् ॥ उच्यते ॥ उपग्रहर्क्षदोषस्य सत्यावश्यकत्वे कुरुबाह्लीकविषयत्वाच्च चतुर्दशस्य तु भस्य दोषाधिक्यसूचनादावश्यकेपि सर्वदेशविषयत्वेन निषेधो यथा स्यादिति ॥ तद्वच्च ग्रहाभिन्नयुद्धगतभं ग्रहेण भेदितं ग्रहयुद्धगतं च षण्मासं निषिद्धम् । तथा ग्रहकृतान् लग्नस्य दोषान् 'व्यये शनिः खेवनिज' इत्यादिकान् संत्यजेत् । अत्र मूलवाक्यानि सर्वाण्यस्मिन्नेव प्रकरणेऽभिहितानि । कानिचिदाद्यप्रकरणे इति पुनरत्र नोक्तानीति शिवम् ॥ १०७ ॥ १०८ ॥ १०९ ॥

### विवाहात्प्राक् तैलादिलापने दिनसंख्यानियमः–

**मेषादिराशिजवधूवरयोर्बटोश्च तैलादिलापनविधौकथितात्र संख्या। शैला दिशः शरदिगक्षनगाद्रिबाणा बाणाक्षबाणगिरयो ७,१०,५, १०, ५, ७, ७, ५, ५, ५, ७ विबुधैस्तु कैश्चित् ॥ ११० ॥**

## इति श्रीदैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ षष्ठं विवाहप्रकरणं समाप्तम् ॥ ६ ॥

कैश्चित्तैलादिलापने दिनसंख्यानियम उक्तस्तमाह–मेषादिराशिजेति ॥ स्पष्टम् । इदं देशविशेषे औदीच्यादौ प्रसिद्धम् ॥ ११० ॥ विवाहप्रकरणं गद्येनोपसंहरति इति श्रीदैवज्ञेति ॥ स्पष्टार्थम् ॥ ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्त्तचिन्तामणेः गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने करपीडनप्रकरणं सम्पूर्णतामध्यगात् ॥ १ ॥

इति श्रीमद्दैवज्ञमुकुटालंकारनीलकण्ठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्त्तचिन्तामणिटीकायां पीयूषधाराभिधायां विवाहप्रकरणं समाप्तिमगमत् ॥ ६ ॥

---

# अथ वधूप्रवेशप्रकरणम् ७.

## वधूप्रवेशमुहूर्तः-वधूप्रवेशपदार्थश्च-

**समाद्रिपञ्चांगदिने विवाहाद्वधूप्रवेशोऽष्टदिनांतराले ॥**
**शुभः परस्ताद्विषमाब्दमासदिनर्क्षवर्गात्परतो यथेष्टम् ॥ १ ॥**

श्रीगणेशाय नमः ॥ गणनायकमाराध्य विघ्नसंघनिवारकम् । वधूप्रवेशप्रकरणं व्याख्याति विदां मुदे ॥ २ ॥ अथ वधूप्रवेशप्रकरणं व्याख्यायते ॥ तत्र वधूप्रवेशो नाम नूतनपरिणीतायाः कन्यायाः प्रथमतः करिष्यमाणो भर्तृगृहप्रवेश इति ॥ अधुनावसरप्राप्तत्वात्तन्मुहूर्त्तमुपेंद्रवज्रयाह-समाद्रीति ॥ विवाहाद्विवाहदिवसादारभ्याष्टदिनानि षोडश दिनानि तेषामंतराले समाद्रिपञ्चांगादिने समदिनानि द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशचतुर्दशषोडशसंख्यानि विषममध्ये सप्तमपञ्चमनवमदिनानि तेषु वधूप्रवेशः वध्वा नूतनपरिणीतायाः कन्याया भर्तृगृहप्रवेशः शुभः शुभफलप्रदः । यदाह नारदः-"आरभ्योद्वाहदिवसात्षष्ठे वाप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥" षडादीनां समत्वादेव ग्रहणे पुनस्तदुक्तिरतिप्राशस्त्यसूचनार्थम् ॥

## पंचमे सप्तमे नवमे वा दिने चन्द्रबले सुलग्ने गृहप्रवेशः-

ज्योतिर्निबंधे तु विशेषः-वधूप्रवेशं कार्यं पञ्चमे सप्तमे दिने । नवमे च शुभे वारे सुलग्ने शशिनो बले ॥" इति ॥

## षोडशदिनाभ्यन्तरे गृहप्रवेशासंभवे विषमवर्षमासादिषु-

परस्तात्प्रतिबंधवशात् षोडशदिनाभ्यंतरे वधूप्रवेशो न जातस्तदा तदनंतरं विषमाब्दमासदिने विषमवर्षे प्रथमतृतीयपञ्चमवर्षे विषममासे विवाहमासात्प्रथमतृतीयपंचमसप्तमनवमैकादशमासेषु विषमदिनानि सप्तदशादीनि तेषु वधूप्रवेशः शुभः ॥

## विवाहात्पञ्चवर्षाभ्यन्तरे गृहप्रवेशाभावे यथेष्टं गृहप्रवेशः-

तत्रापि यदि प्रतिबंधवशात्कालातिक्रमः पञ्चवर्षात्मको जातस्तदा पञ्चवर्षादनन्तरं यथेष्टं वर्षादिनियमो नास्ति । किंतु दोषरहिते काले वधूप्रवेशो विधेयः । तदुक्तं च संग्रहे-"विवाहमारभ्य वधूप्रवेशो युग्मे दिने षोडशवासरांतः । ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमांतं पुनः परस्तान्नियमो न चास्ति ॥" अत्राब्देऽयुजीति पदच्छेदो द्रष्टव्यः । तदुक्तं विवाहपटले-" वधूप्रवेशः प्रथमेत्र वर्षे तथा तृतीयेप्यथ पञ्चमे वा । सूर्येन्दुदेवेज्यबलेन कुर्यात्पुंसो मुनिर्गौतम आह सत्यम् ॥" इति ॥ समवर्षे दोषस्मरणाच्च । यदाह धर्मशास्त्रे नारदः-"समे वर्षे समे मासे यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥" इति ॥ अयुग्मवत्सरनिषेधः पञ्चवर्षात्प्राग्ज्ञेयो न पश्चात् । तद्वाक्यस्य प्रागभिधानात् ॥ १ ॥

## वधूप्रवेशे नक्षत्रादिशुद्धिः-

**ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले ॥**
**वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥ २ ॥**

## नक्षत्रादिशुद्धिर्वधूप्रवेशे—

वधूप्रवेशे नक्षत्रादिशुद्धिमनुष्टुभाह—ध्रुवेति ॥ ध्रुवाणि रोहिण्युत्तरात्रयं च । क्षिप्राणि अश्विनीपुष्यहस्ताः । मृदूनि चित्रानुराधारेवतीमृगाः । श्रोत्रं श्रवणः । वसुर्धनिष्ठा । मूलं प्रसिद्धम् । अनिलः स्वाती एषु भेषु वधूप्रवेशः सन् शुभफलदः । अर्थादन्यासु तिथिषु अर्काराभ्यामन्यवारेषु च वधूप्रवेशः प्रशस्त इत्यर्थः ॥ उक्तं च व्यवहारतत्त्वे—"पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु । पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः॥ इति । कभं रोहिणी । बुधे परैरिति ॥ अन्यैः शिष्टैर्बुधवारे वधूप्रवेशो नेष्यते । कस्मिंश्चिद्देशे शिष्टाचारो यद् बुधवारे वधूप्रवेशो न विधीयते । केचिदत्र हेतुमपि वर्णयंति यद्बुधो नपुंसक इति ॥ तच्चिंत्यम् ॥ शनेरपि नपुंसकत्वात्तस्यापि निषेधो वाच्यः स्यात् ॥ २ ॥

## विवाहानन्तरं वध्वाः पित्रादिनिवासस्थितिभेदेन फलभेदः—

**ज्येष्ठे पतिज्येष्ठमथाधिके पतिं हंत्यादिमे भर्तृगृहे वधूः शुचौ॥**
**श्वश्रूं सहस्ये श्वशुरं क्षये तनुं पातं मधौ तातगृहे विवाहतः ॥३॥**

**इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ वधूप्रवेशप्रकरणं समाप्तम् ॥ ७ ॥**

विवाहानंतरं प्रथमं केषुचिन्मासेषु वध्वाः पित्रादिगृहनिवासे फलमिंद्रवंशाछंदसाह—ज्येष्ठ इति ॥ विवाहतो विवाहादनंतरं भर्तृगृहे स्थिता यदि आदिमे प्रथमे ज्येष्ठे मासि तिष्ठंती वधूः पतिज्येष्ठं भर्तृभ्रातरं हंति । एवमादिमेऽधिके मासि स्थिता वधूः पतिं भर्तारं हंति । आदिमे क्षये क्षयमासे भर्तृगृहे तिष्ठंति तनुं निजशरीरं हंति । म्रियत इत्यर्थः । तथादिमे मधौ चैत्रे तातगृहे पितृगृहे तिष्ठंति तातं पितरं हंतीत्यर्थः ॥

## पित्राद्यभावे वध्वास्तत्र वासे न दोषः—

यदि कन्यायाः पित्राद्यभावस्तदा तत्तन्मासे तत्तद्गृहावस्थितौ सत्यामपि न कोपि दोष इत्यर्थः । उक्तं च मुहूर्त्तमार्त्तंडे—"उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकम् । पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये तिष्ठंती पितरं निहंति न भयं तेषामभावे भवेत् ॥" इति ॥

## विवाहानन्तरं मलमासयोर्ज्येष्ठाषाढपौषेषु भर्तृगृहे न स्थेयम्—

मलिनेऽधिकमासे । क्षयमासधिकमासयोर्लक्षणं संक्रांतिप्रकरणेऽभिहितम् । तस्मान्नववध्वा विवाहानंतरं ज्येष्ठाषाढपौषाधिकमासक्षयमासेषु भर्त्तगृहे न स्थातव्यम् । किंतु पितृगृहे एव स्थातव्यम् । एवं चैत्रे मासि पितृगृहे न स्थातव्यम् । किंतु भर्तृगृहे एव स्थातव्यमिति फलितोऽर्थः ॥ तदुक्तं ज्योतिर्निबंधे—"विवाहात्प्रथमे पौषे आषाढे चाधिमासके । न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा ॥" आषाढो ज्येष्ठोपलक्षकः अधिमासः क्षयमासोपलक्षकः ॥ अत्र प्रमाणं प्रागुक्तमिति ॥ ३ ॥ अथोपसंहरति—इति श्रीदैवज्ञेति ॥ स्पष्टार्थम् ॥ ज्योतिर्विद्वरनीलकण्ठविदुषः श्रीचन्द्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्त्तचिन्तामणेः॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने हि वधूप्रवेशसमयाध्यायः समाप्तिं गतः॥१॥

इति श्रीविद्वद्दैवज्ञमुकुटालंकारनीलकण्ठज्योतिर्वित्पुत्रगोविन्दज्योतिर्विद्विरचितायां मुहूर्त्तचिन्तामणिटीकायां पीयूषधाराभिधायां वधूप्रवेशप्रकरणं समाप्तिमगात् ॥ ७ ॥

# अथ द्विरागमप्रकरणम् ८.

## द्विरागममुहूर्त्तः—द्विरागमपदार्थश्च—

**चरेदथौजहायने घटालिमेषगे रवौ रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे ॥ नृयुग्ममीनकन्यकातुलावृषे विलग्नके द्विरागमं लघुध्रुवे चरेऽस्रपे मृदूडुभिः ॥ १ ॥**

श्रीगणेशाय नमः ॥ गणनायकमाराध्य नीलकंठं गुरुं तथा । द्विरागमप्रकरणं व्याख्याति विदुषां मुदे ॥ १ ॥ अथ द्विरागमप्रकरणं व्याख्यायते—तत्र पूर्वं नववधूप्रवेशे जाते तदनंतरं परावृत्यापि पितृगृहप्राप्ताया अपि वध्वा यथेष्टवर्षाणि स्थितायाःपुनर्भर्तृगृहप्रवेशो द्विरागमशब्दवाच्यः । अयमाचारः प्राच्योदीच्यपाश्चात्यानामेवेति ॥ अधुनावसरप्राप्तत्वात्तन्मुहूर्त्तं पंचचामरच्छन्दसाह—चरेदिति ॥ वधूप्रवेशकथनानंतरं पुनर्वधूप्रवेशः द्विरागमनं वक्ष्यमाणनक्षत्रादिषु चरेत्कुर्यात् । ओजहायने विषमवर्षे प्रथमे तृतीये पञ्चमे वा वर्षे सति । तथा घटालिमेषगे कुम्भवृश्चिकमेषस्थिते रवौ । तथा वरस्य रवीज्यशुद्धियोगतः रवेः सूर्यस्य इज्यस्य गुरोः शुद्धियोगतः शुभग्रहस्य सोमबुधगुरुशुक्राणामन्यतमस्य वासरे सति । मिथुनमीनकन्यातुलावृषाणामन्यतमे लग्ने शुभग्रहावलोकिते शुभयुक्ते वा सति । लघून्यश्विनीपुष्यहस्ताः । ध्रुवाणि प्रसिद्धानि । चराणि श्रवणादित्रयपुनर्वसुस्वात्यः । अस्रपो राक्षसस्तद्भं मूलम् । मृदूनि प्रसिद्धानि । एषु भेषु द्विरागमः प्रशस्त इत्यर्थः ॥ यदाह ऋक्षोच्चयः—"तिष्यादित्यसमीरणादितिवसुत्रीण्युत्तराण्यश्विनीरोहिण्यः शुभदाश्च वर्षमसमं मेषालिकुम्भे रविः । कन्यामन्मथमीनभे नववधूयानां वृषे तौलिके देवाचार्यसितेंदुसौम्यादिवसे शुद्धे गुरौ भास्करे ॥ " इति ॥ ग्रन्थकर्त्रात्र कानिचिद्भान्यधिकान्युक्ता । तानि राजमार्त्तंडेनोक्तानि—"नीहारांशुधनोत्तरादितिगुरुब्राह्मानुराधाश्विनीमूलाहस्करवारुणानिलहारित्वाष्ट्रेषु शस्ते तिथौ । कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे सूर्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे ॥ हित्वा दिक्प्रतिलोमगौ बुधसितौ ललाटगं दिक्पतिं चानीना गुणशालिनी नववधूर्नित्योत्सवैर्मंदिरम् ॥ " ललाटगान् यात्रायां वक्ष्यति ॥ शुक्रास्तनिषेधस्तु सामान्यतो—'वाप्याराम' इत्यादिनोक्त एवेति न पुनरुक्तः ॥ यद्यपि प्राक्सामान्येन कालशुद्धिरुक्ता तथाप्यावश्यकत्वे—"चैत्रे पौषे हरिस्वप्ने गुरोरस्ते मलिम्लुचे । नवोढागमनं नैव कृते पञ्चत्वमाप्नुयात् ॥ " इति बादरायणवाक्यान्नैव वधूप्रवेशः कार्यः ॥ १ ॥

## सम्मुखे दक्षिणे वा शुक्रे द्विरागमो न कार्यः—

**दैत्येज्यो ह्यभिमुखदक्षिणे यदि स्याद्गच्छेयुर्न हि शिशुगर्भिणीनवोढाः ॥ बालश्चेद्व्रजति विपद्यते नवोढा चेद्वंध्या भवति च गर्भिणी त्वगर्भा ॥ २ ॥**

द्विरागमने संमुखशुक्रदोषं प्रहर्षिणीछंदसाह—दैत्येज्य इति ॥ यदि दैत्येज्यः शुक्रोऽभिमुखे दक्षिणे गंतव्यदिगभिमुखे गंतुर्दक्षिणादिग्भागे वा स्थितः स्यात्तदा शिशुर्बालः, गर्भिणी गर्भवती, नवोढा नूतनपरिणीता, इत्येते न गच्छेयुः ॥

## दक्षिणे सम्मुखे वा शुक्रे गमने फलविभागः—

यदि व्रजेत्तदा बालः विपद्यते म्रियते । गर्भिणी त्वगर्भा गर्भरहिता स्यात् । गर्भस्राववती भवेत् । नूतनपरिणीता नवोढा वंध्या अपत्यसंभवरहिता स्यात् । यदाह बादरायणः— " अस्तं गते भृगोः पुत्रे तथा संमुखमागते । नष्टे जीवे निरंशौ वा नैव संचालयेद्वधूम् ॥ गर्भिण्या बालकेनापि नववध्वा द्विरागमे । पदमेकं न गंतव्यं शुक्रे संमुखदक्षिणे ॥ गुर्विणी स्रवते गर्भं बालो वा मरणं व्रजेत् । नवा वधूर्भवेद्वंध्या शुक्रे सम्मुखदक्षिणे ॥ "

## तस्यायं संग्रहः—

यदि शुक्रः पूर्वस्यामुदितः पूर्वदिशि गंतुः संमुख एव, पश्चिमे गंतुः पृष्ठे, दक्षिणे गंतुर्वामे, उत्तरे गन्तुः दक्षिणे स्यात् तदा पूर्वोत्तरे दिशौ न गच्छेत् । किंतु पश्चिमदक्षिणे दिशौ गच्छेत् । यदि पश्चिमायामुदितः शुक्रः पश्चिमां गंतुः संमुख एव, दक्षिणां गंतुः दक्षिणः, पूर्वां गंतुः पृष्ठे, उत्तरां गंतुर्वामः तदा पश्चिमदक्षिणे दिशौ न यायात् । किंतु पूर्वोत्तरे दिशौ गच्छेत् । " पृष्ठे भृगौ पुत्रवती प्रयाणे कांतां कुलीनां सुभगां करोति । अग्रे सुखं वै विदधाति शुक्रो वैधव्यशोकः खलु नास्ति शुक्रे ॥ " इति ॥

## तस्यापवादः—मतान्तरेण—

केचिद्दीपोत्सवप्रतिपदि नक्षत्रादिनियमं विनैव वधूप्रवेशं वाञ्छंति ॥ उक्तं च—" अस्तं गते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ । दीपोत्सवबलेनैव कन्या भर्तृगृहं विशेत् ॥ " इतिवदेतच्छिष्टाचारतो ज्ञेयम् ।

## तत्र लग्नशुद्धिः—

अत्र लग्नशुद्धिमाह बादरायणः—" उपचयगते जीवे भृगौ केंद्रमुपागते । शुद्धे लग्ने शुभाक्रांते गंतव्यं भर्तृमंदिरम् ॥ " ॥ २ ॥

## प्रतिशुक्रापवादः—

**नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः ॥**
**नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषकृन्न हि ॥३॥**

प्रतिशुक्रापवादं प्रहर्षिण्याह—नगरेति ॥ नगरप्रवेशे, विषयो देशः, आदिशब्देन ग्रामः, तस्योपद्रवे अन्यराजकृतोपद्रवे सति दुर्भिक्षादिनोपद्रवे सति गंतव्यदिशि प्रतिशुक्रदोषो नास्ति । करपीडने विवाहोद्देशेन यात्रायां सत्याम् । विबुधा देवास्तेषां यात्रा । यथा नरकोटयात्रा देवयात्रा तीर्थयात्रा प्रयागादिका । तयोः नृपपीडने नृपाद्राज्ञः सकाशात्पीडने पीडायां दंडादिकृतायां सत्यां, नववधूप्रवेशने नूतनपरिणीतायाः कन्यायाः भर्तृगृहप्रवेशे, एतेषाम-

न्यतमे सति भार्गवः संमुखदोषकृन्नहि ॥ यथाह बादरायणः-" स्वभवनपुरप्रवेशे देशानां विभ्रमे तथोद्वाहे । नूतनवध्वा गमने प्रतिशुक्रो नैव दोषकृद्भवति ॥ " इति नूतनवधूग्रहणाद्भिगमनं स्त्रीणां प्रतिशुक्रयात्रायां महादोषकृत् । तद्वाक्यं प्रागुक्तम् ॥ ३ ॥

## प्रौढस्त्रीणां द्विरागमे गोत्रपरत्वेन प्रतिशुक्रापवादान्तरम्-

**पित्र्ये गृहे चेत्कुचपुष्पसंभवः स्त्रीणां न दोषः प्रतिशुक्रसंभवः ॥**
**भृग्वंगिरोवत्सवसिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा ॥४॥**

**इति श्रीदैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्तचिन्तामणौ अष्टमं द्विरागमप्रकरणं समाप्तम् ॥ ८ ॥**

प्रौढस्त्रीणां द्विरागमने तथा गोत्रपरत्वेन प्रतिशुक्रापवादांतरमिंद्रवंशाछंदसाह-पित्र्ये इति ॥ पितुरिदं पित्र्यं-" वाय्वृतुपित्रुषसो यत् " इति यत्प्रत्ययः । तस्मिन्पित्र्ये गृहे कुचौ स्तनौ पुष्पमृतुः तत्संभवः स्यात्तदा स्त्रीणां प्रतिशुक्रसंभवदोषो नास्ति । उपलक्षणत्वादृतुः सूर्यगुरुशुद्धिराहित्यसंभवोपि दोषो नास्तीति । तदुक्तं चंडेश्वरेण-"पित्र्यागारे कुचकुसुमयोः संभवो वा यदि स्यात्पत्युः शुद्धिर्न भवति रवेः संमुखो वाथ शुक्रः । तूले लग्ने गुणवति तिथौ चंद्रताराविशुद्धौ स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिसद्म ॥ " इति ॥ वाशब्दाद्गुरुशुद्धिरपि चेन्न भवतीत्यर्थः ॥

## प्रतिशुक्रदोषः केषाश्चिन्नास्ति-

भृग्वंगिरोवत्सवसिष्ठकश्यपात्रिवंशोत्पन्नानां तथा भरद्वाजवंशोत्पन्नानामपि प्रतिशुक्रसंभवो दोषो नास्ति । यदाह बादरायणः-" कश्यपेषु वसिष्ठेषु चात्रिभृग्वंगिरःसु च । भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न दुष्यति ॥ " इति ॥ अयं चापवादो यात्रामात्रसाधारणः न द्विरागमने । एवं संमतिवाक्ये विशेषानुक्तेः । एवं प्राक्पद्योक्तोऽपवादो ध्येयः ॥ केचिच्छुभमाहुः । यदाह महेश्वरः-" एतेषां प्रतिशुक्रपातमशुभं ये वत्सभृग्वंगिरोभारद्वाजवसिष्ठकश्यपकुलोत्पन्नास्तथाऽत्रेः कुले । देशानां विषयप्लवे च नियतं न स्याद्विवाहे तथा तीर्थानां गमने तथैकनगरे ग्रामे च सौम्यं तथा ॥ " इति ॥ सोमस्यापत्यं सौम्यो बुधः-" सोमाट्ट्यण् " इति ट्यण् । बुधसांमुख्येपि भृग्वादिगोत्रोत्पन्नानामपि तथा यानमशुभं नास्ति॥ चकाराद्दुर्भिक्षाद्युपद्रवसद्भावेन्येषामपि यानमशुभं नास्तीत्यर्थः ॥ तच्चिंत्यम् ॥ मूलवाक्यस्यापवादरूपस्यानुपलंभात् । किंच-यथा साधारण्येन यस्यांकस्यांचिद्दिशि यात्रायां शुक्राधिष्ठितादिनिषेधः स च बादरायणादिवाक्यैरपोह्यते तथा बुधसांमुख्ये गमननिषेधानुक्ते अपवादस्यानुक्तत्वदर्शनात् । ननु-" प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतो नृपः । बलेन शक्रतुल्योपि हतसैन्यो निवर्तते ॥ " इति वसिष्ठोक्तिरेव बुधसांमुख्यदोषानिषेधबाधिकास्तीति ॥ किंच-कुजाय वृषभं दद्यात्स्वर्णं दद्याद् बुधाय च । तत्तत्संमुखजो दोषस्तत्क्षणादेव नश्यति ॥ " इति बुधसांमुख्यदोषनिराकरणार्थापि । तदुक्तिरेवास्ति प्रमाणामिति चेत् ॥ सत्यम् ॥ " प्रतिशुक्रं प्रतिबुधम् ' इत्यादिवाक्यैर्बुधसांमुख्यमपि दोषावहमेवेति

प्रतीयते ॥ अत्रार्थवादोऽप्यभाणि श्रीपतिना-"प्रतींदुजं भूमिपतेर्गतस्य नान्ये ग्रहास्त्राण-विधौ समर्थाः" इति ॥ त्राणं रक्षणम् । नारदेनापि-" प्रतींदुजकृतं दोषं हंतुं शक्ता ग्रहा नहि" इति ॥ तत्र गोत्रादिविषयत्वेन परिहारो योऽभिहितः स शुक्रसांमुख्ये । वचनं तु बुध-सांमुख्ये । अतो गोत्रपरिहारस्तु दोषकरवाक्यांते प्रतिशुक्रं न विद्यते इत्युक्तम (?) ॥ ननु 'प्रतिशुक्रम्' इत्यादिवाक्योपात्तस्य प्रतिबुधदोषस्याप्ययं परिहारोस्तु । दोषकथनानंतरमेवत-स्याभिधानात् । प्रतिशुक्रपदं तु मुख्यतां सूचयितुमुपात्तम् । तदभिप्रायेण सौम्यस्य तथेति महेश्वरोक्तिः साधीयसीति चेन्न ॥ यद्येषोभिमतः स्यात्सौम्यं तथेतिवद्भौमं तथेति वक्तव्यं स्यात् । तच्च नोक्तम् ॥ किंच प्रतिशुक्रपदं मुख्यतां सूचयितुमुपात्तमित्युक्तम् ॥ तदप्ययु-क्तम् ॥ कुतः ॥ शुक्रास्तदोषस्य महत्त्वोक्तः । तद्विषयकोऽयं गोत्रादिपरिहारः । " कामं व्रजेद्वा प्रतिशुक्रमस्तं गते च यायान्न जिगीषुरत्र" इति श्रीपत्युक्तेः ॥

## शुक्रास्तदोषापवादः-

शुक्रास्तदोषस्यापवादो बुधानुकूल्यमपि तेनैव-"अस्तं गतेप्यास्फुजिति प्रयायाद्बुधो यदि स्यादनुकूलवर्ती" इति ॥ अनुकूलवर्ती यातव्यदिशीष्टवर्ती । बुधप्रातिकूल्यं तु महादोषावहम् । एतद्वाक्यं प्रागभिहितम् । परंतु बुधास्तः समीचीनो वेति कैरपि वचनं युक्तिपदवीं कांचिद-भ्यधायि । तस्माद्वाचनिकेऽर्थे न युक्तिः प्रभवेदिति । बुधसांमुख्ये गोत्रादिपरिहारो न शिरो-मणिपदवीमारोहति । आदिशब्दात्-"स्वभवनपुरप्रवेशे देशानां विभ्रमे तथोद्वाहे । नूतनवध्वा गमने प्रतिशुक्रविचारणा नास्ति ॥ एकग्रामे पुरे वापि दुर्भिक्षे राष्ट्रविप्लवे । विवाहे तीर्थया-त्रायां प्रतिशुक्रो न दुष्यति ॥" इति ॥ तुल्यन्यायत्वाद्भौमसांमुख्येऽपि न । वसिष्ठऋषिवचने-ऽभावात् । किंतु शुक्रसांमुख्य एव स परिहारः सर्वोपि सर्वेषां यात्रामात्रसाधारणः । परंतु शिशुगर्भिणीनववधूनाम् 'अस्तं गते भृगोः पुत्रे' इत्यादिना (?) । बादरायणादिवाक्यात्तु विशेषफलावगतिमात्रम् । तत्रैगां शिश्वादीनां बुधसांमुख्यविचारस्तु दूरापास्त एवेत्यलमति-प्रसंगेनेति शिवम् ॥ ४ ॥ द्विरागमनप्रकरणं गद्येनोपसंहरति-इति श्रीदैवज्ञेति ॥ स्पष्टार्थम् ॥ ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्त्तचिन्ता-मणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने पुनरागमप्रकरणं संपूर्ति-मागात्किल ॥ १ ॥

इति श्रीविद्वद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्त्त-चिंतामणिटीकायां पीयूषधाराभिधायामष्टमं द्विरागमनप्रकरणं समाप्तिमगमत् ॥८॥

# अथाग्निहोत्रप्रकरणम् ९.

## अग्न्याधानसोमयागादिमुहूर्ताः-अग्न्याधानपदार्थश्च-

**स्यादग्निहोत्रविधिरुत्तरगे दिनेशे मिश्रध्रुवांत्यशशिशक्रसुरेज्यधिष्ण्ये ॥ रिक्तासु नो शशिकुजेज्यभृगौ न नीचे नास्तंगते न विजिते न च शत्रुगेहे ॥ १ ॥**

श्रीगणेशाय नमः ॥ गणनायकमाराध्य नीलकंठं गुरुं तथा ॥ अग्निहोत्रप्रकरणं व्याख्याति विदुषां मुदे ॥ १ ॥ अथाग्न्याधानप्रकरणं व्याख्यायते ॥ तत्राग्निर्धीयते श्रौतेन स्मार्तेन वा कर्मविशेषेणेत्यग्न्याधानम् ॥

### विवाहकाल एवाऽग्न्याधानम्-

तत्र प्रवदंते ॥ केचित्पाणिग्रहणसमये एव अग्न्याधानमाहुः ॥

### भ्रात्रादिभिर्विभागेऽग्न्याधानम्-( मतान्तरम् )-

अपरे पित्रा भ्रातृभिः सह विभागकाले एवाहुः ॥ उक्तं च श्रुतौ-"आवसथ्याधानं दारकाले दायाद्यकाले एकेषाम्" इति पारस्करः । दायाद्यकाले विभागकाले । एतदेवाभिप्रेत्योक्तं महेश्वरेण-"अग्न्याधानं दारकाले विधेयं कैश्चित्प्रोक्तं तच्च दायाद्यकाले" इति ॥

### वर्णविशेषेणाग्न्याधानकाला भिन्नाः-

अन्ये वसंताद्यृतुपुरस्सरेण वर्णविशेषानाहुः ॥ तदुक्तं श्रुतौ-"वसंते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकार आदधीत" इति ॥

### सोमयागे मुहूर्तापेक्षा न-श्रद्धोदयकाल एव कालः-( मतान्तरम् )

इतरे तु श्रद्धोदये एवाहुः ॥ एतदप्युक्तं श्रुतौ-"यदहरेवैनं श्रद्धोपनमेत्तदहरेवादध्यात्" इति ॥ एतच्च सोमाग्न्याधानविषयम् । यदाह आपस्तंबः" सोमेन यक्ष्यमाणो नर्तुं प्रतीच्छेन्न नक्षत्रम्" इति ॥

### सामान्यत आधानकालसंग्रहः-

तत्र पाणिग्रहणकालस्य प्रागुक्तत्वात्तत्क्षणादारभ्यमाणाग्न्याधानार्थं न मुहूर्तगवेषणा । एवं पित्रादिभिः सह यस्मिन्काले विभागो जातः तस्मिन्यथाकथंचिद्व्यतीपातभद्रादिदोषरहिते आधानं कार्यमेव ॥ तदा उत्तरायणादिकालशुद्धेर्नापेक्षा ॥ तत्रापि यदि प्रतिबन्धवशादाधानाभावो जातस्तदा कालशुद्धिर्वक्ष्यमाणविषय विचार्यैव । येषां वर्णानां वसंताद्यृतवःसोमयागार्थं नियता एवोक्तास्तेषां यद्यप्युत्तरायणविचारो नास्ति । संभवव्यभिचाराभावात् । तथापि शुक्रास्तादिदोषनिवारणार्थं मुहूर्तो गवेष्य एव ॥ येषां तु श्रद्धोदये एवाधानमिति पक्षस्तेषां सोमाधानकालः श्रद्धोदय एवेति यथाकथंचित्पंचांगशुद्धिर्विचार्या, नर्तु-

नक्षत्रादिप्रतीक्षा वारादर्वा । ' वाजपेयेन यजेत्' इति वाजपेयादीनां यागविशेषाणां शरदादृतुविशेषविहितानामपि सौम्यायनप्रतीक्षामकृत्वा शुक्रास्तादिदोषराहित्यं विचार्यम् ॥

## तत्र निर्णयः-अग्निहोत्रकालश्च-

तदयमत्र निर्णयः संपन्नः । यत्र तु कालनियमेनाधानादि विहितं तदा न मुहूर्तविचारः । यदा तु कालनियमाभावस्तदा मुहूर्तो विचार्य एवेत्यभिसंधायाग्न्याधानसोमयागादिमुहूर्तं वसंततिलकावृत्तेनाह-स्यादिति । उत्तरगे उत्तरायणगते उत्तरदिग्गते दिनेशे सूर्ये अग्निहोत्रविधिः स्यात् । यदाह नारदः-"गृहप्रवेशवैवाहप्रतिष्ठामौंजिबंधनम् । मखादिमंगलं कर्म विधेयं चोत्तरायणे ॥" इति ॥ मखस्याग्निहोत्रपूर्वकत्वात्तदारंभोपि । विवाह एव वैवाहः । स्वार्थे अण् । प्रतिष्ठा देवतादिप्रतिष्ठा । मिश्रे कृत्तिकाविशाखे । ध्रुवाणि प्रसिद्धानि । अन्त्यं रेवती । शशी मृगः । शक्रो ज्येष्ठा । सुरेज्यः पुष्यः । एतेषामन्यतमेषु ऋक्षेषु अग्निहोत्रविधिः स्यात् । यदाह श्रीपतिः-" प्राजापत्ये पूषभे सद्विदैवे पुष्य ज्येष्ठास्वैंदवे कृत्तिकासु । अग्न्याधानं ह्युत्तराणां त्रयेपि श्रेष्ठं प्रोक्तं प्राग्जनैर्विप्रमुख्यैः ॥" इति ॥

## अग्न्याधाने निषिद्धकालाः-

रिक्तास्विति ॥ रिक्ताश्चतुर्थीनवमीचतुर्दश्यः ॥ आसु अग्न्याधानं नो कार्यम् । तदुक्तं दीपिकायां-" पुष्योत्तराविशाखासु ज्येष्ठांत्याग्निकचंद्रभे । अग्न्याधानमरिक्तासु कार्यं वा देवजेहनि ॥" इति ॥ को रोहिणी । शशीति । चन्द्रमंगलगुरुशुक्रेषु नीचगतेषु तथास्तंगतेषु तथा ग्रहांतरैर्विजितेषु तथा शत्रुगृहस्थितेषु अग्न्याधानं नो कार्यम् । उक्तं च रत्नमालायां-"कुजेंदुजीवैः रिपुराशिसंस्थैः पराजितैर्नीचगृहोपगैर्वा । अस्तंगतैर्वापि परिग्रहं यः करोति हास्यं विदुषां स याति ॥" इति । कश्यपस्तु शुक्रदोषमप्याह ॥ अतएव मूलपद्ये चतुर्णामभिधानम् ॥ १ ॥

## अग्न्याधाने लग्नशुद्धिः-

**नोकर्कनक्रझषकुंभनवांशलग्ने नोऽब्जे तनौ रविशशीज्यकुजे त्रिकोणे ॥ केंद्रर्क्षषड्भवनगे च परैस्त्रिलाभषट्खस्थितैर्निधनशुद्धियुते विलग्ने ॥ २ ॥**

अथाग्न्याधाने लग्नशुद्धिं वसंततिलकयाह-नो ककेति ॥ कर्कः प्रसिद्धः । नक्रो मकरः । झषो मीनः । कुंभः प्रसिद्धः । एतेषामन्यतमे लग्ने नवांशे वा अग्न्याधानं नो कार्यम् ॥

## अग्न्याधानलग्ने निषिद्धा ग्रहाः-

तथा अब्जे चन्द्रे तनौ लग्नस्थे सति चाग्न्याधानं न कार्यम् । तथा चोक्तं श्रीपतिना-"नक्रे विलग्नेंबुचरे घटे वा तदंशके वाप्यथवा शशांके । आधानकाले द्विजपुंगवानां जातापि निर्वाणमुपैति सिद्धिम् ॥" इति ॥ ये नवांशकाद्यास्तेषामंबुचरत्वाभावात्पृथग्ग्रहणम् ॥

## मन्तान्तरं लग्ने चन्द्रे शुक्रे वा-

वराहस्तु नैतन्मन्यते ॥ मकरस्य पश्चिमार्धं कुम्भो मीनः कर्क इति। जलचरे इति । अत एवैतद्दूषणभयान्नाप्युक्तं महेश्वरेण-"कर्कनक्रघटमीनविलग्ने वा गते तनुगतेथ तदीये । लग्नमेकुमुदिनीदयिते वा नाशमेति जनितोपि हुताशः ॥" इति ॥ लग्नगचंद्रस्योपलक्षणत्वाच्छुक्रोपि लग्ने निषिद्धः । यदाह कश्यपः-" यस्यैवाधानलग्नस्थे चन्द्रे वा भृगुनंदने । उपैति तस्य जातोऽग्निर्निर्वाणं सततं ज्वलन् ॥" इति ॥

## आधानेऽनुकूलग्रहास्थित्यादयः-

रवीति ॥ सूर्यचंद्रगुरुभौमेषु त्रिकोणस्थितेषु सत्सु परैर्बुधशुक्रशनिराहुकेतुभिस्त्रिलाभषड्खस्थितैस्तृतीयैकादशषष्ठदशमस्थानस्थितैः सद्भिराधानं हितं स्यात् । यदाह श्रीपतिः-"त्रिकोणकेंद्रोपचयेषु सूर्ये बृहस्पतौ शीतकरे कुजे वा । शेषग्रहेपूपचयास्थितेषु धूमध्वजोत्पादनमामनन्ति ॥ इति धूमध्वजोऽग्निः । निर्घातस्थे केचिदाहुः अग्न्याधानम् ।

## आधानलग्नादष्टमशुद्धिरावश्यकी-

निधनशुद्धियुते अष्टमस्थाने सकलग्रहराहित्यं निधनशुद्धिः तया युते सत्याधानं शुभम् ॥ तस्मादष्टमस्थाने यः कश्चिद्ग्रहः स्यात् तदाऽशुभमेव । उक्तं च श्रीपतिना-" चन्द्रे पत्नी मृत्युगे मृत्युमेति क्षिप्रं वह्न्याधायको याजमानः ॥" धाधातोः " ण्वुल्तृचौ" इति ण्वुल् । "आतो युक्चिण्कृतोः" इति युगागमः ॥ ॥ अन्येत्वेवमाहुः ॥ निधनमष्टमं लग्नम् ॥ कस्मान्निधनमित्याकांक्षायामाधानकर्तुर्जन्मराशिजन्मलग्नाभ्यामष्टमं लग्नमित्यर्थः ॥ तस्य शुद्धिः राहित्यम् । तदभाव इति यावत् ॥ तेन युते लग्ने इति ॥ यदाह कश्यपः-"पंचांगशुद्धिदिवसे चन्द्रताराबलान्विते । चन्द्रे शुद्धियुते लग्ने चाष्टमोदयवर्जिते ॥" इति ॥

## तत्र स्वमतम्-

अत्र व्याख्याद्वये प्रमाणसद्भावाद्द्वयमपि युक्तमिति वयमुत्पश्यामः । तत्र निधनशुद्धिश्च निधनशुद्धिश्च ताभ्यां युत लग्ने इति मूलस्थस्य निधनशुद्धिपदस्य-"सरूपाणामेकशेष एकविभक्तौ" इत्येकशेषः । यथा-अन्वर्था भ्वादयः स्मृता इति तृतीयपक्षव्याख्यानावसरे भ्वादयश्चेति तंत्रावृत्त्येकशेषाणामन्यतमाश्रयणेन पदमंजरीकारादिभिर्भ्वादीनां धातुत्वमुक्तम् ॥ २ ॥

## यागकर्तृत्वयोगाः-

चापे जीवे तनुस्थे वा मेषे भौमेंबरेद्युने ॥
षट्त्र्यायेब्जे रवौ वा स्याज्जाताग्निर्यजति ध्रुवम् ॥ ३ ॥

इति श्रीदैवज्ञानन्तसुतदैवज्ञरामविरचिते मुहूर्त्तचिन्तामणौ
नवममग्न्याधानप्रकरणम् ॥ ९ ॥

अथाग्निहोत्रेण आधानलग्नवशाद्यागकर्तृत्वयोगाननुष्टुभाह—चापे इति ॥ जीवे गुरौ चापस्थे धनुःसंस्थे सति तत्रस्थे आधानलग्ने धनुराख्ये गुर्वधिष्ठिते सतीत्यर्थः ॥ अयमेको योगः ॥

## योगान्तरे—यागकर्तृत्वे—

वा अथवा भौमे मेषलग्ने सति अयं द्वितीयो योगः ॥ अथवा आधानलग्नस्थानस्थे सप्तमस्थानस्थे वा भौमे सति योगद्वयमेतत् ॥

## अन्यो योगः यागकर्तृत्वे—

अथवा अब्जे चन्द्रे षष्ठे तृतीयैकादशस्थानान्यतमस्थानस्थे योगत्रयमेतत् ॥

## अपरो योगः यागकर्तृत्वे—

अथवा सूर्ये षष्ठतृतीयैकादशान्यतमस्थानस्थे सति योगत्रयमप्येतत् ॥

## शुद्धलग्ने कृताधानस्य फलम्—

य एवंविधे लग्ने जाताग्निः अग्निहोत्रकर्ता स्यात् भवेत्स ध्रुवं निश्चयेन यजति ज्योतिष्टोमादियागं करोतीत्यर्थः ॥ उक्तं च श्रीपतिना—"लग्नस्थे धनुषि गुरावथ क्रिये वा भूसूनौ दशमगतेथ सप्तमे वा । तिग्मांशौ सहजषडायगे विधौ वा जाताग्निर्यजति न संशयं द्विजेंद्रः ॥" इति ॥

## मतान्तररीत्या फलम्—यागपदार्थश्च—

केचिदेवमाहुः ध्रुवं निश्चितं निरंतरमिति यावत् यजति देवतोद्देशेनावदानत्यागो यागस्तं करोति । निरंतरमग्निहोत्रकर्मकर इत्यर्थः ॥ यदाह कश्यपः—" लग्नस्थे चापगे जीवे मेषे वा सप्तकर्मगे ॥ कुजेऽर्के त्रिषडायस्थे चंद्रे वाग्निर्ज्वलत्यलम् ॥ " इति शिवम् ॥ ३ ॥ अथाग्निहोत्रप्रकरणं गद्येनोपसंहरति—इति श्रीदैवज्ञेति ॥ स्पष्टार्थमेतत् ॥ ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्यानेऽग्निपरिग्रहप्रकरणं संपूर्णतामभ्यगात् ॥ १ ॥

इति श्रीदैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्तचिंतामणिटीकायां पीयूषधाराभिधायामग्न्याधानप्रकरणं समाप्तिमगमत् ॥ ९ ॥



# अथ राजाभिषेकप्रकरणम् १०.

## राजत्वप्रापकसंस्कारे मुहूर्तः–

**राजाभिषेकः शुभ उत्तरायणे गुर्विंदुशुक्रैरुदितैर्बलान्वितैः ॥**
**भौमार्कलग्नेशदशेशजन्मपैर्नो चैत्ररिक्तारनिशामलिम्लुचे ॥१॥**

श्रीगणेशाय नमः ॥ गौरीतनयमाराध्य गोविंदेन सतां मुदे ॥ राजाभिषेचनाध्यायः सम्यग्व्याख्यायतेऽधुना ॥ १ ॥ अथ राजाभिषेकप्रकरणं व्याख्यायते । तत्र वैदिकेनाभिषेकाख्येन विशिष्टकर्मणा राजशब्दवाच्यपुरुषस्य संस्कारविशेषो राजाभिषेकशब्देनोच्यते । तत्र चैतन्मुहूर्त्तं वक्तुकामः कालशुद्धिं तावदिंद्रवंशयाह–राजाभिषेक इति ॥ उत्तरायणगते सूर्ये सति तथा गुर्विंदुशुक्रैरुदितैर्बलान्वितैः बृहस्पतिचन्द्रशुक्रैः उदितैः सद्भिः भौमसूर्यलग्नेशदशेशजन्मलग्नस्वामिभिः बलान्वितैः सद्भी राज्ञोभिषेकः शुभः शुभफलप्रदः स्यात् । यदाह कश्यपः–"अथातः संप्रवक्ष्यामि भूपानामभिषेचनम् । सौम्यायने सिते जीवे नास्तगे नच वृद्धगे ॥" इति ॥ ननु–'गीर्वाणांबुप्रतिष्ठा' इत्यादिना प्राग्दक्षिणायननिषेधस्योक्तत्वादेव शस्त्राणां प्रयोज्यादीनां च गुरुशुक्रास्तादिदोषरहिते काले भूपाभिषेको ज्ञास्यत एव किमनेन पुनरुक्तग्रंथेन ॥ नच कश्यपादिभिरुक्तमिति कृत्वोक्तमिति वाच्यम् ॥ तैस्तु सामान्यप्रकरणस्याकृतत्वात् । किंतु तत्कृत्ये विशेषाभिधानमेव कृतम् ॥ उच्यते ॥ 'गीर्वाणांबुप्रतिष्ठा' इत्यादिना 'वाप्यारामतडाग' इत्यादिना च सामान्यत एव कृत्येषु दोषराहित्यमुक्तम् । तत्र कस्यचिदेवं भ्रांतिः स्यात् । यदि दक्षिणायने शुक्रास्तादिदोषरहिते शुभं कर्म वाप्यारामादि कार्यं शुक्रास्तादिदोषरहितोत्तरायणेपि कार्यमिति संदेहस्तन्निरासार्थमाह–"राजाभिषेकः शुभ उत्तरायणे गुर्विंदुशुक्रैरुदितैर्बलान्वितैः" इति ॥ "सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्" इत्यादिदोषाणां 'मगधे गौडदेशे' इत्यादिना देशभेदकृतपरिहारस्य स्ववचनत्वादिति तेषां पुनरुक्तिः ॥ ननु–" सदा कृतयुगं चात्र सदा चैवोत्तरायणम् । न ग्रहास्तोदयकृतो दोषा विश्वेश्वरालये ॥" इत्यादिभिर्व्यासवाक्यैः शुक्रास्तादिदोषसहिते उत्तरायणेपि कार्यमिति तन्निरासार्थमाह–"राजाभिषेकः शुभ उत्तरायणे गुर्विंदुशुक्रैरुदितैर्बलान्वितैः । " इति॥ सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत्' इत्यादिदोषाणामपि वाराणस्यादिदेशभेदेन परिहार्यत्वात् किमित्युक्तिरिति चेन्न ॥ काशीखंडे तीर्थयात्राप्रस्तावात्तद्विषय एवापवादाः॥ तन वाराणस्यादावल्पदिनस्थास्नोः पुनरखिलदोषराहित्ये एव स्युः ॥ ननु मकरस्थगुर्वादौ मगधदेशार्थमेव पुनरुक्तिः ॥ सत्यम् ॥ नकृत्यत्यैव ( ? ) ॥ वस्तुतस्तु दोषाविस्मरणार्थमेवेयं पुनरुक्तिः ॥ न चैतावद्दोषहानार्थमेवावश्यकम् ॥ विवाहप्रकरणोक्तानां वेधादिदोषाणामपि निरासस्यावश्यकत्वात् । उक्तं च वसिष्ठेन–" तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् " इत्यलमतिप्रसंगेन ॥

## राजाभिषेकलग्नरीत्या ग्रहबलानि–

बलान्वितैः बलं सद्ग्रहाधिष्ठितत्वं तेनान्वितैः गुर्विंदुशुक्रैः सद्भी राजाभिषेकः शुभः। उक्तं च

वसिष्ठेन—"मूलत्रिकोणस्वगृहोच्चमित्रगृहस्थितैर्वापि तदंशसंस्थैः। शुभे विलग्ने सततं ग्रहेंद्रा दिशंति लक्ष्मीं विपुलां च कीर्तिम् ॥" इति ॥ अर्थान्निर्बल्यैर्गृहाणामशुभं स्यात् । तदप्युक्तं तेनैव—"स्वनीचगैः शत्रुगृहस्थितैश्च तदंशसंस्थैः स्वगृहोपगैर्वा । पापोदये शोकभयं त्वकीर्तिं दिशंति राज्ञां भृशमंतरायम् ॥" ॥ इति ॥

## राज्ञः जन्मकालग्रहबलमभिषेककाले—

भौमेति ॥ भौमार्कौ प्रसिद्धौ । लग्नेशौ जन्मलग्नस्वामिनौ दशेशौ वर्तमानजातकीयमहादशांतर्दशास्वामिनौ जन्मपो जन्मराशिस्वामी एतैरपि बलान्वितैः सद्भिः राजाभिषेकः शुभः । बलान्वितत्वमधुना व्याकृतमेव । यदाह वसिष्ठः—"आधानजन्मेशदशाधिनाथरवींदुभौमेज्यसितैर्बलिष्ठैः । उत्पातदोषादिविवर्जितेषु पदं स्थिरं स्याच्च नराधिपानाम् ॥" इति ॥ आधानं जन्म, जन्मलग्नजन्मराशी अनयोरीशौ आधानजन्मेशौ । यदाह श्रीपतिः—"विलग्नजन्मेशदशाधिनाथमार्तंडधात्रीतनयैर्बलिष्ठैः। गुर्विंदुशुक्रैःस्फुरदंशुजालैर्महीपतीनामभिषेक इष्टः॥" इति॥

## राजाभिषेके मासतिथ्यादयः—ऋते बुधममां च—

नो चैत्र इति ॥ चैत्राख्यो मासः रिक्ताः ४ । ९ । १४ । तिथयः प्रसिद्धाः । आरो भौमवारः निशा रात्रिः मलिम्लुचोऽधिकमासः एषु राजाभिषेको न शुभः । यदाह चंडेश्वरः—"नाभिषेकः शुभो वाच्यो नृपे चैत्रेऽधिमासके ॥ न भूसुते प्रसुप्ते च विष्णौ रिक्तासु रात्रिषु॥" वसिष्ठेन बुधवारस्यामावास्यायाश्च निषेध उक्तः॥ स यथा—'रिक्तास्वमायां बुधभौमवारविवर्जिते वारदिनेषु चैव । खले दिने ऋक्षनिशे तथैव न नैधने भे त्वभिषेक इष्टः ॥" इति ॥ यत्तु भीमपराक्रमेणोक्तं—"राजाभिषेको हयदुष्टदंतिसेतुच्छिदानां कृषिकर्मणां च । वादस्य च क्ष्मातनयस्य वारे प्रारंभसिद्धिं मुनयो वदंति ॥"इति—अत्र भौमवारे राजाभिषेकविधानं सेनापत्याभिषेकविषयं द्रष्टव्यम् । भौमस्य सेनापतित्वात् । "राजानो रविशीतगू क्षितिसुतो मन्त्री"इति वराहोक्तत्वात्। अन्यथा वसिष्ठचंडेश्वरोक्तौ भौमनिषेधो निर्विषयः स्यात् ॥

## मृते राजनि तत्पुत्रस्य राज्याभिषेके न कालप्रतीक्षा कार्या—

यत्तु रत्नमालायां—"मंत्रौषधानि शकुनौ च सपौष्टिकानि गोविप्रराजपितृकर्मचतुष्पदे तु" इति अत्र हि चतुष्पदाख्ये करणे राज्यं कर्तव्यमित्युक्तम् । तच्चामावास्यायामवश्यं भवत्येवेत्ययुक्तं श्रीपतिवाक्यं प्रतिभाति ॥ उच्यते ॥ जीर्णराजमरणे संजाते पुत्रादेः शीघ्रमेवाखिलदोषनिरासपूर्वकशुभमुहूर्तालब्धौ कालांतरप्रतीक्षायां च द्विपदादिभिः सर्वनाशः कृतः स्यादित्येवंविषयेपि चतुष्पदकरणे पुत्रादिरभिषेक्तव्य एवेत्येतत्परं व्याख्येयमिति युक्तं प्रतीमः ॥ उक्तं च दैवज्ञमनोहरे—"मृते राज्ञि न कालस्य नियमोत्र विधीयते । नृपाभिषेकः कर्तव्यो दैवज्ञेन पुरोधसा ॥" इति ॥ १ ॥

## राजाभिषेके नक्षत्राणि लग्नशुद्धिश्च—

**शाक्रश्रवः क्षिप्रमृदुध्रुवोडुभिः शीर्षोदये वोपचये शुभे तनौ ॥**
**पापैस्त्रिषष्ठायगतैः शुभग्रहैः केंद्रत्रिकोणायधनत्रिसंस्थितैः ॥२॥**

राजाभिषेकनक्षत्राणि लग्नशुद्धिं च इन्द्रवंशयाह शाक्रेति ॥ शाक्रं ज्येष्ठा श्रवः श्रवणः क्षिप्राणि अश्विनीपुष्यहस्ता मृदूनि मृगचित्रानुराधारेवत्यः ध्रुवाणि रोहिण्युत्तरात्रयं च एतैरुडुभिः साद्धैः राजाभिषेकः शुभः । यदाह कश्यपः-"उत्तरात्रयमैत्रैंद्रधातृचंद्रकरोडुषु ॥ सश्रुत्वश्वीज्यपौष्णेषु कुर्याद्राजाभिषेचनम् ॥ " इति ॥ ऐंद्रं ज्येष्ठा । अत्र वाक्ये द्वादश । ग्रन्थकृद्वाक्ये त्रयोदश । चित्रैकाधिका । सा च महेश्वरवाक्यालोचनेन । यथा 'तथा श्रवः क्षिप्रमृदुध्रुवेषु सौम्यग्रहस्याह्नि तिथावरिक्ते' इति । नात्र प्रमाणं पश्यामः ॥ रत्नमालावाक्यं भाविष्यतीति चेन्न ॥ "मैत्रशाक्रकरपुष्यरोहिणीवैष्णवेषु तिसृषूत्तरासु च । रेवतीमृगशिरोऽश्विनीषु च क्ष्माभृतां समभिषेक इष्यते ॥ " इति ॥ चंडेश्वरोपि-"मैत्रं शाक्रं श्रवणः पुष्यं त्रीण्युत्तराणि चाश्विकरैः । पौष्णं प्राजापत्यं मृगशिर " इति ॥ तस्माच्चित्राग्रहणं निर्मूलम् ॥

## राजाभिषेके लग्नानि-शीर्षोदयपदार्थश्च-

शीर्षोदय इति ॥ शीर्षोदया मिथुनासिंहकन्यातुलावृश्चिककुंभाख्याः । यदाह वराहः-"गोजाश्वकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव । शीर्षोदया दिनबलाश्च भवंति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥ " इति ॥ एषु शीर्षोदयराशिषु अभिषेकलग्ने वा अथवा उपचये विशेषानुक्तेः । स्वजन्मलग्नात्स्वजन्मराशितो वोपचयभवने त्रिषडेकादशभानामन्यतमे तनौ लग्नगे वा सति शुभे शुभग्रहक्रांते शुभग्रहेक्षिते वा राजाभिषेकः शुभः । यहाह वसिष्ठः-"शीर्षोदये चोपचये ग्रहे वा स्वजन्मलग्नादय लग्नगोपि । शुभग्रहैर्युक्तनिरीक्षिते वा स्थिरं पदं स्यात्सततं हि राज्ञाम् ॥" इति ॥ अपिशब्दात्स्वजन्मराशेरप्युपचयभवनं ग्राह्यम् । यदाह कश्यपः-"जन्मराशेरुपचये लग्ने शीर्षोदये स्थिरे । शुभग्रहेक्षितयुते नृपाणां नेक्षिते परैः ॥ इति ॥

## तथैव ग्रहाः शुभाः-

परैः पापग्रहैस्तृतीयषष्ठैकादशस्थानस्थितैः शुभग्रहैः ; प्रथमचतुर्थसप्तमदशमनवमपञ्चमैकादशद्वितीयतृतीयस्थानस्थितैः राजाभिषेकः शुभदः । यदाह वसिष्ठः-"त्रिकोणकेंद्रत्रिधनेषु सौम्यैस्त्रिषष्ठलाभर्क्षगतैश्च पापैः । षष्ठाष्टलग्नव्ययवर्जितेन चंद्रेण राज्ञां शुभदोऽभिषकः ॥ " इति ॥ २ ॥

## राजाभिषेकलग्नात् पापग्रहस्थितिविषयेऽपवादः-

**पापैस्तनौ रुङ् निधने मृतिः सुते पुत्रार्तिरर्थव्ययगैर्दरिद्रता ॥**
**स्यात्खेऽलसो भ्रष्टपदो द्युनांबुगैः सर्वं शुभं केंद्रगतैः शुभग्रहैः ॥३॥**

## स्थानविशेषेषु ग्रहेषु सत्सु राजाभिषेकफलानि-

स्थानविशेषे पापग्रहैरशुभं फलं सापवादं इंद्रवंशयाह-पापैरिति ॥ ( १ ) तनौ लग्ने पापग्रहैः रुक् रोगः स्यात् । राज्ञ इति शेषः ( २ ) निधने अष्टमस्थाने पापग्रहैः मृतिः ( मृत्युः ) स्यात् । ( ३ ) सुते पञ्चमस्थाने पापग्रहैः पुत्रार्तिः पुत्रजनितपीडा स्यात् । ( ४ ) अर्थव्ययगैः द्वितीयद्वादशस्थानस्थितैः पापैः दरिद्रता दारिद्र्यं स्यात् । ( ५ )-खे दशमे पापग्रहैः अलसो निरुद्योगः । ( ६ ) द्यूनांबुगैः सप्तमचतुर्थस्थानस्थितैः पापग्रहैर्भ्रष्टपदो भ्रष्टैश्वर्यः स्यात् । ( ७ )-उपलक्षणत्वात् षष्ठाष्टमद्वादशस्थानस्थितश्चंद्रोपि मृत्युदः ।

यदाह वसिष्ठः–" पापग्रहैः स्वांत्यगतैश्च निःस्वो रोगी विलग्नोपगतैर्भवेत्सः। पदच्युतः सप्तचतुर्थगैस्तु पुत्रस्थितैः सर्वसुतैर्विहीनः ॥ " इति ॥ 'नूनं व्ययाष्टारिगतः शशांकः क्षितीश्वरं हंति तदा बलिष्ठः' इति बलिष्ठशब्दोपादानान्निर्बलश्चंद्रः व्ययाष्टमषष्ठगतो न दुष्टफलद इति तात्पर्यम्।

## राजाभिषेकदोषापवादः–ग्रहबलैः–

अपवादमाह–सर्वमिति। केंद्रगतैः शुभग्रहैः सर्वं प्रागुक्तं दुष्टफलं शुभं शुभोदर्कं स्यात् ॥३॥

## राजाभिषेके संपत्स्थैर्यकारकं योगद्वयम्–

**गुरुर्लग्नकोणे कुजोऽरौ सितः खे स राजा सदा मोदते राजलक्ष्म्या॥**
**तृतीयायगौ सौरिसूर्यौ खबंध्वोर्गुरुश्चेद्धरित्री स्थिरा स्यान्नृपस्य ४**

**इति श्रीदैवज्ञानन्ततनूजदैवज्ञरामसूरिविरचिते मुहूर्तचिंतामणौ दशमं राजाभिषेकप्रकरणम् ॥ १० ॥**

अथाभिषेके राज्ञः संपत्स्थैर्यकर्तृ योगद्वयं भुजंगप्रयातेनाह–गुरुरिति ॥ लग्ने गुरुश्चेत्स्यादथवा कोणे नवमे पंचमे वा गुरुः स्यात् कुजो मंगलोऽरौ शत्रुगृहे षष्ठे स्यात् सितः शुक्रः कर्मगो दशमगः स्यात् एतादृशे अभिषेकयोगे यो राजा अभिषिच्यते स राजा सर्वदा सर्वकालं राजलक्ष्म्या मोदते। अयमेको योगः। यदाह वसिष्ठः–"यस्याभिषेके पुरुहूतमंत्री लग्ने त्रिकोणे यदि वा भवेत्सः। षष्ठः कुजः कर्मगतश्च शुक्रः स मोदते विक्रमराजलक्ष्म्यां ॥" इति॥

## राजाभिषेके संपत्स्थैर्यकारको द्वितीयो योगः–

अथापरो योगः। सौरिसूर्यौ तृतीयायगौ स्यातां यथासंख्य शनिस्तृतीये सूर्यः रविः एकादशे स्यात् गुरुः खबंध्वोः खे दशमे बंधौ चतुर्थे वा चेद्गुरुः स्यात् एवंविधे योगेऽभिषिक्तस्य नृपस्य राज्ञः धरित्री पृथ्वी स्थिरा सदा हस्तगता स्यात्। यदाह कश्यपः–"त्रिलाभस्थः शनिः सूर्यश्चतुर्थे वांबरे गुरुः। यस्याभिषेकः क्रियते तत्र तस्य मही स्थिरा ॥" इति ॥ श्रीपतिरपि–"त्रिलाभसंस्थौ शनितिग्मरश्मी मेषूरणे बंधुगृहे गुरुश्च। यस्यात्र योगे क्रियतेऽभिषेकः संपत्स्थिरा तस्य चिरायुरेवः ॥" इति ॥ मेषूरणं दशमम् ॥ केचित्त्रिलाभारिगौ सौरिसूर्याविल्याहुः ॥ अन्यत्समानम्। तृतीयैकादशषष्ठानामन्यतमस्थानद्वये स्थितौ सौरिसूर्यौ स्यातामित्यर्थः। एतदपि युक्तमेव। यदाह वसिष्ठः–"दुश्चिक्यलाभारिगताविनार्की खस्थोऽमरेज्यो यदि बंधुगेहे। यस्यात्र योगे क्रियतेऽभिषेकः संपत्स्थिरा तस्य चिरायुरेव ॥" इति ॥ अत्र वचनद्वयप्रामाण्याद्विकल्प इति शिवम् ॥ ४ ॥ राजाभिषेकप्रकरणं गद्येनोपसंहरति–इति श्रीदैवज्ञानंतेति ॥ स्पष्टार्थमेतत् ॥ ज्योतिर्विद्वरनीलकंठविदुषः श्रीचंद्रिकायास्तथा पुत्रेणाहिगवीप्रसारितधिया मौहूर्त्तचिंतामणेः ॥ गोविंदेन विनिर्मिते नयनिधौ पीयूषधाराभिधे व्याख्याने ह्यभिषेचनप्रकरणं राज्ञोगमत्पूर्णताम् ॥ १ ॥

इति श्रीविद्वद्दैवज्ञमुकुटालंकारनीलकंठज्योतिर्वित्पुत्रगोविंदज्योतिर्विद्विरचितायां मुहूर्त्तचिंतामणिटीकायां पीयूषधाराभिधायां दशमं राजाभिषेकप्रकरणं समाप्तिमगमत् ॥१०॥

---

# अथ यात्राप्रकरणम् ११.

### यात्राधिकारिणः—यात्रापदार्थश्च—

**यात्रायां प्रविदितजन्मनां नृपाणां दातव्यं दिवसमबुद्धजन्मनां च॥ प्रश्नाद्यैरुदयनिमित्तमूलभूतैर्विज्ञाते ह्यशुभशुभे बुधैः प्रदद्यात् ॥१॥**

श्रीगणेशाय नमः ॥ पार्वतीहृदयपद्मभास्करं वक्रतुण्डमघसंघवारणम् ॥ तं प्रणम्य कुरुते नयान्वितां यात्रिकप्रकरणस्य दीपिकाम् ॥ १ ॥ अथ यात्राप्रकरणं व्याख्यायते । तत्र किंचित्कार्यमुद्दिश्य देशांतरगमनं—यात्रा । सा च संक्षेपतो द्विविधा—एका समरविजययात्राऽपरा—सामान्ययात्रा । तत्र शत्रुनगरजयार्थं वक्ष्यमाणयोगलग्नजातकोक्तराजयोगलग्नेषु प्राधान्येन यात्रा सा—समरविजयाख्या ॥ यद्यपि कानिचिन्नगराणि विनैव युद्धं कटकबाहुल्यादेव वशं यांति । तथापि युद्धसंभावनास्त्येव । या द्रव्यार्जनार्थं वाराणस्यादितीर्थदर्शनार्थं वा तिथ्यादिशुद्धिमंगीकृत्य यात्रा सा—सामान्ययात्रा । तदुक्तं वसिष्ठेन—"परविषये विजयार्थं गंतुर्यात्रा तु समरविजयाख्या । निखिलाऽपरयात्रा या सामान्या सा भवेद्द्विविधा । कथिततिथिवासरर्क्षेष्वभिमतफलदा भवेच्च सामान्या । समराह्वया च यात्रा योगाविलग्नाक्षितीशयोगेषु ॥" इति ॥ तत्र यात्राप्रकरणं प्रारिप्सुर्ग्रंथकृद्यात्राधिकारिणस्तावत्प्रहर्षिणीछंदसाह—यात्रायामिति ॥ वैरिव्यतिरिक्तसकललोकहितकारित्वान्नृपस्य वक्ष्यमाणशुभाशुभसमुदायविचारस्य सकलशिष्टसंमतत्वेन तदधीनत्वाच्च नृपग्रहणम् ॥ न च नृपग्रहणाद्राज्ञामेवैष विचारो युक्त इति वाच्यम् ॥ वक्ष्यमाणयोगलग्नेषु प्रतिश्लोकं राजपदानुपादानप्रसंगात् ॥ प्रकरणादेतल्लाभादविस्मरणार्थमिति चेन्न ॥ दिक्छूलादावप्यविस्मरणार्थं नृपग्रहणं कर्त्तव्यं स्यात् । तस्माद्यथासंभवं राजव्यतिरिक्तस्य ब्राह्मणादेरप्येष विचार उपयोज्यः । एवमेव च वसिष्ठाद्यृषिवाक्येष्वपि समाधेयम् ॥

### जन्मकुण्डलीस्थग्रहद्वारा शुभमशुभं ज्ञात्वा यात्रामुहूर्तो देयः—

प्रविदितं छायाघटिकादिना ज्ञातं जन्म जन्मसमयो लक्षणया तत्कालीनलग्नकुण्डलीस्थशुभाशुभग्रहसूचितशुभाशुभफलोदर्कज्ञानं येषां तेषां नृपाणां यात्रायां, दिवसं दातव्यं यात्रादिनं देयमित्यर्थः । 'वा तु क्लीबे दिवसवासरौ' इति दिवसशब्दो नपुंसकलिंगः । तत्र ज्ञानं जातकशास्त्राधीनम् । शुभफलदग्रहस्य दशायामंतर्दशायां च राज्ञा यात्रा विधेया ॥

### अशुभग्रहदशायां न यात्रा कार्या—

अशुभफलप्रदग्रहस्य दशायामंतर्दशायां च यात्रा नैव विधेया । यदाह वराहः—"विदिते होराराशौ स्थानादिबले ग्रहाणां च । आयुषि च परिज्ञाते शुभमशुभं यातुरिह वाच्यम् ॥" इति ॥ वसिष्ठोपि:—"निखिलगुणयुतानां राज्ञां कथयामि विधानमत्र यात्रायाम् । जातकमवलोक्य वदेत्फलसिद्धिस्त्वन्यथा मृषा भवति ॥" इति ॥

## अज्ञातजन्मकालस्य यात्रायामुपायः–शुभाशुभद्वारा–

ननु यस्य दैवाज्जन्मकालो न विदितस्तस्य कथं यात्रा स्यादित्यत आह। अबुद्धेति। अबुद्धमज्ञातं जन्म जन्मकालो येषां तेषामपि प्रश्नाद्यैः पृच्छोपश्रुत्यादिभिरशुभे शुभे विज्ञाते निर्ज्ञाते सति बुधो यात्रादिवसं प्रदद्यात्। कीदृशैः। उदयो दिनेदिने राज्याभिवृद्धिः। अथवा लग्नं निमित्तं शकुनादि। एतदादीनि वस्तूनि मूलभूतानि निदानकारणानि येषां तैः। यदाह नारदः–"अज्ञातजन्मनां नृणां फलाप्तिर्घुणवर्णवत्। प्रश्नोदयनिमित्ताद्यैस्तेषामपि फलोदयः॥" इति॥ नन्वत्र नारदवाक्ये अज्ञातजन्मनः पुंसो यात्राफलं घुणाक्षरतुल्यमिति पूर्वार्द्धे उक्तम्। प्रश्नादिना तु तादृश्यपि फलाप्तिरिति पूर्वापरविरोधः॥ उच्यते॥ प्रश्नादिना हि शुभाशुभनिर्णये कृते निष्पन्नमपि यात्राफलं घुणाक्षरतुल्यम्। घुणः कीटविशेषः तेन यथाशक्ति काष्ठे भिन्ने तत्र दैवादेकः ककारादिको वर्णो जातस्तद्वदिदम्। यदा तु प्रश्नादिना शुभनिर्णयसद्भावे क्रियमाणा यात्रावश्यफलदेति न कोपि विरोधः॥

## यात्राप्रश्नादिप्रकारः–राज्ञां विषये–

विशेषमाह बृहद्यात्रायां वराहः–"तस्मान्नृपः कुसुमपुष्पफलाग्रहस्तः प्रातः प्रणम्य रवये हरिदिङ्मुखस्थः॥ होरांगशास्त्रकुशलान्हितकारिणश्च संगृह्य दैवगणकान्सकृदेव पृच्छेत्॥ अथ नृपतिसमीपे दैववित्पृष्टमात्रः फलमुदयनिमित्तैस्तर्कयेच्छास्त्रदृष्ट्या। सदसि सदिति वाच्यं यद्यपि स्यादनिष्टं स्फुटमपि कथनीयं मंत्रिणे भूभुजे वा॥" इति॥ १॥

## प्रश्नादेव यात्रायां शुभाशुभफलम्–

**जननराशितनू यदि लग्नगे तदधिपौ यदि वा तत एव वा॥**
**त्रिरिपुखायगृहं यदि वोदयो विजय एव भवेद्वसुधापतेः॥ २॥**

ज्ञाताज्ञातजन्मनां पुंसां साधारण्येन यात्रा वक्ष्यते। तत्र ज्ञातजन्मनां जातकाद्यवगतशुभफलानां यात्राविचारोऽल्पायाससाध्यः। अज्ञातजन्मनां तु जातकशास्त्रे प्रश्नाद्यनुक्तेः कथं तद्यात्रानिर्वाह इत्याशंक्य शुभफलयात्रोवदकं प्रश्नं द्रुतविलंबितेनाह–जननेति॥ नन्वत्र कथमज्ञातजन्मत्वं यावता जन्मराशिलग्नज्ञानं विना समयज्ञानं नैव भवेत्॥ सत्यम्॥ यद्यपि राशिलग्नज्ञानं जातम्॥ तथापि विशिष्य जातकागमजशुभफलदग्रहदशानवगमादज्ञातजन्मत्वं ज्ञेयम्। अतएव राशिलग्नज्ञानाभावे "यदि पृच्छितनौ" इति प्रश्नं वक्ष्यति॥

## ४ राज्ञो जयो यात्रायां प्रश्नवशाच्चतुर्धा–

(१)–जननं जन्म तत्संबंधिनी राशिलग्ने ते यदि प्रश्ने स्यातां जन्मराशिर्जन्मलग्नं वा यदि प्रश्नलग्नं स्यात्तदा वसुधापते राज्ञो विजय एव। (२)–वा अथवा तदधिपौ जन्मलग्नराश्योः स्वामिनौ लग्नगतौ स्यातां तदापि वसुधापतेर्विजयः। (३)–अथवा तत एव ताभ्यामेव जन्मलग्नजन्मराशिभ्यामेव त्रिरिपुखायगृहं तृतीयषष्ठदशमैकादशानामन्यतमं गृहं यद्युदयो लग्नं स्यात्तदापि वसुधापतेर्विजय एव। शत्रुक्षय एव स्यादित्यर्थः॥ यदाह नारदः–

"जन्मोदये जन्मराशौ तयोरीशस्य भेपि वा । ताभ्यां त्र्यायारिदशमे यातुः शत्रुक्षयो भवेत् ॥" इति ॥ ( ४ )-अत्र तदीशः शुभग्रहश्चेल्लग्नगोपेक्षित इत्यपि विशेषो ध्येयः । यदाह वसिष्ठः- "जन्मराशौ लग्नगते तदीशे वापि लग्नगे । अभीष्टफलदा यात्रा राशीशश्चेच्छुभग्रहः ॥ जन्मलग्ने लग्नगते तदीशे वापि लग्नगे । अर्थलाभप्रदा यात्रा लग्नेशश्चेच्छुभग्रहः ॥" इति ॥ केचित्ताभ्यामित्यनेन जन्मलग्नजन्मराश्यधिपाभ्यामित्याहुः ॥ तन्न ॥ " जन्मराशिविलग्नाभ्यां लग्ने वोपचये गृहे । संपूर्णफलदा यात्रा तथैव विजयप्रदा ॥ " इति वसिष्ठेन कंठत एव जन्मराशिविलग्नाभ्यामित्युक्तत्वात् ॥ २ ॥

### ६ जययात्रा-शीर्षोदयाश्च-

**रिपुजन्मलग्नभमथाधिपौ तयोस्तत एव वोपचयसद्म चेद्भवेत् ॥**
**हिबुके द्युनेथ शुभवर्गकस्तनौ यदि मस्तकोदयगृहं तदा जयः॥३॥**

अथान्यं प्रश्नं मंजुभाषिणीछन्दसाह-रिपुजन्मलग्नभमिति ॥ ( १ )-रिपोः शत्रोर्जन्मलग्नभं यज्जन्मलग्नं जन्मराशिश्च तच्चेत्प्रश्नलग्नाद् हिबुके चतुर्थे द्युने सप्तमे वा स्यात्तदा राज्ञः पराजयो भवेत् । ( २ )-अथवा तत एव ताभ्यां शत्रोर्जन्मलग्नजन्मराशिभ्यामेव चोपचयगृहं त्रिषडेकादशदशमानामन्यतमगृहं प्रश्नलग्नाद्धिबुके चेज्जयः । ( ३ )-अथवा तयोः शत्रुजन्मलग्नराश्योरधिपौ स्वामिनौ प्रश्नलग्नाद्धिबुके द्युने वा स्यातां तदापि विजय एव । ( ४ ) अथवा तनौ प्रश्नलग्ने शुभवर्गः शुभग्रहाणां यः षड्वर्गः स चेत्स्यात्तदापि विजय एव । ( ५ )-अथवा यदि मस्तकोदयाः शीर्षोदयराशयः प्रश्नगताश्चेत्स्युस्तदापि जय एव । शीर्षोदयराशीनाह वराहः-" गोजाश्विकर्किमिथुनाः समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव । शीर्षोदया दिनबलाश्च भवंति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम् ॥ " इति ॥ पृथुरोमा मीनः । श्रीपतिः-"इदमप्यरिसंभवं यदास्ते हिबुके वा विजयस्तदापि यातुः । शिरसोदयमेति यश्च राशिर्जयकृत्सोप्युदये तथेष्टवर्गः ॥ " इति ॥ ( ६ )-यदा अस्ते इति पदच्छेदः । अस्ते सप्तमस्थाने इदंशब्देन प्रागुक्तपद्योक्तार्थः परामृश्यते । " जन्मराशिरुत जन्मविलग्नं तत्पती उदयगौ यदि वा स्तः । आयकर्मरिपुभान्युत ताभ्यां शत्रुसंक्षयमवहि तदानीम् ॥ " इति ॥ जन्मराशिरित्यादिकं सर्वं शत्रुसमुद्भवं चेदस्ते सप्तमस्थाने स्यादथवा हिबुके स्यात्तदापि यातुर्नृपस्य विजय इत्यर्थः । वराहोपि-" उदयमुदयपं वा जन्मभं जन्मपं वा तदुपचयगृहं वा वीक्ष्य लग्ने यियासोः । विनिहतमरिपक्षं विद्धि शत्रोरिदं वा हिबुकगृहसमेतं पृच्छतोऽस्थितं वा ॥ " इति ॥ ३ ॥

### अज्ञातजन्मनां यात्रायां प्रश्नलग्नाच्छुभफलम्-चतुर्धा-

**यदि पृच्छितनौ वसुधा रुचिरा शुभवस्तु यदि श्रुतिदर्शनगम् ॥**
**यदि पृच्छति चादरतश्च शुभग्रहदृष्टयुतं चरलग्नमपि ॥ ४ ॥**

अथाज्ञातजन्मनां शुभफलदप्रश्नं तोटकच्छन्दसाह-यदीति ॥ ( १ ) अत्र वसुधापतेर्जय

इत्यनुवर्त्तते। यदि पृच्छितनौ प्रश्नलग्ने वसुधा भूमी रुचिरा स्यात्। (२)–अथवा यदि शुभवस्तु मांगलयवस्तु वस्त्राभरणादि श्रुतिदर्शनगं श्रवणगोचरं वा। दर्शनमत्र चाक्षुषम्। (३)–अथवा प्रष्टा आदरतो दैवज्ञं पृच्छति तदा वसुधापतेर्जयः स्यादिति सर्वत्र व्याख्येयम्। यदाह श्रीपतिः–"मनोरमा भूर्यदि पृच्छतः स्यान्मांगलयवस्तु श्रुतिदर्शने स्तः। यद्वादरात्पृच्छति वा ग्रहज्ञं तदादिशेदस्ति जयस्तव इति॥" (४)–अथवा चरलग्नं मेषकर्कतुलामकराणामन्यतमं यदि प्रश्नलग्नं शुभग्रहैः दृष्टं युतं वा तदापि राज्ञो जयः। "करोति राशिर्गमनं फलं च चरो विलग्ने शुभदृष्टयुक्तः" इति श्रीपत्युक्तेः॥४॥

## ज्ञाताज्ञातजन्मनां यात्रायामशुभदः प्रश्नः–

**विधुकुजयुतलग्ने सौरिदृष्टेऽथ चन्द्रे मृतिभमदनसंस्थे लग्नगे भास्करेऽपि॥ हिबुकनिधनहोराद्यूनगे वापि पापे सपदि भवति भंगः प्रश्नकर्त्तुस्तदानीम्॥५॥**

ज्ञाताज्ञातजन्मनां पुंसां साधारण्येनाशुभफलदं प्रश्नं मालिनीछंदसाह–विध्विति॥(१) विधुकुजयुते चंद्रमंगलयुक्ते लग्ने सौरिणा शनिना दृष्टे तदा प्रश्नकर्त्तुर्नृपादेर्भंगः शत्रुतः पराजयो नाशो वा स्यात्। अथ चंद्रे मृतिभमदनसंस्थेऽष्टमसप्तमसंस्थे लग्नगे च भास्करे सत्येवंविधे योगे प्रष्टुर्भंगः स्यात्। (२)–अत्र अपिशब्दोऽव्ययानामनेकार्थत्वाद्विपर्ययार्थः॥ तथाहि–अपिविपर्यये वा सति भास्करे मृतिभमदनसंस्थे चन्द्रे लग्नगे च सति एवंविधे योगे प्रष्टुर्भंगः स्यात्। उक्तं च वराहेण–"सचंद्रे रुधिरे लग्ने भंगः सूर्यात्मजेक्षिते। द्यूननैधनगे चंद्रे लग्ने याते दिवाकरे॥ विपर्यये वा यातस्य त्रासभंगवधागमः॥" इति॥(३)–वा अथवा पापग्रहे चतुर्थाष्टमलग्नसप्तमस्थानानामन्यतमस्थे सति प्रष्टुर्भंगः स्यात्। उक्तं च वराहेण–"निधनहिबुकहोरासप्तमर्क्षेषु पापा न शुभफलकराः स्युः पृच्छतां मानवानाम्। दशमभवनयुक्तेष्वेषु सौम्याः समस्ताः सदसदिदमशेषं यानकाले विचिन्त्यम्॥" इति॥५॥

## यदभिमुखं यायात्तद्दिग्ज्ञानम्–

**त्रिकोणे कुजात्सौरिशुक्रज्ञजीवा यदैकोपि वा नो गमोर्काच्छशी वा॥ बलीयांस्तु मध्ये तयोर्यो ग्रहः स्यात्स्वकीयां दिशं प्रत्युतासौ नयेच्च॥६॥**

याता कस्यां दिशि गमिष्यतीति प्रश्ने निर्णयं भुजंगप्रयातेनाह॥ त्रिकोणे इति॥

## अस्यां दिशि न यास्यति–

(१)–कुजान्मंगलात्त्रिकोणे नवमपंचमे सौरिशुक्रज्ञजीवाः शनैश्चरशुक्रबुधगुरवश्चेत्स्युरथवा एकोपि वा सौरिशुक्रज्ञजीवानामन्यतमश्चेत्त्रिकोणे स्यात्तदा याता यां दिशमुद्दिश्य जिगमिषति तत्र दिशि गमो गमनं न स्यात्। (२) वा अथवाऽर्काच्छशी त्रिकोणे चेत्स्यात्तदाप्युद्दिष्टदिग्गमनं न स्यादेव॥

## गमिष्यद्दिग्ज्ञानम्-

तर्हि कस्यां दिशि गमनं स्यादित्यत आह--बलीयानिति । तयोर्मध्येऽधुनोक्तोद्दिष्टदिक्प्रतिबंधकारकयोर्मध्ये यो ग्रहो बलवान् स्यात्स्वकीयां दिशं प्रत्युत सांप्रतं नयेत् । च पादपूरणे । यदाह वराहः-"एकोपि जीवज्ञसितासितानां कुजात्त्रिकोणे रवितोथवेंदुः । यत्रोद्यतस्तत्र न याति याता तयोर्बलीयान्नयति स्वकाष्ठाम् ॥" इति ॥ काष्ठां दिशम् । ग्रहदिशस्तु-'सूर्यः सितो भूमिसुत' इत्यादिना वक्ष्यति ॥ ६ ॥

## गमिष्यद्दिग्ज्ञानोपायः-

**प्रश्ने गम्यदिगीशात्खेटः पञ्चमगौ यः ।**
**बोभूयाद्बलयुक्तः स्वामाशां नयतेऽसौ ॥ ७ ॥**

अथैतादृशं द्वितीयं योगं मदलेखाछंदसाह-प्रश्ने इति ॥ गम्यदिगीशात् गंतुमिष्टा या दिक् तस्याः ईशः स्वामी प्रश्ने प्रश्नलग्ने यस्मिन्स्थाने स्यात्ततः पञ्चमे स्थाने यो ग्रहो बलयुक्तो बोभूयात् बलयुक्तो भवेत्तदासौ ग्रहः स्वां स्वीयामाशां दिशं नयते प्रापयति । उक्तं च वराहेण-"यात्रादीगीशाद्यदि पञ्चमेऽन्यो गृहे ग्रहो वीर्ययुतस्तु तिष्ठेत् । समुद्यता सा कथितानि मुक्त्वा फलानि वीर्यान्नयति स्वकाष्ठाम् ॥" इति ॥

## प्रकारान्तरम्-

अन्यदपि योगान्तरं तेनैवोक्तम्-"परस्परं सौरिकुजौ रवींदू त्रिकोणगौ भार्गवलोहितौ वा । फलं यदुक्तं तदशेषमेव विनाश्य पश्चान्नयाति स्वकाष्ठाम् ॥" इति ॥ ७ ॥

## यात्राकालादिनिर्णयः-

**धनुर्मेषसिंहेषु यात्रा प्रशस्ता शनिज्ञोशनोराशिगे चैव मध्या ।**
**रवौ कर्कमीनालिसंस्थेतिदीर्घा जनुः पञ्चसप्तत्रितारा्श्च नेष्टाः ॥८॥**

अथैवं प्रश्नलग्नात्प्रष्टुः शुभाशुभे निर्णीय यात्राकालादि भुजंगप्रयातेनाह-धनुर्मेषेति ॥ रवौ धनुर्मेषसिंहस्थिते सति यात्रा प्रशस्ता शुभफलदा । शनिज्ञोशनोराशिगे मकरकुम्भकन्यामीनवृषतुलागते रवौ यात्रा मध्या मध्यमफलदानामप्यशुभफलदेत्यर्थः ॥

## बहुकालसाध्या यात्रा-

कर्कमीनालिसंस्थे रवौ अतिदीर्घा बहुकालसाध्या यात्रा । हीनफलेत्यर्थः । यदाह लल्लः-"यात्राजसिंहतुरगोपगते वरिष्ठा मध्याशनैश्चरबुधोशनसां गृहेषु ॥ भाना कुलीरवृषवृश्चिकगेऽतिदीर्घा शस्तस्तु देवलमतेऽध्वनिपृष्ठगोऽर्कः ॥" ॥

## पृष्ठगसूर्यप्राशस्त्यं-यात्रायाम्-पृष्ठगसूर्यस्वरूपं च-

शस्त इति । देवलाचार्यमतेऽध्वानि मार्गेऽर्कःसूर्यः पृष्ठगः शस्तः । पृष्ठगत्वं तु भ्रमणवशेन । सूर्यो ह्यहोरात्रमध्ये उदयकालादारभ्य प्रहराष्टकेन प्रदक्षिणं प्राच्याद्यष्टौ दिशो भ्रमतीति । यदाह वसन्तराजः-" दग्धा दिगैशी ज्वलिता दिगैंद्री प्रधूमिता चानलदिक् प्रभाते । इत्येवमेव प्रहराष्टकेन भुंक्ते दिशोऽष्टौ सविता क्रमेण ॥ दग्धा दिगुक्ता दिननाथमुक्ता विवस्वदाभा भवति

प्रदीप्ता । संधूमितायां सविता प्रयाता शेषादिगंताः खलु पंचशांताः ॥" इति ॥ एतेन भ्रमणप्रकारेण यस्यां दिशि यस्मिन् प्रहरे भ्रमणसंभवः सा दिक् सूर्यसंमुखेत्युच्यते । तत्पंचमी दिक् सूर्यपृष्ठगतेत्युच्यते इति पितृचरणा व्याचख्युः ॥

## सूर्यपृष्ठादिस्वरूपनिर्णयः स्वमतेन-

वयं त्वेवं व्याकुर्मः द्वादशराशिचक्रभ्रमवशेन यस्यां दिश्यर्कः स्थितस्तां पृष्ठतः कृत्वा यायादित्यर्थः । यथा लग्नस्थेऽर्के पश्चिमां दिशं गच्छेत् । चतुर्थस्थे सूर्ये दक्षिणां दिशं गच्छेत् । सप्तमे सूर्ये पूर्वां गच्छेत् । दशमस्थे सूर्ये उत्तरां दिशं गच्छेत् । यदाह-देवलः-"लग्नस्थे वरुणाशां हिबुकस्थे दक्षिणां रवौ यायात् । सप्तमगे पूर्वाशां मेषूरणसंस्थिते सौम्याम् ॥" इति॥ एवं विदिक्ष्वपि तुल्यन्यायत्वाज्ज्ञेयम् यथा द्वितीयस्थे तृतीयस्थे वा सूर्ये नैर्ऋतीं गच्छेत्। पंचमस्थे षष्ठस्थे वा सूर्ये आग्नेयीं गच्छेत् । अष्टमस्थे नवमस्थे वा सूर्ये ऐशानीं गच्छेत् । एकादशस्थे षष्ठस्थे वा सूर्ये वायव्यां गच्छेदिति ॥

## तारानिषेधः यात्रायाम्-

तारानिषेध उच्यते ॥ जनुरिति ॥ स्वजन्मनक्षत्रादिननक्षत्रं यत्संख्यं स्यात्तन्नवभक्तमवशिष्टाः प्रथमसप्तमपंचमतृतीयाख्यास्ताराश्चेत्स्युस्तदा नेष्टाः निषिद्धाः । तदुक्तं रत्नमालायां श्रीपतिना-'त्यक्त्वा त्रिपंचादिमसप्ततारा:' इति ॥ नारदोपि-'विपंचसप्तत्र्याद्येषु यात्राभीष्टफलप्रदा' इति ॥ जनुरित्यादिनक्षत्रोक्तिसमीपे वक्तव्यमप्यत्रोक्तं पादपूरणार्थम् ॥ ८ ॥

## तिथिनक्षत्रशुद्धिर्यात्रायाम्-

**न षष्ठी न च द्वादशी नाष्टमी नो सिताद्या तिथिः पूर्णिमाभा न रिक्ता ॥ हयादित्यमित्रेंदुजीवांत्यहस्तश्रवोवासवैरेव यात्रा प्रशस्ता ॥ ९ ॥**

तिथिनक्षत्रशुद्धिं भुजंगप्रयातेनाह-सिताद्या तिथिः शुक्लपक्षप्रतिपत्, अर्थात्कृष्णपक्षप्रतिपदुत्तमा । अमा अमावास्या, अन्यास्तिथयो नामतः प्रसिद्धा ज्ञेयाः । आसु तिथिषु यात्रा प्रशस्तेति वाक्यार्थः । पदार्थस्त्वयम् । षष्ठी न यात्रायां प्रशस्तेत्यर्थः । एवं सर्वत्र । बहुसकारकरणं कवित्वे पदानां पुनरुक्त्या गौरवलाघवविचारो नास्तीति द्योतयितुम् । न खरो न च भूयः स्यान्मृदुरितिवत् । यदाह नारदः-"षष्ठ्यष्टमद्विादशिकारिक्तामावर्जितासु च । यात्रा शुक्लप्रतिपदि निधाय भवेदिति ॥" अर्थात्षष्ठ्यादिनिषिद्धतिथिव्यतिरिक्तास्तिथयो यात्रायां प्रशस्ता इत्यर्थः ॥

## पृथक् तिथिफलानि यात्रायाम्-

अत्र प्रत्येकं तिथिफलान्याह वसिष्ठः-"वलक्षपक्षे प्रतिपत्प्रयाणे भंगप्रदा वा निधनप्रदा वा । यशस्करी भूरिधनप्रदा च या पंचमी मृत्युकरी च षष्ठी ॥ सप्तमी विजयदा ह्यथाष्टमी शोकदुःखभयदामयप्रदा । सर्वदुःखशमनी यशस्करी लाभदा च दशमी निरन्तरम् ॥ पशुप्रदा मानकरी सुगन्धरक्तांबरानेकशुभप्रदा स्यात् । एकादशी चित्रमृगप्रभूता धान्याकरा

